# प्राक्-रामानुजीयम्

## (A STUDY OF PRE-RAMANUJA LITERATURE)

डा. तट्टा विजयराघवाचार्यः

रामानुजा पब्लिकेषन्स्, तिरुपतिः

2002

A STUDY OF PRE-RAMANUJA LITERATURE
by
*Dr. T.V. Raghavacharyulu*

First Edition - 2002

Copies : 1000



Price : Rs. 200/-



This book is published with the financial assistance of Tirumala Tirupati Devasthanams under their Scheme
**"AID TO PUBLISH RELIGIOUS BOOKS"**

Copies can be had from :
*Smt. T. Rajyalakshmi*
Do.No. 2-23, Satya Sai Nagar,
Tirupati - 517 507
☎ : 39501

Printed at
**Annapurna Graphics**
53/4, R.S. Gardens
Tirupati - 517 507
✆ : 2235006

प्रो० डि. प्रह्लादाचार्यः
*कुलपतिः*




राष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
तिरुपतिः - 517 507

दिनाङ्कः 7-11-2002

## आमुखम्

प्रमोमुदीति मे मनो यद् डा. तट्टा विजयराघवाचार्येण तिरुपतिस्थ-राष्ट्रियसंस्कृतविद्यापीठे प्रवाचकपदं भूषयता विश्वविद्यालयानुदानायोगस्य लघुशोधपरियोजना (Minor Research Project) कार्यक्रमे भागं स्वीकृत्य विरचितः 'प्राग्रामानुजीयम्' इति सार्थकनाम्ना विभूषितः लघुशोधप्रबन्धः अधुना तिरुमल-तिरुपतिदेवस्थानप्रदत्तेन वित्तसाहाय्येन प्राकाश्यं नीयत इति।

सम्प्रतिपन्नमिदं समेषां दर्शनवाङ्मयाध्ययनबद्धादराणां प्राज्ञानां यद् देशेऽस्मिन् सर्वाण्यपि दर्शनानि अनादिकालतः प्रवृत्तान्यपि कालविशेषे नैकप्रौढप्रबन्धानां प्रबन्धनेन, अनितरसाधारणेन स्वीयेन वादकौशलेन, व्याख्यानचातुर्येण च विजितवादिनां समुपार्जितशिष्यसम्पदाञ्च तत्तद्दार्शनिकसिद्धान्तप्रतिष्ठापकानां, महानुभावानामाचार्यप्रवराणां सुगृहीतनामधेयेन प्रथन्ते यथा-काणादं, गौतमीयं, जैमिनीयं, बौद्धं, शाङ्करमित्यादिना । सुविदितं चेदं यत् तत्तदाचार्यावतारानन्तरकालिकं तत्तद्दर्शनेतिहासं किञ्चिदिव जानाना अपि वयं तत्पूर्वतनकालिके तत्तद्दर्शनेतिवृत्ते नितरामज्ञा एवेति। सन्त्यत्र नानानिदानानि- कालस्य विप्रकर्षः, राजकीयसङ्क्षोभेण अमूल्यानामाकराणां विनाशः, प्राचीनानां जनानां समसामयिकवृत्तानां

यथावदुल्लखेऽनादरः इत्यादीनि। अत एवास्ति कश्चिद् विशेषः प्रकृतस्य प्राग्-रामानुजीयाभिधस्य प्रबन्धस्य।

चतुर्णामपि वेदानाम्, इतिहासपुराणानां, किं बहुना विशिष्टाद्वैतदर्शनस्य सर्वोऽपि सारः द्रमिडवेदाभिधया सुप्रथितेषु दिव्यप्रबन्धेषु बहुप्राचीने काले महानुभावैः भगवद्भक्तशिरोमणिभिः लोकानुकम्पार्द्रचित्तैः द्वादशभिः दिव्यसूरिभिः अतिगहनशास्त्रवारिध्यवगाहनासमर्थानामप्युपकाराय सङ्गृहीत इति शृणुमः। प्रबन्धे चास्मिन् तेषां द्वादशदिव्यसूरिणां सङ्क्षिप्तचरितं तद्रचितदिव्यप्रबन्धसारश्च संवर्णितः जिज्ञासूनुपकरोति। तथैव रामानुजपूर्ववर्त्तिनां शास्त्रपारावारपारीणानां सिद्धित्रयादिग्रन्थनिर्मातॄणां यामुनाचार्यप्रभृतीनां सुवृत्तं तद्ग्रन्थसारश्च सङ्गृहीतः विशिष्टाद्वैतवेदान्तदर्शनपरम्पराया नैरन्तर्यं प्रकटयति।

प्रबन्धारं श्री तट्टा विजयराघवाचार्य पौनःपुन्येनाभिनन्दन् आशासे यदेषः प्रबन्धेऽस्मिऽन् सङ्ग्रहेण व्यावर्णितेषु विषयेषु एकैकमप्यधिकृत्य विस्तरेण पृथग् पृथग् प्रबन्धान् प्रणयन् श्रीमद्रामानुजदर्शनेतिहासपरिचयकुतूहलिनो जिज्ञासून् अधमर्णान् करिष्यतीति।

बि. कृष्णाचार्यः

**Sriman. P.R. Rangarajan**
Head of the Department of Vyakarana
S.V. Oriental College
Tirupati

# आमुखम्

महदिदं भागधेयं भगवत्संकल्पेन भागवतोत्तमद्वारा मम समागतं प्राक्-रामानुजीयमिति ग्रन्थस्यास्य आमुखलेखन व्याजेन।

'वेदेषु विष्णुः' इति व्यासः अस्मिन् ग्रन्थे आदिमः विराजते विपश्चिदपश्चिमानां विदुषां मनोरञ्जनाय। तदनु 'इतिहासपुराणेषु विष्णुः' इति शीर्षकमादाय ये अंशाः अत्र प्रदर्शिताःते सर्वेऽपि समीचीने स्थले सम्यङ्निरूपिताः। 'विष्णोः सकाशादुद्भूतम्' इति विष्णुपुराणवाक्यं प्रदर्शयति प्राथमिकत्वेन। एवं रीत्या एकोन विंशति प्रमाणानि ग्रन्थकर्त्रा अत्र प्रदर्शितानि।

ततः पश्चात् 'विष्णोः परत्वं' एवं 'विशिष्टाद्वैतम्' इति व्यासद्वयं दरीदृश्यते। तत्रापि ग्रन्थकारस्य निरूपण शैलीं वीक्ष्य भगवच्छेषत्व स्वरसरासीकाःविद्वांसः नूनं सन्तोषं प्रकटीकुर्युः। तदनन्तरं आल्वार् पदवाच्यानां दिव्यसूरीणां चरित्रं वर्णयति ग्रन्थकारः। सरोमुनिः भूतयोगी- महायोगी एते त्रयः आल्वार् गोष्ठ्यां प्राथमिकं स्थानमलङ्कुर्वन्ति। एते जन्मप्रभृति शुचयः। वेदचक्षुषा अपरेण ध्यानचक्षुषा च कवीन्द्रा इमे भगवत्साक्षात्कारं लब्धवन्तः। एते विलक्षण दीपसाहाय्येन भगवन्तं अपश्यन्। लोके निशि वस्तूनां दर्शनं चन्द्रसाहाय्येनैव भवति। अत्र तु विना चन्द्रसाहाय्यं वैलक्षण्य दीपसाहाय्येनैव परमात्मानं अरोविषत। श्रीवैष्णवाचार्येषु अन्यतमाः श्रीवेदान्तदेशिकाः स्वकीये 'देहळीस्तुतिः' इति स्तोत्रग्रन्थे एवं वर्णयति अमुमंशम्-

***दीपेन केनचिदशीतरूपा निशीथे स्नेहोपपन्न परिशुद्धगुणार्पितेन।***
***ददृनकाश निबिडं ददृशुर्भवन्तं स्वाध्याय योगनयनाः शुचयः कवीन्द्राः॥***

सरोमुनिः - भूतयोगी- महायोगी च यद्यपि शरीरेण भिन्नाः परन्तु एकमेव अर्थविशेषं

ऐककण्ठ्येन बोधितवन्तः। ''पाणिनि-कात्यायन- पतञ्जलिवत् कर्तृभेदः वर्तते किन्तु अर्थशरीरं तावत् एकमेव। त्रिमुनि व्याकरणमितिवत्'' इति श्रीवैष्णवाचार्याणां व्याख्यानचक्रवर्तिनां कृष्णसूरिमहोदयानां व्याख्यात्र स्मृतिपथं समायाति। 'सरोभूत वेताळसार स्वतानामविच्छिन्न सत्संम्प्रदायार्थदर्शी'' इति वेदान्तदेशिकमधिकृत्य सप्ततिरत्नमालिकायां प्रतिवादिभयङ्करम् अण्णन् स्वामिनः वर्णयन्ति। वेदान्तदेशिकः सरोभूतमहामुनीन् 'आदिभक्ताः' इति स्वग्रन्थे एकत्र निरूपयति। सरोमुनिः सर्वेश्वरः उभयविभूतिनिर्वाहकः इति स्वप्रबन्धे वर्णयति। भूतयोगी स सर्वेश्वरः नारायण इत्याह। महायोगी स च नारायणः लक्ष्म्या समेतः नारायणः इति निरूपयामास। एतेषां 'पाशुर' पारायणकरणेनास्माकं भगवतः श्रीमन्नारायणस्य 'सौशील्यं' (महतः मन्दैस्सह नैरन्ध्रेण संश्लेषः गुणः) सुसम्यक् अवगम्यते। आल्वार् चरित्र निरूपणानन्तरं श्रीवैष्णवाचार्याणां चरित्रं वर्णयति ग्रन्थकारः। 'नाथोपज्ञं प्रवृत्तं' इत्युक्तदिशा श्रीवैष्णवसम्प्रदायस्य उज्जीवनं येन महाशयेन कृतं तस्य नाथमुनेः चरित्रं अत्र ग्रन्थे आदौ विराजते . 'एकस्मिन्नंशे अपेक्षा अन्यस्मिन्नंशे उपेक्षा' इति दिव्यप्रबन्धव्याख्याने एकत्र दृश्यते। अर्थात् एकास्मिन्नंशे अपेक्षा परमपदप्राप्तौ अपेक्षा अन्यस्मिन्नंशे उपेक्षा - संसारे अरुचिप्रदर्शनं श्रीवैष्णवाः कुर्वन्तीति। तादृशेषु श्री वैष्णवेषु अग्रगण्याः प्रातः स्मरणीयाः आचार्य सार्वभौमाः ये भगवद्रामानुजाचार्येभ्य पूर्वं आसन् तेषां चरित्रवर्णनं सुमधुरशैलीमाश्रित्य ग्रन्थकारः करोति। श्रीवैष्णवमाश्रित्य जिज्ञासा येषां वर्तते तेषां मनः ग्रन्थस्यास्यावलोकनेन आनन्देन पूरितं स्यादित्यत्र न कोऽपि संशयलेशः।

पद्मावतीजानिः श्रीशैलशिखर वासी तट्टा विजयराघवाचार्येभ्यः कृते समस्त सन्मङ्गलं प्रयच्छतु। एवं रीत्या बहून् ग्रन्थान् प्रकाशयितुं भगवान् श्रीनिवासः आयुरारोग्यं दद्यात्।

**तापत्रयेण परिदूनहृदो निजांघ्रि पद्मप्रणाम निरतस्य जनस्य नित्यम्।**
**श्रीवेङ्कटाद्रिशिखरोदितपरिजातः श्रेयस्ततिं नितनुतां सरसीरुहाक्षः॥**

इति निवेदयिता
भावकः बुधजन विधेयः
पादूर्- पुराणं - रङ्गराजाचार्यः

# कृतज्ञतानिवेदनम्

प्राक् -रामानुजीयम् इत्यस्मिन् विषये शोधकार्यं कर्तुम् अनुमतिं दत्तवद्भ्यः विश्वविद्यालयानुदानयोगस्य अधिकारिभ्यः, तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतिचरेभ्यः श्रीमद्भ्यः आचार्य श्रीमद्भागवतं रघुनाथाचार्यमहोदयेभ्यः कुलसचिवचरेभ्यः आचार्य K.V. रामकृष्णमाचार्यमहोदयेभ्यः, तथा S.S. रामचन्द्रमूर्तिमहोदयेभ्यः, अद्यतनकुलपतिभ्यः आचार्य D. प्रह्लादाचार् महोदयेभ्यः, कुलसचिवेभ्यः सि. हेच्. साम्बय्यमहाभागेभ्यः, वित्ताधिकारिभ्यः श्री S. आनन्द् महाभागेभ्यश्च हार्दिकानि कृतज्ञता पूर्वकवन्दनानि समर्पयामि ।

अस्मिन् शोधकर्मणि सत्यार्थान् स्पष्टं ज्ञापयित्वा सहकृतवद्भ्यः आचार्य M. नरसिंहाचार्यमहोदयेभ्यः, श्रीमद्भ्यः P. रङ्गराजन्महोदयेभ्यश्च हार्दिकधन्यवादान् समर्पयामि ।

ग्रन्थस्यास्य प्रकाशनाय द्रव्यसाहाय्यं कृतवद्भ्यः तिरुमलतिरुपति-देवस्थानाधिकारिभ्यः हार्दिकधन्यवादान् समर्पयामि ।

शोधप्रबन्धस्यास्य सज्जीकरणे समयोचितसाहाय्येनोपकृतवद्भ्यः सर्वेभ्यः धन्वादान् समर्पयामि ।

ग्रन्थस्यास्य मुद्रणाकार्यं सश्रद्धं निरूढवद्भ्यः अन्नपूर्णाग्राफिक्स् निर्वाहकेभ्यः कृतज्ञतापूर्वकधन्यवादान् समर्पयामि !

इत्थम्

भागवतविधेयः

तट्टा विजयराघवाचार्यः

# विषयानुक्रमः

# प्राक्-रामानुजीयम्

**उपक्रमः**

प्रपञ्चे विविधखण्डेषु सुविख्याते आर्षीयखण्डे भारतदेशे संस्कृतेः मूलभूतः वाक्सन्दर्भः वेदः। "वेदोऽखिलो धर्ममूलम्" इति प्रमाणेन सर्वधर्माणामपि मूलभूतः वेद एव। प्रमाणेषु सर्वेषु वेदप्रमाणमेव प्राथम्यं वहति। अक्षरराशयो वेदाः ऋग्यजुस्सामाथर्वभेदभिन्नाः अनन्तशाखाः वर्तन्ते। ते च विध्यर्थवादमन्त्ररूपाः वेदाः परब्रह्मभूतं नारायणस्वरूपं, तदाराधनप्रकारं, आराधितात् फलविशेषं च बोधयन्ति। परमपुरुषवत् तत्स्वरूप-तदाराधन-तत्फलज्ञापकं वेदाख्यं शब्दजातं नित्यम्।

"अनन्ता वै वेदाः" इति वेदानामनन्तत्वात्, दुरवगाहत्वाच्च, परमपुरुषनियुक्ताः परमर्षयः कल्पे कल्पे निखिलजगदुपकारार्थं वेदार्थं स्मृत्वा, विध्यर्थवादमन्त्रमूलानि धर्मशास्त्राणि इतिहासपुराणानि चक्रुः। लौकिकाश्च शब्दाः वेदराशेः उद्धृत्यैव तत्तदर्थविशेषनामतया पूर्ववत् प्रयुक्ताः पारंपर्येण प्रयुज्यन्ते।

"वेदैश्च सर्वैरहमेव वेद्यः" (भ.गी. 15-15) इति भगवत्सूक्त्यनुसारेण वेदवेद्यः परमात्मेति, "सर्वे वेदा यत्पदमामनन्ति" (कठो. 2-15) इत्यत्र परमात्मानमेव प्रतिपादयन्तीति, सर्वस्य प्रशासितृत्वेन, सर्वस्यान्तरात्मतया प्रविश्य अवस्थितत्वात् अग्न्यादयः सर्वेऽपि शब्दाः परमात्मनः वाचकाः एव।

*ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान्।*
*सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते॥* (दक्षस्मृतिः)

इति पितृ-देव-ब्राह्मण-हुताशनादिशब्दाः तन्मुखेन तदन्तरात्मभूतस्य विष्णोरेव वाचकाः।

**वेदेषु विष्णुः**

Vaishnavism as the name implies, means the particular Theistic religion of which Vishnu is the obiect of worship and

devotion as the supreme God. The germs of Vishnu's later greatness and of sectarian Vaishnavism is traceable even in the Rigveda.[1]

इति सर्कार्पण्डितेनोक्तरीत्या विष्णुं परदैवमिति भक्त्या सगुणदैवाराधनं, विष्णोः प्रामुख्यं वैष्णवशाखायाः बीजानि ऋग्वेदे एव दृश्यन्ते । "विष्णोः पदे परमे मध्व उत्सः" (ऋग्वेदः 1-154-5) "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विमये रजांसि" (ऋग्वेदः 1-154-1) इति ।

राधाकृष्णन् महाशयेन एवमुक्तम् -

From the Begining Vishnu was marked out for a great desting. In the Vedas he is the God of three strides. He dwells inscrutable in the bright realm of light where can the birds dare not fly.[2] इति ।

शतपथब्राह्मणे विष्णुः यज्ञरूपेण वर्णितः । तमुद्दिश्य श्रीनिवास अय्यंगार् महोदयैः एवमुक्तम् -

The fortunes of Vishnu among the gods of India have been the most varied. In the earliest Vedic age, he was the highest, being placed in the sky and the last, in the series of Gods to whom a portion of the sacrificial food was to be offered.[3] इति ।

"नारायणाय विद्महे, वासदेवाय धीमहि, तन्नो विष्णुः प्रचोदयात्" (तैत्तिरीयारण्यकम्,10) इति मन्त्रराजे नारायण-वासुदेव-विष्णुशब्दानामेकत्वप्रतिपादनं विदितचरमेव । "अथ नित्यो नारायणः, ब्रह्मा नारायणः, शिवश्च नारायणः, शक्रश्च नारायणः, कालश्च नारायणः, दिशश्च नारायणः नारायण एवेदं सर्वं यत् भूतं यच्च भव्यं" "निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणः, न द्वितीयोऽस्ति कश्चित्" "विष्णुरेव भवति स विष्णुरेव भवति" (नारायणोपनिषत्) इत्येवं प्रकारेण बहुत्र परत्वमुक्तम् ।

1. अग्निर्वै देवानामवमः विष्णुः परमः (ऋग्वेदः, ऐतरेयब्राह्मणम्)

---

1. Prof. D.C. Sarcar : History and Culture of the Indian People, P. 481
2. Dr. S. Radha Krishnan : Indian Philosophy vol. 1, p 492
3. Sri V.T. Srinivasa Iyangar, Hindu Philosophy-- p, 190

2. तदस्य प्रिय . . . (ऋग्वेदः 1-15-4)
3. न ते विष्णुः . . . (ऋग्वेदः 7-99)
4. विष्णुर्गोपाऽदाभ्यः . . . (ऋग्वेदः 5-122-7)
5. यो देवेभ्यः आतपति . . . (ऋग्वेदः 31-17)
6. अग्निरवमो देवतानां विष्णुः परमः (यजुर्वेदः, पञ्चमखण्डः)
7. विष्णोः कर्माणि पश्यत . . . (यजुर्वेदः 3-4)
8. अस्येशाना जगतो विष्णुपत्नी (यजुर्वेदः चतुर्थकाण्डम्)
9. इदं विष्णुर्विचक्रमे . . . (यजुर्वेदः 3-15)
10. तद्विष्णोः परमं पदम् . . . (यजुर्वेदः 6-5)
11. पुरुष एवेदं सर्वम् . . . (यजुर्वेदः 31-2)
12. या ते धामान् . . . (शुक्लयजुर्वेदः 6-3)
13. तद्विप्रासो विपन्यवो . . . (यजुर्वेदः 34-44)
14. या विष्णुः . . . (अथर्ववेदः 8-17-41)
15. दिवो वा विष्णुः . . . (अथर्ववेदः 8-17-4)
16. नारायणाय विद्महे . . . (तैत्तिरीयारण्यकम्)
17. एको ह वै नारायण आसीत् . . . (महोपनिषत्)
18. अथ पुनरेव नारायणः . . . (यजुर्वेदोपनिषत्सारः)
19. ओं नमो नारायणाय . . . (सामवेदोपनिषत्सारः)
20. पुरुषो ह वै नारायणोऽकामयत . . . (नारायणोपनिषत्)
21. नित्यो नारायणः . . . (महोपनिषत्)
22. विश्वं नारायणं . . . (नारायणानुवाकम्)
23. अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः (तै. उ. ना. 11)
24. एष सर्वभूतान्तरात्मा . . . (सुबालोपनिषत् -7)

एवं प्रकारेण बहुत्र बहुवारं विष्णोः परत्वमुक्तम्।

**इतिहास-पुराणेषु विष्णुः**

1. विष्णोस्सकाशादुद्भूतं . . . (वि. पु. 1-1-31)
2. विष्णवे सर्वजिष्णवे . . . (वि. पु. 1-2-1)

3. विष्णवे मुक्तिहेतवे . . . (वि. पु. 1-2-3)
4. मूलभूतो नमस्तस्मै . . . (वि. पु. 1-2-4) to (वि.पु. 1-2-18)
5. इत्येष सन्निवेशो . . . (वि.पु. 2-12-35) to (वि.पु.2-12-47)
6. अहं त्वं च . . . (वि. पु. 2-13-69) to (वि.पु. 2-13-104)
(वि.पु.6-5-58 to 6-5-87)
(वि.पु. 6-7-19 to 6-7-96)
7. नारायणश्च (ब्रह्मवैवर्तपुराणम् 45-13-95)
8. नारायणपरा यज्ञाः (ब्रह्मपुराणम् 60-62)
9. नारायणपरो यज्ञः (मत्स्यपुराणम् 246-36)
10. यज्ञो हि भगवान् विष्णुः . . . (विष्णुधर्मोत्तरपुराणम् 162-2)
11. यज्ञरूपो हि विष्णुः . . . (देवी भागवतम् 9-43-12)
12. सर्वदेवमयो विष्णुः . . . (पद्मपुराणम् 64-34)
13. नास्ति विष्णुसमो देवः . . . (पद्मपुराणम् 37-79)
14. नास्ति तीर्थमयो विष्णुः . . . (पद्मपुराणम् 86-323)
15. सर्वपापहरो विष्णुः . . . (पद्मपुराणम् 126-69)
16. ईश्वरो भगवान् विष्णुः . . . (पद्मपुराणम् 226-67)
17. विष्णुरेव परंब्रह्म . . . (पद्मपुराणम् 68-93)
18. यज्ञरूपी विष्णुरहस्यम् . . . (देवीभागवतम् 9-45-67)
19. एतस्मिन्नन्तरे विष्णु . . . (देवीभागवतम् 1-15-76)

एवं प्रकारेण विष्णुपरत्वबोधकानि वाक्यानि बहूनि सन्ति ।

**विष्णोः परत्वम्, सविशेषत्वं च**

*वेदवित्प्रवरप्रोक्तवाक्यन्यायोपबृंहिताः ।*
*वेदास्साङ्गा हरिं प्राहुः जगज्जन्मादिकारणम् ॥*

इति सर्वस्य जगतः सृष्टिस्थितिलयकर्ता श्रीमन्नारायण एवेति स्पष्टं भवति ।

नारायणानुवाके "सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्" इत्यारभ्य "स

ब्रह्मा स शिवस्सेन्द्रः सोऽक्षरः परमः स्वराट्'' इति सर्वशाखासु परतत्त्वप्रतिपादनपरान् अक्षर, शिव, शंभु, परंज्योति, परतत्त्व, परायण, परमात्मादिसर्वशब्दान्, तत्तद्गुणयोगेन नारायणे एव प्रयुज्य तद्व्यतिरिक्तस्य समस्तस्य तदायत्ततां, तद्व्याप्यतां, तदाधारतां, तन्नियाम्यतां, तच्छेषतां च प्रतिपाद्य, ब्रह्मशिवयोरपि इन्द्रादिसमानाकरतया तद्विभूतित्वं च प्रतिपादितम्।

''सहस्रशीर्षं देव''मित्यादि एकादशानुवाकभाष्ये सायणाचार्याः श्रीमन्नारायण एव परमात्मेति, हृदयपुण्डरीके तस्य स्वरूपमेव उपास्यगुणविशेषपुरस्सरेण निर्दिश्यते इत्यवदन्। तत्र वाक्यानि इमानि - ''पुराणेषु नारायणशब्देन व्यवह्रियमाणः यः परमेश्वरः स एव परमुत्कृष्टं सत्यज्ञानानन्दादिवाक्यैः प्रतिपाद्यस्य ब्रह्मणः तत्त्वम्। अतः नारायणः पर एवात्मा, न त्वपरो मूर्तिविशेषः। तथा परो ज्योतिः यदेतदुत्कृष्टं ज्योतिः छान्दोगैः परंज्योतिरुपसंपद्य इत्याम्नातं तदपि नारायण एव। तस्मात् नारायणः परमात्मा।''[1] इति।

*नारायणपरा वेदाः देवा नारायणाङ्गजाः।*
*नारायणपरा लोकाः नारायणपरा मखाः॥*

*नारायणपरा योगाः नारायणपरं तपः।*
*नारायणपरं ज्ञानं नारायणपरा गतिः॥*

इत्यादीनि प्रमाणानि बहूनि सन्ति।

महाभारते मोक्षधर्मे युधिष्ठिरेण एवं पृष्टम् -

***केन सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम्।***
***प्रलये च कमभ्येति तन्मे ब्रूहि पितामह॥*** इति॥ (181-1)

तस्य प्रश्नस्य भीष्मस्योत्तरमिदम् --

***नारायणो जगन्मूर्तिः अनन्तात्मा सनातनः।*** (म. भा. मो. 8-12)

***ऋषयः पितरो देवा महाभूतानि धातवः।*** (म. भा. अ. 229)
***जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम्॥*** इति।

---

1. नारायणानुवाकं सायणाचार्य भाष्यम्।

विष्णुपुराणे -

*प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।*
*पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥* (6-4-39)

*परमात्मा च सर्वेषामाधारः परमेश्वरः ।*
*विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥* इति। (वि.पु. 6-4-40)

सर्ववेदवेदान्तेषु सर्वैः शब्दैः परमकारणतया अयमेव गीयते । यथा सर्वासु श्रुतिषु केवलपरमात्मस्वरूपविशेषप्रतिपादनायैव प्रवृत्तः नारायणानुवाकः । तथा इदं च वैष्णवं पुराणम् -

*सोऽहमिच्छामि धर्मज्ञ श्रोतुं तत्त्वो यथा जगत् ।*
*बभूव भूयश्च यथा महाभाग भविष्यति ॥* (वि. पु. 1-1-4)

*यन्मयं च जगत् ब्रह्मन् यतश्चैतच्चराचरम् ।*
*लीनमासीद्यथा यत्र लयमेष्यति यत्र च ॥* इति।(वि. पु. 1-1-5)

परंब्रह्म किमिति प्रक्रम्य -

*विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।*
*स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः ॥* (वि. पु. 1-1-31)

*परः पराणां परमः परमात्मात्मसंस्थितः ।*
*रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥* (वि. पु. 1-2-10)

*अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः ।*
*वर्जितः शक्यते वक्तुं यः सदास्मीति केवलम् ॥* (वि.पु. 1-2-11)

*सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।*
*ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥* (वि. पु. 1-2-12)

*तद्ब्रह्म परमं नित्यम् अजमक्षयमव्ययम् ।*
*एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥* (वि.पु. 1-2-13)

*तदेव सर्वमेवैतत् व्यक्ताव्यक्तस्वरूपवत् ।*
*तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥* (वि. पु. 1-2-14)

*स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः ।*
*अतीतसर्वावरणोऽखिलात्मा तेनाऽस्तृतं यद्भुवनान्तराले ॥* (वि.पु. 6-5-83)

*समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धतभूतवर्गः ।*
*इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥* (वि. पु. 6-5-84)

*तेजोबलैश्वर्यमहावबोधः स्ववीर्यशक्त्यादिगुणैकराशिः ।*
*परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे ॥* (वि. पु. 6-5-85)

*स ईश्वरो व्यष्टिसमष्टिरूपः व्यक्तस्वरूपोऽप्रकटस्वरूपः ।*
*सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥* (वि. पु. 6-5-86)

*संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।*
*संदृश्यते वाप्यधिगम्यते वा तद्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥* (वि.पु.6-5-87)

*स्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च ।*
*उपसंह्रियते चान्ते संहर्ता च स्वयं प्रभुः ॥* (वि. पु. 1-2-67)

इति परमात्मस्वरूपनिर्णयायैव प्रवृत्तम् । अत्र सर्वस्य विष्णुतादात्म्यमुपदिश्यते ।

*पृथिव्यापस्तेजो वायुराकाश एव च ।*
*सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् ॥*

*स एव सर्वभूतात्मा विश्वरूपी यतोऽव्ययः ।*
*सर्गादिकं ततोऽस्यैव भूतस्थमुपकारकम् ॥*
*स एव सृज्यस्स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च ।*
*ब्रह्माद्यवस्थाभिरशेषमूर्तिः विष्णुर्वरिष्ठो वरदो वरेण्यः ॥* इति ।

एवं भूतस्य सर्वेश्वरस्य विष्णोः प्रपञ्चान्तर्भूतनियाम्यकोटि-निविष्टब्रह्मादिदेवतिर्यङ्मनुष्येषु तत्तत्समाश्रयणीयत्वाय स्वेच्छावतारः उक्तः ।

एवं प्रकारेण वेदवेदान्तेतिहासपुराणधर्मशास्त्रोपबृंहितसाङ्गवेदवेद्यः परब्रह्मभूतः नारायणः निखिलहेयप्रत्यनीकः सकलेतरविलक्षणः, अपरिच्छिन्नज्ञानानन्दैकस्वरूपः स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरः, स्वसङ्कल्पानु-विधायिस्वरूपस्थितिप्रवृत्तिभेदचिदचिद्वस्तुजातः, अपरिच्छेद्यस्वरूप-स्वभावानन्तमहाविभूतिः नानाविधानन्तचेतनात्मकप्रपञ्चलीलोपकरणः इति प्रतिपादितः ।

## वैष्णवम् - विशिष्टाद्वैतम्

वेदविदग्रे सरसाक्षात्कारक्षमभगवद्द्वैपायनपराशरवाल्मीकिमनुयाज्ञवाल्क्यप्रभृतिमुनिगणप्रणीतविध्यर्थवादमन्त्ररूपवेदमूलेतिहासपुराणधर्मशास्त्रोपबृंहितपरमार्थभूतानादिनिधनाविच्छिन्नसंप्रदायऋग्यजुस्सामाधर्वरुपानन्तशाखं वेदमभ्युपगच्छतां वैष्णवानां मतं विशिष्टाद्वैतम् ।

सुवर्णसुधाकरादिशब्दानामिव स्वार्थे महत्त्वं, सर्वव्यापकत्वाकारं, सर्वेश्वरं प्रबोधयति विष्णुपदम्। ''विशतीति विष्णुः'', ''वेवेष्टीति विष्णु'', ''व्याप्नोतीति विष्णुः'

*यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः ।*
*तस्मात्स प्रोच्यते विष्णुः विशेर्धातोः प्रवेशनात् ।।* इति ।

*व्याप्य सर्वानिमान् लोकान् स्थितः सर्वत्र केशवः ।*
*ततश्च विष्णुनामासि विशेर्धातोः प्रवेशनात् ।।* इति च ।

'तस्येदम्' (4-3-120) इति पाणिनीयसूत्रमनुसृत्य विष्णोरिदं वैष्णवम् इति प्रसिद्धम्। सर्वेषु प्रमाणेषु अग्रगण्यं वैदिकं विष्णुशब्दं, तदर्थं विष्णुदैवं पुरस्कृत्य व्याप्तं वैष्णवमतम् । सर्वदेशसर्वकालसर्वावस्थासु सर्वव्यापकत्वेन श्रीमहाविष्णुः एव चिदचिद्विशिष्टाद्वैततत्त्वमिति, भक्तिप्रपत्तिभ्यां प्रसन्नः श्रीमहाविष्णुः एव उपायः इति, उपेय इति च सिद्धान्तितं विशिष्टाद्वैतप्रबोधकं श्रीवैष्णवमतम् अनादिनिधनम् । नारायणीयमतमिति विशिष्टाद्वैतमतमिति च प्रसिद्धम् ।

ऋषिकुलगरिष्ठः वसिष्ठः परदेवतापारमार्थ्यवेदी पराशरः, अष्टादश पुराणप्रणेता, भगवद्गीताविष्णुसहस्रनामसङ्कीर्तनाचार्यः वेदव्यासः, योगिकुलचक्रवर्ति शुकमहर्षिः भगवन्नामामृतरसपानव्यसनः वाल्मीकिः, मुनिकुलमूर्धन्यः भृगुमहर्षिश्च सर्वाणि तत्त्वानि सविमर्शेन समालोक्य, वैष्णवमतमेव प्रतिपादितवन्तः । लोकत्रयसञ्चारशीलः नारदमहर्षिः विष्णुनामगानामृतेन शिशुपश्वादीनामपि हृदयवेदिकासु वैष्णवमतमुपस्थापितवान् । अतः सुरनरतिर्यक् स्थावरादीनामपि अन्तर्वहति वैष्णवमतम् । नारदभक्तिसूत्रेषु पाञ्चरात्रागमग्रन्थेष्वपि वैष्णवतत्त्वं प्रबोधितम्। अस्मिन् सन्दर्भे आचार्यबलदेवोपाध्यायमहोदयानां वचनानि स्मर्यन्ते-

The Pancaratra school of vaishnavism has, for many long centuries exerted a tremendous influence upon the religious,

social, and cultural life of India. In fact its influence has been so pervading and endurig that there hardly exists an aspect of Indian life wich does not present an indisputable illustration of its impact upon its development[1] इति ।

वैष्णवसिद्धान्तस्य भगवद्गीता अपि मुख्यप्रमाणभूता एव । अत्र डा. राधाकुमुद्मुखर्जीवचनानि स्मर्यन्ते -

Of all the philosophical tracts in the Mahabharata the Bhagavat Gita is Undoubtedly of the highest merit. It contains the earliest exposition of the philosophy of the Bhagavata cult, which later developed in to vaishnavism[2] इति ।

भागवतमहाग्रन्थेऽपि वैष्णवतत्त्वं बोधितम् । वैष्णवानां प्रियम् अमलं श्रीमद्भागवतपुराणमिति तत्रैव उक्तं खलु -

*निम्नगानां यथा गङ्गा देवानामच्युतो यथा ।*
*वैष्णवानां यथा विष्णु पुराणानामिदं तथा ।।*
*श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियम् ।* इति ।
(भागवतम् - 12-13-16,17)

भागवते मोक्षोपायाः नवविधभक्तयः सूचिताः -

*श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।*
*अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।*

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।

- (भागवतम् 7-5-23,24) इति ।

एवं प्रकारेण वैष्णवमतं विविधरूपैः हैन्दवानां हृदयेषु विराजते ।

*अर्चत प्रार्चत प्रियमेधासो अर्चत*
*अर्चन्तु पुत्रका उत पुरं न धृष्णवर्चत ।*

---

1. Prof. Baladeva Upadhyaya : Prabuddha Bharata, page 289
2. Dr. Radha Kumud Mukharjee : History and culture of the Indian people P. 249

***अवस्वराति गर्गरो गोधा परिसन्विष्वणत्***
***पिङ्गा परि च निष्कदद् इन्द्राय ब्रह्मोदत्यम् ॥*** (ऋग्वेदे 8-69-89)

इति अलौकिकानन्दविभूषितानां ऋषीणां कण्ठानि हृदयसम्मेलनमाधुर्येण अभौतिकं सुखस्वरूपं परमात्मानं अकीर्तयन् आदौ वेदकाले एव। तथैव निर्हेतुकया भगवतः कृपया सन्तीर्णतन्मयाः, साक्षात्कृतयथावस्थिततत्त्व-हितपुरुषार्थज्ञानिनः, भगवत्पारतन्त्र्यकाष्ठनिष्ठाः नित्यानन्दानुभवयोग्यानपि संसारेषु नितरां क्लिश्यमानांश्चेतनानुद्वीक्ष्य निर्विण्णाः परोपदेशमुखेन तान् सुपथा प्रवर्त्य, भगवद्भक्तास्त्यक्ताभिमानान् व्यधुः। अनेकेषु भगवतोऽवतारेषु यथा दशानां प्राधान्यं तथैवाचार्यावताररूपेषु दिव्यसूरयः प्रधानतमाः। देहात्माभिमानिनां चेतनवर्गाणां ऋषीणां च पर्वतपरमाण्वोरिव यथा तारतम्यं प्रसिद्धम्, तथैव ऋषीणां दिव्यसूरिणां च तादृशमेव तारतम्यं सिद्धम्। दिव्यसूरिष्वपि भट्टनाथस्य वैशिष्ट्यं निश्चितम्। यतः अयमितरसूरिवत् मोक्षमपि परमपुरुषार्थं न प्रार्थयामास। किन्तु भगवन् कलिकलुषेऽस्मिन् लोके मद्विलोकनायागतस्य तव को वानर्थः समापतेदिति शङ्कितः पल्लाण्डु पल्लाण्डु इति भगवतः मङ्गलम् आशशास।

एवं भट्टनाथस्य गोदायाश्च तारतम्यं वरीवर्ति। यतो हि भगवान् सुप्तं चेतनजातमुत्थाप्य स्वमपि प्रदर्शयति। इयं तु गोदा स्वयं भगवन्तं उत्थाप्य तिरुप्पावै नामकप्रबन्धमुखेन स्वावस्थां तस्मै एव निवेदयामास। किञ्च भगवद्भक्तिकार्यभूतेषु नायिकादिभावेषु दिव्यसूरिणां नायिकातादात्म्याद्यनुसन्धानञ्च स्वसहजपुंस्त्वेन सह विरुद्धं भासत इति न सरसतरम्। अस्यास्तु स्वतः प्रेमप्रधानसहजस्त्रीत्ववत्तया सरसतरमिति, अतश्चैतादृशाः सूरय एव सदा संसेव्याः सर्वैरपि।

**दिव्यसूरयः**

कलियुगारम्भे आल्वार्गल् इति द्वादशसङ्ख्याकाः दिव्यसूरयः विष्णुभाक्तिप्रबोधकाः भगवदर्चाविग्रहसौन्दर्यरसपानमत्ताः भगवद्गुणानुभव-स्फोरकस्तोत्राणि अनेकानि अत्यन्तमनोहरशैल्यां, द्राविडभाषायां गानं कृतवन्तः। अनुपमानानि दिव्यसूरिणां दिव्यगानान्येव दिव्यप्रबन्धनाम्ना व्यवह्रियते। विशिष्टाद्वैतसिद्धान्तपरिमलपूरितेषु दिव्यसूरिणां दिव्यप्रबन्धेषु गहनवेदान्तरहस्यानि सुलभमोक्षोपायाश्च प्रबोधिताः।

***ताम्रपर्णी नदी यत्र कृतमाला यशस्विनी।***
***कावेरी च महाभागा प्रतीची च सरस्वती ॥*** (भागवतम् 11-5-38)

*कलौ खलु भविष्यन्ति नारायणपरायणाः ।*
*क्वचित्क्वचिन्महाभागा द्रामिडेषु च भूरिशः ॥* (भागवतम् 11-5-39)

इति भागवतपुराणप्रमाणानुसारेण द्राविडदेशे विविधप्रान्तेषु, विविधवर्णेषु, विविधसमयेषु समुद्भवाः द्वादशदिव्यसूरयः आल्वार्गल् इति व्यवह्रियन्ते । आल्वार् इति शब्दस्य भगवद्भक्तिपरवशः, भगवद्गुणानुभवसागरे निमग्नः इति च अर्थद्वयं विद्यते । आचार्य. आर. एस्.देशिकन् महोदयैः Grains of Gold इत्यस्मिन् ग्रन्थे एवमुक्तम्-

The word Alwar has peculiar significance of its own. It means one who has sunk into the depths of his existence or one who is lost in Rapturous devotion to the Lord. It is word Quite descriptive of all God in toxicated man इति ।

अलौकिकानन्दोन्मादपीयूषास्वादनशीलान् तान् दिव्यसूरीन् उद्दिश्योक्ताः महतामभिप्रायाः अत्र स्मर्यन्ते -

The saints are Truely citizens of the world. They belong to the mankind[1].

An Alwar is a golden river of love and ecstasy which finds its dynamic peace in the foundless ocean of Divine love is a living Gita breathing upanishads and shastras a moving temple and hyming torrent of divine rapture[2].

Represent a very strong school of Bhakti which melts our hearts[3]. The hymns of the Alwars were art bursts of God filled souls[4].

Their utterances contain the pearls that they have gathered from the depths[5].

They are the eterenal and ever free devotees of the lord who once at His behest came down in human form to demonstrate

1. Prof. T.M.P. Mahadevan : ASeminar on saints. P.4.
2. The Editor, Aradhana p. 46 April 1958.
3. Dr. P. Nagaraja Rao. Introduction of Vedanta P. 137
4. Dr. S. Radha Krishnan. Indian Philosophy, Vol. 2. P. 666
5. Prof K. Seshadri : A seminar of saints, p. 161

both by precept and example, the nature of true devotion to the benighted and erring mortals below[1].

एतैः द्वादशदिव्यसूरिभिः स्वसाक्षात्कारानुभवः पाशुरुपेण प्रसादितः । चतुस्सहस्रगीतात्मकः नालायिरदिव्यप्रबन्ध इति, द्राविडवेद इति च व्यवह्रियते । विशिष्टाद्वैतमतविश्वासस्य बहुलव्याप्तिकाराः, सर्वमुमुक्षुकोटिहृदयेषु स्थानं सम्पादितवन्तः परमभक्ताग्रेसराः एते द्वादशदिव्यंसूरयः परमात्मनः आयुधाभरणपरिजनानामंशभूताः इति प्रसिद्धाः । तेषां नामानि -

1. पोयिगै आल्वार् (सरोयोगिः)
2. पूदत्ताल्वार् (भूतयोगिः)
3. पेयाल्वार् (महायोगिः)
4. तिरुमलिशैयाल्वार् (भक्तिसारयोगिः)
5. नम्माल्वार् (शठकोपसूरिः)
6. मधुरकवियाल्वार् (मधुरकविसूरिः)
7. कुलशेखराल्वार् (कुलशेखरसूरिः)
8. पेरियाल्वार् (विष्णुचित्तसूरिः))
9. आण्डाल् (गोदादेवी)
10. तोण्डरडिप्पोडि आल्वार् (भक्ताङ्घ्रिरेणुसूरिः)
11. तिरुप्पाणाल्वार् (श्रीपाणसूरिः)
12. तिरुमङ्गै आल्वार् (श्रीपरकालसूरिः)

इति । एतेषां द्वादाशदिव्यसूरिणां दिव्यनामानि अस्मिन् श्लोके स्मर्यन्ते -

*भूतं सरश्च महदाह्वयभट्टनाथ -*
*श्रीभक्तिसारकुलशेखरयोगिवाहान् ।*
*भक्ताङ्घ्रिरेणु परकालयतीन्द्रमिश्रान्*
*श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम् ॥* इति ॥

**दिव्यप्रबन्धः**

द्वादशदिव्यसूरिभिः भक्तिपरवशेन गानं कृतानि चतुस्सहस्रपाशुराणि नालायिरदिव्यप्रबन्धनाम्ना व्यवह्रियते । तत्र "मुदलायिरम्" नाम प्रथमसहस्रे सप्तदिव्यसूरिभिः दशग्रन्थेषु गानं कृतानि 947 पाशुराणि सन्ति । तस्य विवरणमिदम् ।

1. Swami Rama Krishnananda, The life of Ramanuja, P.10

| प्रबन्धसंख्या | प्रबन्धनाम | पाशुरसंख्या | प्रबन्धकर्तुः नाम |
|---|---|---|---|
| 1. | तिरुप्पल्लाण्डु | 12 | पेरियाल्वार् |
| 2. | पेरियाल्वार् तिरुमोलि | 461 | पेरियाळ्वार् |
| 3. | तिरुप्पावै | 30 | आण्डाल् |
| 4. | नाच्चियार् तिरुमोलि | 143 | आण्डाल् |
| 5. | पेरुमाल् तिरुमोलि | 105 | कुलशेखराल्वार् |
| 6. | तिरुच्चन्दविरुत्तम् | 120 | तिरुमलिशैयाल्वार् |
| 7. | तिरुमालै | 45 | तोण्डरडिप्पोडियाल्वार् |
| 8. | तिरुप्पल्लियोलुच्चि | 10 | तोण्डरडिप्पोडियाल्वार् |
| 9. | अमलनादिपिरान् | 10 | तिरुप्पाणाल्वार् |
| 10. | कण्णिनुण् शिरुत्ताम्बु | 11 | मधुरकवि आल्वार् |

रेण्डाम् आयिरम् नाम द्वितीयसहस्रे तिरुमङ्गै आल्वार् नाम परकालसूरिणा त्रिषु ग्रन्थेषु गानं कृतानि 1134 पाशुराणि सन्ति। तस्य विवरणमिदम्-

| प्रबन्धसंख्या | पाशुरसंख्या | प्रबन्धकर्तुः नाम |
|---|---|---|
| तिरुमोलि | 1084 | तिरुमङ्गै आल्वार् |
| तिरुक्कुरुंदाण्डगम् | 20 | तिरुमङ्कै आल्वार् |
| तिरुनेड्डुंदाण्डगम् | 30 | तिरुमङ्गै आल्वार् |

इयर्पा नाम तृतीयसहस्रे नम्माल्वार् नाम शठकोपसूरिणा तिरुवायिमोलि ग्रन्थे गानं कृतानि 1102 गीतानि सन्ति।

नान्मुगं आयिरम् नाम चतुर्थसहस्रे षड्भिः दिव्यसूरिभिः दशग्रन्थेषु गानं कृतानि 817 पाशुराणि सन्ति तस्य विवरणमिदम् -

| संख्या | प्रबन्धनाम | पाशुरसंख्या | ग्रन्थकर्तुः नाम |
|---|---|---|---|
| 1. | मुदल् तिरुवन्दादि | 100 | पोयिगै आल्वार् |
| 2. | रेण्डाम् तिरुवन्दादि | 100 | पूदत्ताल्वार् |
| 3. | मून्रां तिरुवन्दादि | 100 | पेयाल्वार् |
| 4. | नान्मुगं तिरुवन्दादि | 93 | तिरुमलिशैयाल्वार् |
| 5. | तिरुवेलिकूत्तिरुक्कै | 1 | तिरुमङ्गै आल्वार् |

| | | | |
|---|---|---|---|
| 6. | शिरियतिरुमडल् | 77.5 | तिरुमङ्गै आल्वार् |
| 7. | पेरियतिरुमडल् | 148.5 | तिरुमङ्गै आल्वार् |
| 8. | तिरुविरुत्तम् | 100 | नम्माल्वार् |
| 9. | तिरुवाशिरयम् | 7 | नम्माल्वार् |
| 10. | पेरियतिरुवन्दादि | 87 | नम्माल्वार् |

एवं प्रकारेण आहत्य 24 चतुर्विंशतिग्रन्थेषु 947+1134+1102+ 817 =4000 नालायिरम् नाम चतुस्सहस्रपाशुराणि दिव्यप्रबन्धनाम्ना व्यवह्नियन्ते ।

वेदकाले बीजरूपेण स्थित्वा, वेदान्तेषु संभाषणोपदेशोपन्यासवादेभ्यः एकेन रुपेणाङ्कुरितः स्मृतीतिहासपुराणेषु कथारुपेण पुष्पितः, वैष्णवतत्त्वार्थः, विशिष्टाद्वैततत्त्वार्थः दिव्यसूरिणां दिव्यप्रबन्धेषु फलितः इति, अनन्तराचार्यैः विख्यातः इति चारित्रकाणां पण्डितानामभिप्रायः। दिव्यसूरिणामनन्तरं लुप्तः व्याप्तः, दिव्यप्रबन्धः नाथमुनिना पुनः सम्पादितः इति, अत एव ''नाथोपज्ञं वैष्णवमिति च'' स्फष्टम्। अतः प्रथमं दिव्यसूरिणां चरितानि, तेषां ग्रन्थान् च परिशीलयामः ।

**प्रथमसूरित्रयचरितम्**

त्रिषु प्रथमसूरिषु प्रथमः सरोमुनिः नाम पोयिगै आल्वार् द्वापरयुगे 86 2901वर्षाणामनतरं केन = चतुर्मुखेन, अञ्चितः = पूजितः अत्र भगवानश्वमेधेनेति काञ्ची इति प्रसिद्धायां नगर्यां वेगासेतुपुष्करिण्यां, सिद्धार्थि नाम संवत्सरे, मङ्गलवासरे, शुभदिने, श्रवणानक्षत्रे श्रीपाञ्चजन्यांशेन अवततार। नवशतोत्तरद्विषष्ठिसहस्रोत्तराष्ट-सङ्ख्याक-वत्सरेषु अतीतेषु सरोमुन्यवतार इति साम्प्रदायिकाः वदन्ति ।

**तिरुनक्षत्रश्लोकः**

*तुलायां श्रवणे जातं काञ्च्यां काञ्चनवारिजात् ।*
*द्वापरे पाञ्चजन्यांशं सरोयोगिनमाश्रये ॥*

*काञ्च्यां सरसि हेमाब्जे जातं कासारयोगिनम् ।*
*कलये यः श्रियःपत्युः रविं दीपमकल्पयत् ॥*

द्वितीयः पूदत्ताल्वार् नाम श्रीभूतमुनिः मल्लापुरे नाम अद्यतनमहाबलिपुरे सरोमुनेः अवतारदिनानन्तरदिने धनिष्टानक्षत्रयुक्तनवम्यां बुधवासरे कस्मिंश्चित् माधवीनिकुञ्जे तत्कुसुमे कौमोदकीगदांशभूतो अवातरत् ।

**तिरुनक्षत्रश्लोकः**

*तुलाधनिष्ठासंभूतं भूतं कल्लोलमालिनम् ।*
*तीरे पुल्लोत्पले मल्लापुर्यामीडे गदांशजम् ॥*

*मल्लापुरवराधीशं माधवीकुसुमोद्भवम् ।*
*भूतं नमामि यो विष्णोः ज्ञानदीपमकल्पयत् ॥*

तृतीयः पेयाल्वार् नाम महदाह्वयमुनिः मयूरपुर्यां नाम अद्यतनमैलापूर् नगर्यां श्रीभूतमुनेः अवतारदिनानन्तरदिने शतभिषानक्षत्रयुक्तदशम्यां गुरुवासरे कस्मिंश्चित् कूपे रक्तोत्पले नन्दकाख्यभगवत्खड्गांशों अवततार।

**तिरुनक्षत्रश्लोकः**

*तुला शतभिषग्जातं मयूरपुरकैरवात् ।*
*महान्तं महदाख्यातं वन्दे श्रीनन्दकांशजम् ॥*

*दृष्ट्वा तुष्टाव यो विष्णुं रमया मयिलाधिपम्।*
*कूपे रक्तोत्पले जातं महदाह्वयमाश्रये ॥*

*पद्मारमणपादाब्जप्रेमभ्रान्त्या मनोज्ञया ।*
*भ्रान्तयोगीति विख्यातं मुनिं वन्दे गुणाम्बुधिम् ॥*

सरोजातत्वात् सरोमुनिः इति, भगवत्कटाक्षलब्धतज्ज्ञानत्वात्लब्धसत्ताक इति भूतशब्देन, भगवद्भक्तिरूपोन्मादवत्त्वात् भगवद्भक्तस्यैव. महत्त्वात् महदाह्वय इति चोच्यन्ते।

एवं एते त्रयोऽपि अयोनिजाः। भगवन्निर्हेतुककटाक्षवशात् रजस्तमोरहित-प्रवृद्धशुद्धसत्त्वगुणाः, परमपुरुषदास्यैकरसाः भगवद्गुणानुभवैक-धारकतया निराहाराः, भगवद्विमुखहेयजनसहवसतिभिया ग्रामैकरात्रसंचाराः अपरिचितपरस्पराः एकचराः बभूवुः। तदा महाकारुणिको भगवान् विष्णुः भगवद्भक्तिपरागैः स्वात्मभूतैः एभिः त्रिभिः अनाद्यविद्यासंबन्धवासनाक्रान्तचेतसां संसारिणाम् अज्ञानमहातमः निराकृत्य, स्वभक्तिज्ञानवैराग्यगुणान् दापयितुं संकल्प्य, भूम्यां, पृथगेवचरतां महतां श्रियःपतिः देहलीनगरे तेषां त्रयाणां सुगतिं व्यधात्। श्रीमन्नारायणः श्रीवामनक्षेत्रपुरे कदाचित् अकस्मात् निशि महद्वर्षं कल्पयित्वा, तान् दिव्यसूरीन् सङ्कटदेहलीं

प्रावेशयत् । ततः कासारयोगीन्द्रः रात्रौ ऐच्छिकेन देहलीनगरं प्राप । एकस्मिन् ब्राह्मणमन्दिरद्वारे स्थलं संप्राप्य एकस्यैव सुपर्याप्ते, तस्मिन् प्रदेशेऽशयिष्ट । तदानीमेव भूतयोगिरपि तत्र गत्वा स्थलमयाचत । सरोयोगिः तस्यार्धं स्थलं ददौ । तदानीं द्वावयि उपविष्टौ । ततः महदाह्वययोगिः अपि तत्रागत्य स्थलमयाचत । ताभ्यां स्थलं दत्तम् । शयनाय उपवेशाय च स्थलराहित्यकारणात् उत्थिताःते त्रयः वैष्णवागमहर्षिताः जाताः । तेषामनुग्रहार्थाय शङ्खचक्रगदाधरः बृहद्रूपधरः विष्णुः तन्मध्ये आविर्बभूव । अपारवर्षसंयुक्ते तस्मिन् निशीथसमये श्रीमहाविष्णुः तत्र सङ्कुचितस्थाने स्थितत्वात् निर्बन्धोऽभूत् । ते त्रयोऽपि कोऽयमपरो अस्मन्मध्ये प्रविष्टः पश्येम इति, तं द्रष्टुं प्रथमः सूर्यमेव दीपमकल्पयत् । द्वितीयो ज्ञानमेव । तृतीयस्तु गतकल्मषाः योगिनः ज्ञानदीपेन महाकान्तियुतं श्रीमन्नारायणं ददृशुः । प्रत्येकं शतेन पाशुरैः परमात्मानं तुष्टुवुः । ज्ञानदृष्ट्या परमात्मानं विलोक्यैव ब्रह्मानन्दसागरे निमग्नाः । ततः जगद्धितार्थाय कासारभूतमहदाह्वययोगिनः त्रयः ब्रह्मानुभवोद्भवम् अर्थं समुद्धृत्य अन्तादिनामकं दिव्यप्रबन्धत्रयं चक्रुः । मोक्षैकहेतुभूताः त्रयः प्रबन्धाः शतपाशुरैः विराजन्ते । भगवत्परान् तान् सद्ग्रन्थान् पठित्वा संसारिणः अविद्याकर्मसंजातमज्ञानम् अपोह्य वैष्णवा भूत्वा तद्विष्णोः परमं पदं गच्छन्ति । एवं सरोयोग्यादयः त्रयः गाधाशतत्रयं कृत्वा सर्वं जगदपालयन् । योगिभिः कृतान् प्रबन्धान् प्रियतो भक्त्या यः पठेत् सः सर्वपापविनिर्मुक्तो भूत्वा विष्णुलोके महीयते ।

## मुदल्तिरुवन्दादि

प्रथमदिव्यसूरिणा कृते मुदल्तिरुवन्दादिप्रबन्धे शतपाशुराणि सन्ति । केषांचन पाशुराणां तात्पर्यमत्रोच्यते ।

अपारमहार्णवमध्ये पृथ्वी सुस्थिरमस्ति । सागर, सूर्य, चन्द्र, वाय्वादयः क्रमानुसारेण प्रवर्तन्ते । अस्य सर्वजगत्कारणभूतस्य परमात्मनः कैङ्कर्य एव परमपुरुषार्थः । मानसिकं, वाचिकं, कायिकमिति त्रिविधं कैकर्यम् वाचिककैङ्कर्यरूपेण भगवन्तं स्तौमि । पृथिव्यप्तेजोवाटवाकाशादयः परमात्मनः लीलायाः प्रत्यक्षनिदर्शनभूताः । परमात्मनः जायन्ते, परमात्मनः आज्ञानुसारेण प्रवर्तन्ते, परमात्मनि एव लीयन्ते । परमात्मनः अनुग्रहेणैव परमात्मानं ज्ञातुं शक्यते । केवलेन्द्रियनिग्रहमात्रेणैव भगवत्स्वरूपं ज्ञातुं शक्यं व ? न शक्यम् । सर्वव्यापाकस्य, सर्वरक्षकस्य परमात्मनः बहूनि नामानि सन्ति । शिवेन सह सर्वं परमात्नः शरीरम् ।

परमात्मा शरीरी । एकमेव अद्वितीयम् । गर्भवासादारभ्य भगवता कटाक्षितोऽहं भगवत्स्वरूपगुणविभूत्यादीनां निरन्तरस्मरणानुभवरतः कदापि न विस्मरामि ।

संपन्नाः यथार्थरत्नानि अनुभवन्ति, संपद्विहीनान् कृत्रिमरत्नानि बहूनि आकर्षन्ति । तथैव भगवन्निर्हेतुककटाक्षलक्ष्यभूताः भगवन्तमनुभवन्ति । भगवत्प्रतिकूलाः क्षुद्रफलप्रदायकान् सुरान् प्रार्थयन्ते । सर्वलोकरक्षकः सर्वेश्वरः किमर्थं दुष्टशिक्षणं करोति । शिष्टजनरक्षणार्थमेव । वराह, नरसिंह, वामनादिषु अवतारेषु सर्वेषु परमात्मा दुष्टशिक्षणं, शिष्टरक्षणं, धर्मसंरक्षणमेव कृतवान् । परमात्मैव पाति, अत्ति, पाल्यते च । मम सर्वेन्द्रियाणां विषयभूतः परमात्मा श्रीमन्नारायण एवेति प्रथमदिव्यसूरिणा परमैकान्तिकता बहुवारं प्रकटिता अस्मिन् दिव्यप्रबन्धे ।

परमात्मैव उपेयः परमात्मैव उपायः इति सर्वशास्त्रर्थरहस्यं मया ज्ञातम् । अतः सर्वदा भगवद्गुणानुभवामृतसागरे निमग्नोऽहं अन्यदुपायं न जाने । बहून् देवान् बहवः जनाः बहुविधैः उपासन्ते । तेषां देवानां सर्वेषामपि अन्तरात्मा, प्रेरकः, नियामकः, परमात्मा श्रीमन्नारायण एव । जगत्कारणभूतस्य अनन्तकल्याणगुण-परिपूर्णस्य विष्णोः कृपा एव फलप्रदा । इतरेषां कृपा व्यर्था एव । शेषशयनस्य श्रीमन्नारायणस्य पादपद्मसेवा एव सेवा । कालक्रमाभावेन स्मरणानुभवानुसारेण पूतनाजीवितहरण-नवनीतचौर्य - कुवलयापीडहरण- बकासुरध्वंसन-यमलार्जुनभंजन-त्रिविक्रम, वराह, नारसिंह, गजेन्द्रसंरक्षणादयः भगवल्लीलाः दिव्यसूरिणा बहुवारमनुसन्धानं कृताः अस्मिन् दिव्यप्रबन्धे ।

सृष्टिस्थितिलयकर्तुः परमात्मानः श्रीमन्नारायणस्य दिव्यदेहं संस्पृशन् समुद्रः कीदृशमानन्दमनुभवति । समुद्रस्य भाग्यमेव भाग्यम् । वामनरूपधारिणं परमात्मानं संसेव्य बलिः कीदृशमानन्दमनुभूतवान् । तस्य भाग्यमेव भाग्यम् । भगवतो विष्णोःपादद्वयं कदापि न विस्मरामि । हे गरुडवाहन ! भवतः नवनीतचौर्यं दामोदरबन्धनं च अहमेक एव न सर्वेऽपि जानन्ति ।

ऐश्वर्यकामाः, कैवल्यकामाः भगवदनुभूतिसाम्राज्यकाङ्क्षिणश्च वेङ्कटाद्रिं भजन्ते । तेषां मनोरथसाफल्याय प्रतिबन्धकानि पापानि यानि सन्ति, तानि नाशयति वेङ्कटाद्रिः । नित्यसूरिणां हृदयज्योतिं प्रकाशयति, वेङ्कटाद्रिनायः मेघश्यामसुन्दरः शङ्खचक्रधारी च । तस्य वक्षस्थले लक्ष्मी प्रकाशते । उभयविभूतिनायकः, परात्परः सुलभातिसुलभः, गजेन्द्ररक्षकः वात्सल्यनिधिः, आर्तत्राणपरायणः इति वेङ्कटाद्रीशं

बहुविधं कीर्तितवान् प्रथमदिव्यसूरिः अस्मिन् दिव्यप्रबन्धे। आश्रितवात्सल्यजलधेः श्रीमन्नारायणस्य श्रीचरणद्वन्द्वमेव सर्वदा शरणं मम । अज्ञानान्धकारपरिहरणाय, ज्ञाननेत्रविकासाय, सर्वेन्द्रियनिग्रहाय, स्वस्वरूपपरस्वरूपज्ञानाय, कर्तव्याकर्तव्यज्ञानाय, श्रीवैकुण्ठप्रवेशाय, जगत्पतिं, वेदवेद्यं, सर्वेश्वरं सर्वदा संस्मरामि। परमात्मनः स्मरणं विना केवलनित्यकर्मानुष्ठानेन फलं न सिद्ध्यति। हे भगवन् हिरण्याक्ष, हिरण्यकशिपु, रावणादीन् हन्तुम् आयुधं धृतवान् भवान् । बलिचक्रवर्तिणः वशीकरणाय याचकत्वमुपयुक्तवान् । भवतः लीलां ज्ञातुमशक्या खलु । परमात्मानं श्रीमन्नारायणं सर्वदा संस्मरन् धूपदीपपुष्पतीर्थैः ये आराधयन्ति तेषां भागवतानां रागद्वेषाज्ञानादिमनःकल्मषाः नष्टाः स्युः। भगवद्भक्त्यादिसमृद्धयः स्वयमेव सिद्ध्यन्ति। अर्चकाधीनरुपनामचेष्टितः सर्वेश्वरः अर्चावतारः इति परमात्मा कीर्त्यते। परमशिवं ब्रह्महत्यादोषात् रक्षितवान् श्रीमन्नारायणः, आश्रितजनान् अवश्यं रक्षिष्यति। गजेन्द्र इव परमात्मानं ये शरणं व्रजन्ति ते मुक्ताः भवन्ति। कर्मानुगुण्येन संसिद्धेभ्यः विविधशरीरसंबन्धेभ्यः विमुक्तिः भगवदनुग्रहेणैव सिद्ध्यति । जितेन्द्रियाणां पारमार्थिकप्रेमपूर्णानां आश्रितानां भक्तानां देवदेवस्य सेवा सुप्रापाा। अष्टवसवः, एकादशरुद्राः, द्वादशादित्याः, अश्विनीदेवौ इत्यादयः सर्वेऽपि लक्ष्मीपतिं पुरुषसूक्त्यादिभिः सदा स्तुवन्ति । लक्ष्मीनारायणस्य संचारसमये छत्ररूपेण, उपवेशनसमये आसनरूपेण, उत्थानसमये पादपीठरूपेण, शयनसमये तदुचितरीत्या एवं विविधप्रकारेः परमात्मनः सेवां करोति आदिशेषः। तस्य सेवा एव सेवा।

कालियभञ्जन-कुवलयापीडसंहार-गोपालन-उत्तालतालभेदन-बकासुरवध- रासक्रीडा-भाण्डनृत्य-विषस्तनिपूतनाजीवितहरण-गोवर्धनाचलोद्धरणादि श्रीकृष्णाद्भुतलीलानुसंधानसंस्मरणानुभूतितन्मयतया असमाप्तव्याकुलतां प्रदर्शितवान् प्रथमदिव्यसूरिः अस्मिन् दिव्यप्रबन्धे । सागरतीरवासिनापि सागरस्यागाधत्वं ज्ञातुं यथा अशक्यं, तथैव श्रीमन्नारायणस्य नाभौ विद्यमानात् कमलात् उद्भूतेन चतुर्मुखेनापि परमात्मनः महिमा ज्ञातुमशक्या एव। भगवति एव मनः संस्थाप्य श्रीमदष्टाक्षरीमन्त्रार्थविवरणरूपं दिव्यप्रबन्धमिमं गानं करोमीति दिव्यसूरिणा स्फष्टमुक्तम्। चराचरजगद्रक्षकः परमात्मा श्रीमन्नारायण एव। अन्यः कोऽपि रक्षकः नेति दिव्यसूरिणा निर्द्वन्द्वं प्रकटितमस्मिन् प्रबन्धे। वरिष्ठैः श्रीवैष्णवैः एव कालयापनम्, इतरैः न। सर्वदा श्रीमन्नारायणमेव संस्मरामि, नेतरम्। मादृशी परमैकान्तिका स्थितिः भगवत्सेवकानां सर्वेषामपि सिद्ध्यति। वैदिकोत्तमाः

सर्वेऽपि श्रीमन्नारायणस्य नामानि सर्वदा संस्मरन्ति। नदीनां गतिः समुद्र एव। पद्मस्य विकासप्रदः सूर्यकिरणसंपर्क एव प्राणिनां सर्वेषां परलोक एव गतिः। तथैव ज्ञानस्य लक्ष्यभूतः श्रीमन्नारायण एव। जीवः लक्ष्मीनारायणस्य एकस्यैव अनन्यार्हशेषभूतः। परमात्मानः दिव्यस्वरूपं कः जानाति। परमात्मनः अघटितघटनासामर्थ्यं बहुषु पाशुरेषु प्रदर्शितमस्मिन् दिव्यप्रबन्धे।

परमात्मनः निवासः श्रीवेङ्कटाद्रिः आश्रितानामखण्डमोक्षं प्रसागयति श्रीनिवासं श्रीवेङ्कटाद्रिनिलयमाश्रितानां विषये किं वक्तव्यम् ? समस्तसन्मङ्गलानि सिद्ध्यन्ति इत्यत्र न लेशोऽपि सन्देहः। इति वेङ्कटाचलमाहात्म्यं बहुषु पाशुरेषु दिव्यसूरिणा प्रबोधितम्।

*नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी।*
*तथापि नरके घोरे पतन्तीत्येतदद्भुतम्॥*

इति पुराणवच नस्य अनुवादप्रायापाशुरः ९५ पाशुरः। वेङ्कटाद्रिनिलयः, क्षीरसागरे शेषशयनः सर्वेषमपि हृदयेषु अन्तर्यामिरूपेण स्थितः। सर्वेश्वरः स एवोपाय इति प्रबन्धस्यान्ते दिव्सूरिणा प्रबोधिताः।

**रेण्डांतिरुवन्दादि**

भूतयोगिप्रणीते रेण्डां तिरुवन्दादिप्रबन्धे शतपाशुराणि सन्ति। स्वस्वरूपपरस्वरूपयोः ज्ञानार्थं ज्ञानदीपं नाम दिव्यप्रबन्धममुं प्रकाशितवान् भूतयोगी। अस्य दीपस्य ज्ञानमेव ज्वाला, अभिनिवेश एव घृतं, स्नेह एव दीपपात्रमिति अमोघभगवत्सङ्कल्पबलेनैव स्तौमीति आरंभपाशुरे एव उक्तवान्।

परमात्मनः दिव्यमङ्गलविग्रहावयवानुसारेण श्रीवत्सचिह्नः, पुण्डरीकाक्षः इत्यादीनि नामानि प्रसिद्धानि। विभूत्यनुसारेण लोकाध्यक्षः सुराध्यक्षः इत्यादीनि नामानि सिद्धानि। तानि नामानि भक्त्या ये अनुसन्धानं कुर्वन्ति, ते नित्यसूरयः भवेयुः। तादृशं माहात्म्यं भगवन्नाम्नां विद्यते। क्षीराब्दिनाथस्य श्रीचरणद्वन्द्वं भक्त्या ये आश्रयन्ति ते एव परमपदं गच्छन्ति। त्रिविक्रमावतारे त्रिलोकानपि आक्रम्य, लोकोपकाराय प्रदर्शितां त्रिविक्रमलीलां ज्ञातुं सामर्थ्यं कस्य अस्ति। बाह्यविषयान् परित्यज्य भगवद्विषये एव मनः संस्थाप्य भक्त्यभिनिविष्टचित्तेन निरन्तरनाम संकीर्तनपूर्वकेन परमात्मानं श्रीमन्नारायणं ये आराधयन्ति तेषामेव तच्चरणसाक्षात्कारसिद्धिः भवति।

बहुषु पाशुरेषु त्रिविक्रमस्य लीलावैभवं कीर्तितम् । तथैव पूतनाप्राणहरणशकटासुरभंजनेत्यादिलीलावैभवमपि कीर्तितम् । सूर्यब्रह्मरुद्रादिभिः सह सकल चेतनानामपि श्रीमन्नारायणशेषत्वमेव स्वरूपम् । तेन स्वरूपज्ञानेन ये श्रीमन्नारायणमाश्रयन्ति ते परमपदं गच्छन्ति। सूर्यब्रह्मरुद्रादयः उन्नताः गजराजसदृशाः सामान्याः अपि सङ्कोचाभावेन श्रीमन्नरायणमाश्रित्य धन्याः भवन्ति । हे लोकाः । अज्ञानवशात् उदरपोषणार्थं च केचन मूर्खाः पापाकलङ्कितान् जनान् स्तुवन्ति । तथा मा कुर्वन्तु । आश्रितवात्सल्यैकजलधिं श्रीमन्नरायणं, तस्य दिव्यवैभवं च संकीर्तयन्तु । धन्याः भवन्तु ।

शेषशयनः श्रीमहाविष्णुः श्रीरामावतारे श्रीकृष्णावतारे च बाधान् अनुभूतवानिति, तानि कष्टानि संस्मरन् दिव्यसूरिः परितापं प्रकटितवान् ।

भगवत्प्राप्तेः साधनभूतः भगवांनेव। तथेति इतराणि अनुष्ठानानि अनावश्यकानि इति त्यक्तव्यानि वा ? इत्युक्ते न । स्वयं प्रयोजनबुद्ध्या आचरणीयान्येव । न तु उपायबुद्ध्या आचरणीयानीति षोडशपाशुरे दिव्यसूरिणा स्फष्टीकृतम्। ब्रह्मेन्द्ररुद्रादयः अपि परमात्मानं श्रीमहाविष्णुमेवाश्रित्य प्रयोजनानि आप्नुवन्ति । अतः अस्माकमपि आश्रयणीयः श्रीमन्नारयण एव, न त्वन्ये ।

वामन, नारसिंह, श्रीकृष्णावतारेषु श्रीमन्नारायणेन कृतानि सर्वाणि कार्याणि न्यायचेष्टितान्येवेति, सृष्टिस्थितिलयकर्तुणा परमात्मना आश्रितजनरक्षणार्थं वात्सल्येनकृतानीति विविधप्रकारैः विविधपाशुरेषु श्रीमन्नारायणस्य लीलाः कीर्तिताः अस्मिन् दिव्यप्रबन्धे ।

उपासकाः प्रपन्नाः सर्वेऽपि सर्वदा भगवन्नामानि संकीर्तयन्तः सर्वेभ्यः पापेभ्यः बन्धेभ्यः विमुक्ताः भवन्ति । संपन्नाः भवन्ति, समुज्जीवन्ति ।

भगवन्तं भजितुं सर्वाण्युपकरणानि सन्ति । मनः विद्यते । फलपुष्पाणि सन्ति । अनुकूलः कालः विद्यते । प्रणामं समर्पितुं शिरः विद्यते । तथापि संसारिणः घोरनरके पतन्ति इति आश्चर्यं प्रकटितं दिव्यसूरिणा ।

नक्रोपद्रवात् रक्षणाय स्वप्रयत्नं त्यक्त्वा, सर्वरक्षकः, सर्वशक्तियुक्तः परमात्मैवेति ज्ञात्वा रक्षिष्यतीति विश्वासेन भगवन्तमाश्रितवान्, स्वप्रयत्नं त्यक्तवान् गजराजः । अत एव परमात्मा गजराजं रक्षितवान् । अतः अस्माभिरपि आत्मसंरक्षणप्रयत्नः प्रतिबन्धक इति ज्ञातव्य इति २२ पाशुरे स्पष्टमुक्तम् ।

आश्रितसंरक्षकः भगवन्नारायणः सर्वदेवप्रस्तुतमहांयशस्कः सर्वलोकसंरक्षणाय भक्ताभीष्टफलप्रदाय वेङ्कटाचलस्योपरि अवततार । गुणानुभवतृषितानां शिष्टानां तदनुभूतिसमृद्धिं प्रसादितुमेव अर्चावताररूपेण अवततार। तस्य दर्शनार्थं देवाः सर्वेऽपि अहमहमिकया समागच्छन्ति। नित्यसूरिणां महीसुराणां श्रीवैष्णवानां निधिः श्रीवेङ्कटाद्रिः एव । मनसा वाचा कर्मणा त्रिकरणशुद्ध्या लक्ष्मीसंश्लिष्टं श्रीनिवासं संस्मरन् मनः आनन्देन विकसति । स्तोत्रेण वचः कृतार्थाः। संकीर्तनानुगुणेन नर्तनेन शरीरमानन्दनिर्भरं भवति।

शब्दादयः विषयाः भोग्याः इति अज्ञजनाः मन्यन्ते । वासुदेवस्सर्वमिति श्रीनिवास एव परमभोग्य इति ज्ञानिनः मन्यन्ते । तदेव रक्षकं स्यात् ।

वयं महान्तः वयं ज्ञानिनः इति मन्यमानानां अहङ्कारभूयिष्टानां जनानाम् अज्ञानमेव पताकम् । अतः हे मन तादृशैः अल्पैः अज्ञैः सहवासं विहाय सर्वदासृष्टिस्थितिसंहाररूपलीलामानुषविग्रहं श्रीवेङ्कटाद्रिनिलयं संकीर्तय इति वेङ्कटाचलवासे स्वभक्तिविश्वासं प्रकटितवान् दिव्यसूरिः अस्मिन् दिव्यप्रबन्धे ।

अस्माकं सुस्थिरोज्जीवनोपायभूतः श्रीनिवास एव । तस्य नामसङ्कीर्तनेनैव जिह्वायाः चरितार्थता सिद्ध्यति । वैदैश्च सर्वैरहमेव वेद्यः इति भगवता उक्तरीत्या वेदवेद्यं पुरुषोत्तमं श्रीमन्नारायणं श्रीनाथ, नारायण, वासुदेव, श्रीकृष्ण, भक्तप्रिय, चक्रपाणे इत्येवंप्रकारेण भगवतो दिव्यनामानि संकीर्तनीयानि । सर्ववेदपारायणस्य सुलभोपायः, सर्ववेदसारः भगवन्नाम एव । वृद्धावस्थायां इन्द्रियबलनाशेन, कण्ठे श्लेष्मपूरणेन वक्तुं सामर्थ्यं न भवति । अतः तादृशदुःखावस्थायाः पूर्वमेव मनसि सुस्वस्थे शरीरे सति इदानीमेव श्रीधरं संकीर्तय। शब्दादिविषयभोगानुभवेन प्रयोजनं नास्ति। स्वर्गप्राप्तिरेव पुरुषार्थ इति प्रयत्नः व्यर्थप्रयत्न एव। भगवत्पादपद्मसंस्मरणेनैव सर्वं सिद्ध्यति । श्रीमन्नारायणस्य सौन्दर्यसंदर्शनार्थं संस्मरामि । स एव मोक्षप्रदाता । भगवत्पादपद्मसमाराधकानां परमभागवतानां श्रीचरणसेवा एव सेवा ।

अनन्तवेदप्रतिपाद्यः तमसि दीप इव प्रकाशमानः नित्यसूरिकिरीट-कोटिघटितपादारविन्दः श्रीवेङ्कटाद्रिनिलयः । इन्द्रनीलमणिसन्निभदेहः, सर्वेश्वरः स एव दिव्यक्षेत्रेषु श्रीरङ्गगोष्ठीपुरतोयगिर्यादिषु अर्चारूपेण विराजते । विविधावतारेषु विविधप्रकारैः धर्मसंरक्षणं कृत्वा भगवान् भक्तसुलभः विविधदिव्यक्षेत्रेषु विराजते । विविधनामभिः कीर्त्यते । आश्रितसंरक्षणाय प्रतीक्षते ।

भगवत्सहायेन क्षीरसागरमथनं कृत्वा, तदुत्पन्ने अमृते एव सुरासुराः सर्वेऽपि दृष्टिं स्थापितवन्तः । श्रीमहाविष्णोः जलधिश्यमलदेहसौन्दर्ये तेषां मनः न स्थापितवन्तः । तद्भाग्यं मम सिद्धमिति स्वभाग्यं प्रकटितवान् भूतयोगिः अस्मिन् दिव्यप्रबन्धे।

बहुषु पाशुरेषु वेङ्कटाद्रिवैभवं, वेङ्कटाद्रिनिलयस्य माहात्म्यं च भूतयोगिना कीर्तितम् । श्रीमन्नारायणस्य श्रीपादसेवा, दिव्यनामसङ्कीर्तनं चैव उत्तारकमिति दृढाध्यवसायेन आचरणीयमिति प्रबोधितं भूतयोगिना ।

इतिहासपुराणेषु विद्यमाना शब्दराशिः परमात्मनः स्वरूपमेव । सर्वेषां इतिहासपुराणानां मूल, अर्थ, तात्पर्यानुसन्धानं सर्वमपि भगवन्नामसङ्कीर्तनमेव । परमात्नः दिव्यमङ्गलविग्रहसन्दर्शनसंस्मरणसञ्जनितसानन्दमाधुर्यानुभवे निमग्नः अन्यत् किमपि न वाञ्छति । मानससाक्षात्कारभूतस्य परमात्मनः दिव्यमङ्गलविग्रहं सर्वदा संस्मरामि । तदानीमेव श्रीरङ्गवेङ्कटाद्रिदिव्यदेशेषु प्रकाशमानं अर्चारूपिणं परमात्मानं, तस्य परमात्मनः विविधलीलावैभवादीनपि संस्मरामि ।

वेङ्कटाद्रौ समस्तजन्तवः अपि ऋषय इव उषः काले एव उत्थाय वेङ्कटानायकस्य नामानि कीर्तयन्ति । सर्वजन्मसर्वावस्थासु कृतेन तपःपुण्यफलेन तमिलसूक्तिमालां भगवच्चरणयोः समर्पयामीति भूतयोगिः स्वयमुक्तवान् ७४ पाशुरे । भगवद्विषयः वाचामगोचरः तथापि अनुभवैकवेद्यः । अतः अमृतायमानं परमभोग्यं भगवत्पादपद्मयुगलं, भगवन्नामसङ्कीर्तनं च न त्यजामि । परमात्मा अमृतमयः इति, मधुमय इति, रसो वै सः इति मधुरातिमधुरनामसङ्कीर्तनेन भजामि । विविधसाधनानुष्ठानैः परिश्रमैः तपसा च बहवः परमात्मनः साक्षात्काराय यत्नं कुर्वन्ति । तेषां फलं न सिद्धम् । हृदयपुष्पसमर्पणेन भगवत्सन्निधौ नामसंकीर्तनं कृतं मया । अतः भगवत्साक्षात्कारः सिद्धः । कारणं किमित्युक्ते- भगवतः निर्हेतुककृपा एव । स्वप्रयत्नं साधकं न ।

गोष्ठीपुरक्षेत्राधिपतेः त्रिविक्रमस्य लीलाः भूतयोगिना कीर्तिताः । श्रीरङ्गनाथ एव उपायः, श्रीरङ्गनाथ एव उपेयः इति दृढाध्यवसायेन ये आश्रयन्ते तेषां श्रीवैकुण्ठे प्रवेशः सुलभः । भगवच्चरणसेवकानां कदापि नरकलोकभीतिः न भवति । हिरण्यकशिपोः वक्षोविदलनदक्षः नीलरत्नसदृशवर्णः, अनादिसिद्धः, विश्वस्रष्ठा, क्षीरार्णवनिकेतनः, चक्रायुधः, वरदराजः हस्तिगिरिक्षेत्रे अवतीर्य भक्ताननुगृण्हाति ।

हस्तिगिरिनायकः वरदराजः गरुजवाहनः रत्नोज्ज्वलफणिराजशयनः सर्वयज्ञसमाराध्यः सर्ववेदप्रतिपाद्यः इति वरदराजस्वामिनं संकीर्तितवान् भूतयोगिः।

हे पुण्डरीकाक्ष ! सर्वजगद्रक्षक, कुम्भकोणक्षेत्राधिप ! अनन्तशयन ! परात्पर ! लक्ष्मीवल्लभ ! भवतः चरणद्वयमेव मम शरणम् । हे देव आश्रितवत्सल ! प्रयोजनानन्तरकामिनां सुराणां फलसिद्धेः मत्स्यकूर्मादिरूपैः कष्टमनुभूतवान् भवान् । मम इच्छायाः साफल्याय तादृशकष्टमानावश्यकम् । अस्य दिव्यप्रबन्धस्याध्येतृणां भवद्भक्तिजननमेव फलम् । तदेव मम परमोपकारकमिति प्रबन्धस्यान्ते भूतयोगिना सूचितम् ।

**मून्रां तिरुवन्दादि**

प्रथमदिव्यसूरित्रयेन कृतानां प्रबन्धानां मुक्तपदग्रस्तक्रमनिबद्धत्वात् अन्तादयः इत्युच्यन्ते । चतुस्सहस्रपरिमिते नालायरदिव्यप्रबन्धे इयर्पा नाम तृतीयसहस्रे तृतीयः प्रबन्धः मून्रां तिरुवन्दादिप्रबन्धः इति व्यवह्रियते । पेयाल्वार्नाममहायोगिना कृते अस्मिन् प्रबन्धे शतपाशुराणि सन्ति । श्रीलक्ष्मी मया दृष्टा । सुदर्शनचक्रं दृष्टम् । पाञ्चजन्यं दृष्टम् । ज्ञानवैशद्यानुगुणेन उभयविभूतियुक्तः, लक्ष्मीनित्ययोगविशिष्टः श्रीमन्नारायणः मया दृष्टः इति महायोगिना निष्कर्षिता अस्मिन् दिव्यप्रबन्धे ।

भगवतः वक्षःस्थले पुरुषकारभूता श्रीदेवी मया दर्शिता । लक्ष्मीसंश्लेषेन प्रकाशमानः दिव्यमङ्गलविग्रहः मया दर्शितः । लक्ष्मीनारायणयोः गौरश्यामलकान्तिसंमिश्रः सूर्यप्रकाश इव विराजते । प्रेमोत्कटया दिव्यदम्पत्योः संरक्षणाय युद्धसन्नद्धं सुदर्शनचक्रं पाञ्चजन्यं च मया संदर्शितम् ।

हे रमारमण ! त्वद्वक्षःस्थले यथा लक्ष्मी वसति तथैव मम मनः भवति संलग्नः । भवतः चरणसाक्षात्कारः मम नित्यानन्द एव । क्षीरसागरशयनः लक्ष्मीतुङ्गस्तनगिरितटीविश्रान्तः शिशिरतुलसीमालाञ्चितवक्षः, आश्रितविरोधान् निवार्य, आश्रितान् संरक्षति । समुद्रश्यामलवर्णः संसारनरकनिवासकौषधधनाम्ना प्रशस्तः परमात्मा मम हृदये सुस्थितः ।

अस्माकं समस्तबाधनिवारकौषधं, सर्वकाम्यार्थप्रदायकं परमभोग्यममृतं किमित्युक्ते, समस्तविश्वमाक्रम्य स्थितं परमात्मनः श्रीचरणम् । सृष्टिकाले सृजन् जगद्रक्षणकार्ये सदा व्यापृतः भगवान् श्रीमन्नारायणः । स एव परात्परः । परत्वद्योतकारविन्ददलायितनेत्रयुगलः ।

बहुषु पाशुरेषु त्रिविक्रमदेवस्य अवतारवैशिष्ट्यं, लीलावैभवं च महायोगिना सम्यक् वर्णितम् । समस्तविश्वमाक्रम्य, प्रकाशमानं श्रीपादं सौन्दर्यसर्वस्वमेव । तस्य श्रीचरणस्य कमलासनः स्वकमण्डलोदकेन अभिषेकं कृतवान् । तत् जलमेव श्रीचरणसंपर्केण त्रिभुवनपावनी गङ्गारुपेण प्रसिद्धा ।

हे मनः ! उभयविभूतिनाथं गरुडवाहनं, सकलेतरवस्तुविलक्षणं परमात्मानं श्रीमहाविष्णुं भजस्व । नारायणादिसहस्रनामानुसन्धानेन जिह्वायाः पवित्रत्वं सिद्ध्यति । सकलेन्द्रियाणामपि भगवदनुभूत्या एव साफल्यं सिद्ध्यति । परमात्मने अञ्जलिसमर्पणमेव हस्ताभ्यां कर्तव्यम् । परमात्मनः दिव्यमङ्गलसन्दर्शनमेव नेत्राभ्यां कर्तव्यम् । भगवन्नामसङ्कीर्तनश्रवणमेव कर्णाभ्यां कर्तव्यम् । परमात्मनः विविधावयवसौन्दर्यमनुभवामि इति महायोगिः आत्मानन्दानुभूतिं प्रकटितवान् ।

भगवन्नामसङ्गीर्तनप्रवणः निकृष्टकुलजोऽपि तस्मिन् क्षणे एव उत्कृष्टकुलजो स्यात् । चत्वारः वेदाः क्षीरार्णवनिकेतनं शेषशायिनं सर्वतापहरपरमभोग्यदिव्यरूपिणं सर्वेश्वरं प्रतिपादयन्ति । वेदोषबृंहणानि प्रमुखमहर्षिभिः प्रणीतानि स्मृतीतिहास पुराणादीनि अपि परमात्मानमेव प्रतिपादयन्ति । तथापि परमात्मनः तत्त्वं संपूर्णं वयं न जानीमः ।

वेदार्थज्ञानिनां इन्द्रियजयशीलिनां सुदृढमनस्कानां, एकाग्रचित्तानां भगवद्भक्तानां भगवत्साक्षात्कारः सिद्ध्यति ।

सर्ववेदप्रतिपाद्यस्य श्रीवेङ्कटाद्रिनिलयस्य नित्यसूरिकिरीटघटितपादस्य परमात्मनः श्रीचरणौ आश्रित्य कामिनीपरिभोगासक्तिं परित्यज्य वेदादिशास्त्रेषु संलग्नमनाः भगवदनुभूतिमनुभवति । विषयान्तरत्यागेन भगवद्विग्रहवैभवानुसन्धान संस्मरणेन भगवदनुभूतिः सिद्ध्यति ।

भगवत्कृपायाः पात्रभूतानां शास्त्रज्ञानमपि अनावश्यकम् । परमात्मनः निर्हेतुककृपायाः पात्रभूतानां क्षीरसागरशयनस्य साक्षात्कारः अवश्यं सिद्ध्यति । भगवतः निर्हेतुककृपाविलासः अप्रतिहतः अमोघः खलु ।

मम हृदयवासी क्षीरसागरशयनः श्रीमन्नारायण एव इदानीं मणिदीपप्रकाशमाने तिरुवल्लिक्केणि क्षेत्रे भक्तान् अनुगृण्हाति ।

अक्षयसम्पत्प्राप्तिः भूतभविष्यद्वर्तमानदारिद्यभयं यथा निवारयति तथैव भगवतः श्रीपादसेवाभाग्यप्राप्तिः सर्वविधकल्याणानि प्रसादयति ।

प्रलयकाले समस्तविश्वं आत्मनि निक्षिप्य वटपत्रस्योपरि शेते परमात्मा । तथा आश्रितसंरक्षणे आसक्तिं नित्यजागरुकतां च प्रदर्शयति । अतः भगवान् भक्तान् अवश्यं रक्षिष्यति ।

हे रमारमण ! पुण्डरीकनयन ! सर्वेश्वर ! भवतः स्वरूपस्वभावान् भक्ताः यावत् जानन्ति तावत् वर्णयन्ति, सर्वं ज्ञातुं अस्माकं सामर्थ्यं नास्ति खलु ।

परमात्मनः श्रीचरणयोः सुरभिकुसुमान् नित्यं समर्पयन्तः किरीटघटितमस्तकैः प्रणमन्तः नित्यसूरयः पमात्मानं सन्दर्शयन्ति । स परमात्मा नागपर्यङ्के हस्तिगिरिवेङ्कटाद्रि, यथोक्तकारिसन्निधि, कामासिका, नृहरिक्षेत्रेषु इदानीमस्माकं दर्शनं प्रसादयति ।

''मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः'' ''अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम'' इति भगवता शपथं कृतं खलु । अतः भगवन्तमाश्रितवन्तः भक्ताः दुःखेभ्यः विमुक्ताः भवेयुः इत्यत्र नास्ति सन्देहः । महाभारतयुद्धप्रवर्तकः पाण्डवपक्षपाती स सर्वेश्वरः यशोदां दृष्ट्वा भीतिं प्रदर्शितवान् अस्याद्भुतस्य कारणं तस्य आश्रितपारतन्त्र्य मेव ।

राज्ञः वासः राजधानी । सर्वलोकाधिपतेः श्रीमन्नारायणस्य अवतारक्षेत्राणि वासस्थानानि च राजधान्यः । ताः काः इत्युक्ते क्षीरसमुद्रम्, नागपर्यङ्कः, वैकुण्ठम्, कुंभकोण, वेङ्कटाचल काञ्चीपुर श्रीरङ्गादीनि क्षेत्राणि च । क्षीरार्णवनिकेतनः शेषशयनः सर्ववेदवेद्यः प्रह्लादसंरक्षणार्थं स्तंभेऽवतारभूतः योगिनां हृत्कमलेषु वसति । काञ्चीपुरे वेळुक्कै इत्यस्मिन् क्षेत्रे उपविष्टः यथोक्तकारिसन्निधौ शयानः त्रिविक्रमावतारप्रयासात् विश्रमति ।

लौकिकानामिन्द्रियाणि यथा विषयासक्तानि भवन्ति, तथैव ममेन्द्रियाणि भगवद्विषये सक्तानि भवन्ति । आभरणानामाभरणं परमात्मनः दिव्यमङ्गलविग्रहं संदर्शनीयमिति मम नेत्रद्वयमुत्सुकति । तस्य परमात्मनः दिव्यचेष्टितानां संकीर्तने एव मम वाक् व्यापृतं भवति । श्रीमन्नारायणस्य चरणयोः भजने एव मम हस्ताभ्यां निष्ठा ।

जलधिशयनः शङ्खचक्रगदाशार्ङ्गेति पञ्चायुधान् धृतवान् । नानाविध-रत्नालङ्कारभूषितः लक्ष्मीसमधिष्ठितवक्षः अन्तर्बहिश्च विविधरूपैः विराजते ।

सर्वाणि वस्तूनि, ब्रह्मादयः, नक्षत्राणि, अग्निः, कुलाचलाः, अष्टदिशः, रविचन्द्रौ च परमात्मनः शरीरमेव। निस्समाभ्यधिकः परमात्मा एव परमात्मनः उपमानभूतः।

सर्वान्तर्यामी, सर्वशरीरी, सर्ववेदप्रतिपाद्यः, वेदप्रवर्तकः, सर्वेश्वरः, चन्द्रमण्डलोत्तुङ्गे निर्झरजलघोषसम्पन्ने वेङ्कटाचले, मम हृदये च विराजते। त्रिविक्रमावतारे सकललोकान् आक्रम्य, परमात्मा इदानीं सर्वजगद्रक्षणाय वेङ्कटाद्रौ ध्यानशीलजनानां हृदयेषु च अवस्थितः। बहुषु पाशुरेषु त्रिविक्रम, नरसिंह, श्रीकृष्णाद्यवतारेषु परमात्मना प्रदर्शिताः लीलावैभवाः विविधप्रकारैः सङ्कीर्तिताः अस्मिन् दिव्यप्रबन्धे दिव्यसूरिणा महायोगिना।

कौस्तुभरत्नाञ्चितवक्षः मकरन्दनिर्भरतुलसीमालाञ्चितवक्षस्कः मरकतरत्न-सन्ध्यामेघयोः उरमानभूतः वेङ्कटाद्रौ विराजमानः भगवान् श्रीनिवासः। तस्य श्रीचणावेव अस्माकं सर्वेषामपि समाश्रयणीयौ।

अष्टभुजेषु अमोघान् दिव्यायुधी धृत्वा काञ्चीपुरक्षेत्रे भक्ताननुगृण्हाति परमात्मा। तस्य अष्टभुजस्वामिनः श्रीचरणौ एव अस्माकम् आश्रयणीयौ। ज्योतिर्मयी, पद्माक्षी पद्मासनासीना श्रीमन्नारायणसमालिङ्गनानपायिनी, लक्ष्मीदेवी कारुण्येन सदा अस्मान् रक्षति इति लक्ष्म्याः पुरुषकारवैभवमपि कीर्तितं अस्मिन् दिव्यप्रबन्धे।

**तिरुमळिशैयाल्वार् चरितम्**

*शक्तिपञ्चमयविग्रहात्मने शुक्तिकारजितचितहारिणे।*
*मुक्तिदायकमुरारिपादयोः भक्तिसारमुनये नमो नमः॥*

एकत्र जातः श्रीकृष्णः अन्यत्र यथा संवर्धितः तथैवायं भक्तिसारः देवाङ्गनायां कनकाङ्ग्यां भार्गवमहर्षेः सञ्जातः अन्यत्र वेत्रसंपुटकृद्गृहे अवर्धत।

कदाचित् अत्रिभृगुवसिष्ठाङ्गिरःप्रभृतयः महर्षयः चतुर्मुखस्य सन्निधिं गत्वा, भुवि निवासाय उत्तमं क्षेत्रं जिज्ञासमानाः किं श्रेष्ठमिति पप्रच्छुः। तेषां वचः प्रतिगृह्य चतुर्मुखःविश्वकर्माणमाहूय सशैलार्णवकाननां भूमिं एकस्यां घटायां, विदेहभुवनक्षेत्रं (तिरुमलिशै) अन्यस्यां च निधाय तुलया तोलयामास। विदेहभुवनक्षेत्रस्यैव घटाभारेण अधो बभूव। पृथिव्यधिष्ठितघटा ऊर्ध्वं चोत्पपात। तदानीं चतुर्मुखः अस्य क्षेत्रस्य महीसारक्षेत्रमिति नामधेयं स्वयं ददौ। मद्रासनगरतः दशमैल् अभ्यन्तरे

मद्रास् बेगंलूर् मार्गे क्षेत्रमिदं वर्तते । ततः ऋषयः सर्वे महीसारे क्षेत्रे तपमाचरन्तः सुखेन स्थिताः । तस्मिन् महीसारक्षेत्रे मुनिश्रेष्ठः भार्गवमहर्षिः भगवन्तं सरमुद्दिश्य महत्तपः चचार। भार्गवस्य उग्रतपसा अखिलाः सुराः भीताः सन्तः, तत्तपोहरणार्थाय रूपलावण्यपेशलाः सुराङ्गनाः प्रेषयामासुः । वसन्तमन्मथोपेताः ताः महीसारक्षेत्रं समुपागताः। उत्तमं तपमाचरन्तं भार्गवमुनिं वीक्ष्य सर्वाः सुराङ्गनाः बिभ्युः। तन्मध्ये च अतिनिपुणा कनकाङ्गीति विश्रुता रत्नभूता सुराङ्गना साक्षाद्विश्वमोहिनी मन्मथस्य वसन्तस्य च साहाय्येन नृत्तगीताद्नैपुण्यैः भार्गवमहर्षि मोहयामास। विष्णुमाया विचित्रा खलु । वैष्णवी माया अजेया । न संशयः । स्थाणुभूतस्य योगिनः भार्गवस्याग्रे कनकाङ्गी महच्चित्रं श्रवणानन्ददायकं महद्गीतं अगायत । तेन गीतेन विस्मितः मुनीश्वरः लोचने उन्मील्य, अप्सरसमालोकय सन्तुषृवान् । कनकाङ्गी सविभ्रमं, साभिप्रायं वक्षःस्थलं प्रदर्शितवती । गीतेन नृत्यमानायाः कनकाङ्ग्याः सुवर्चसं मनोहरं लावण्यविभ्रमं चावलोक्य महायोगी भार्गवोऽपि मन्मथवशंगतः। सुकुमरी कनकाङ्गी मुनिना भार्गवेण रमयामास । भार्गवमहर्षिः वसन्तऋतौ चित्रवने वीचित्रमन्मथक्रीडैः कनकाङ्ग्या सार्थ वनराजिषु सञ्चरन्, तपोनियमान् विहाय कञ्चित्कालं रेमे। सा अप्सरसत्रलामा मुनेर्मनः रञ्जयन्ती यज्ञसाधितं स्वर्गसुखं यत् तत् प्रददौ ।

अनन्तरं भार्गवपत्नी सुन्दरी कनकाङ्गी सुवर्चसं भक्तिसारयोगीशं गर्भमाधत्त। विभवनाम संवत्सरे, पुष्यमासे, दशम्यां, कृष्णपक्षे तुला लग्ने गुरुवासरे मखानक्षत्रे भार्गवमहर्षेः कनकाङ्ग्यां महान् चक्रांशतः भत्किसारयोगी जज्ञे । अवयवरहितं मांसपिण्डाकृतिं तत् दृष्ट्वा कनकाङ्गी वेत्रवेण्वादिसंकुले वने निकुञ्जे विहाय स्वर्गं ययौ । तपस्संक्षयकारणात् लज्जितः भार्गवमहर्षिः अन्यद्वनमविशत् ।

अनन्तरं सः गर्भः सकालेन विभिद्य पेशीगर्ते गरुत्मानिवडिम्भरूपः क्षुधार्तः स्तन्याभिलाषेण निर्मानुषप्रदेशे स्वैरं व्यरोदीत् । लक्ष्मीकटाक्षवशतः भूदेवी तमवर्धयत् । भत्किसारं विलोक्य निर्हेतुककटाक्षतः, भक्तंवत्सलः भगवान् तत्रागत्य कृपया क्षुत्पिासे निवार्य, अपर्याप्तममृतं ददौ । एवं भगवता संबर्धितः भार्गवीयः भक्तिसारः ।

तिरुवालनं नाम कश्चित् वेत्रसंपुटकारकः वेत्रलतानयनाय तत्र गतः शिशोः रोदनध्वनि श्रुत्वा, उद्यद्भानुनिभं तं शिशुं दृष्ट्वा, सुप्रहर्षितः भक्तिसारं समादाय, स्वभार्यायाः पङ्कजसुन्दर्याख्यायाः हस्ते न्यस्तवान् । सा तु वन्ध्यापि अपत्यलाभात् अत्यन्तसंतुष्टा सती तस्मिन् पुत्रवात्सल्यं विश्वस्य पुपोष। प्रस्नुतपयोधरा पुत्रवत्सला

पङ्कजवल्ली प्रीत्या भक्तिसाराय पाययितुं स्तनं यदायतत तदायं स्तन्यादिभ्यो निवृत्तः भगवद्गुणानुभवधारकः मलमूत्रादिरहितः, त्यक्तवाग्व्यवहारः प्रवर्धमानसर्वाङ्गः उदितादित्यवत् दिने दिने सम्यक् अवर्धत ।

चरित्रमेतत् विचित्रम् अद्भुतं शिशोः प्रभावं श्रुत्वा, कश्चन शूद्रवृद्धः सन्तानहीनः ब्राह्मे मुहूर्ते शुद्धं गोदुग्धं क्वाथयित्वा शर्करादिपरिष्कृतमुष्णमानीय भार्यया सह शिशोः उपसमाधाय भक्त्या पीयतामिदं पयो दासेऽस्मिन् दयया इति बहुविधैः प्रार्थयामास । तेन एवं प्रार्थितः भक्तिसारः कृपावशात् पयः सम्यक् अपिबत् ।

साधवः भक्तिवश्याः खलु । एवं प्रर्थितः भक्तिसारः दिने दिने कञ्चित्कालं पयः परिपीय, तयोः वृद्धदम्पत्योः मनोभावं ज्ञात्वा, एकस्मिन् दिने तौ समाहूय मत्पीतशेषं यत्क्षीरं तदिदं युवां पिब, भवतोः अपत्यलाभो भविष्यति संशयः नास्तीत्युक्त्वा, वृद्धदम्पत्योः पयः प्रददौ । तत्क्षीरपानमात्रेण तौ वृद्धदम्पती संप्राप्तयौवनौ स्निग्धौ अमरौ बभूवतुः । ततः साध्वी सा सुन्दरी गर्भं धृत्वा दशमे मासे भगवद्भक्तिपारगं पुत्रं भक्तिसारकटाक्षेण प्रासूत । विदुरोपमं धीमन्तं महौजसं पुत्रं विलोक्य, संतुष्टः सः प्राज्ञः कणिकृष्ण इति ख्यातं मङ्गलं नाम चक्रे । सः कणिकृष्णः भक्तिसारार्द्रवीक्षणात् सकलाः विद्याः जग्राह । ततः भगवत्कविः अभूत् ।

कुलोचिताचारकलासु सक्तः महीसारपुरे शूर्पं विक्रीय योगी विचचार । वेत्रसंपुटकृद्गृहे आ सप्तवर्षं स्थित्वा, ऋषिपुत्रः भाक्तिसारः बाल्येन चतुरः तदा हरेः कृपया अन्नपानादिवर्जितः आवर्तत । ततः गृहात् विनिर्गत्य तत्र सञ्चरन् तीर्थयात्रपरः कञ्चित्कालमावर्तत । अनन्तरं महादाह्वयैः सर्वजगत्कारणभूतः श्रीमन्नारायण एवेति बोधितः सन् भक्तिसारः मोक्षप्रदाता, शुद्धसत्त्वगुणप्रधानः, परतत्त्वस्वरूपः श्रीमन्नारायण एवेति स एव सदा ध्येयः इति निर्धारितवान् । एवं शतसहस्राणि प्रमाणानि सतर्कसहितान्येव वादमुखेनैव अर्थसम्मतं प्रतिपाद्य, पराशरादिवत् सम्यक् तत्त्वनिर्णयमकरोत् । तेन छिन्नसंशयः संतुष्टः भक्तिसारः महदाह्वयस्य शिष्यत्व मङ्गीकृतवान् । महदाह्वयः तस्मै भक्तिसाराय विष्वक्सेनकृपावशात् तापपुण्ड्रादिपञ्चसंस्कारान् चकार । जगत्कारणं यत् तत्सर्वमुपदिश्य, परमात्मनः ज्ञानशक्त्यादिगुणान् दिव्यस्वरूपं, दिदव्यमङ्गलविग्रहं, किरीटनूपुरान्तादीनि दिव्यभूषणानि, शङ्खचक्राद्ययुधानि लक्ष्मीभूम्यादिभिः विराजमानं भगवन्तं श्रीमन्नारायणं नित्यकैङ्कर्यनिरतैः मुक्तैश्च सेवितं भोगभूत्याख्यं परमं पदं भक्तिसाराय साक्षात्कारमकल्पयत् ।

भक्तिसारः लोकशिक्षार्थं द्राविडभाषायां नारायणपरौ ग्रन्थौ चक्रे । महादाख्योपदेशतः सर्वशास्त्राणि विचार्य स्वमतस्थापनं चक्रे । श्रीमन्नारायण एव सदा ध्येयः । पद्मनाभः, पुण्डरीकाक्षः, सर्वव्यापकः, जगन्नायाकः, जयशीलः, लक्ष्मीपतिः विष्णु एव जगत्कारणभूतः । इत्येवंप्रकारेण निगमान्तशास्त्रनिर्णीतमर्थं तत्त्वार्थसारं ज्ञात्वा नान्मुगन् तिरुवन्दादि, तिरुच्चन्दविरुत्तम् इति षोडशाधिकद्विशतपाशुरैः दिव्यप्रबन्धद्वयं विरचितवान् ।

*मखायां मकरे मासे चक्रांशं भार्गवोद्भवम् ।*
*महीसारपुराधीशं भक्तिसारमहं भजे ।।*

**नान्मुगन् तिरुवन्दादि**

भगवत्कटाक्षलब्धपरमज्ञानसम्पन्नेषु दिव्यंसूरिषु चतुर्थः श्रीभक्तिसारः । तेषां दिव्यप्रबन्धः नान्मुगन् तिरुवन्दादि । अस्मिन् प्रबन्धे प्रथमपाशुरे नान्मुगन् इति पदेनारम्भः भवति । अतः नान्मुगन् तिरुवन्दादि इत्युच्यते । चतुर्थतिरुवन्दादि इत्यपि केचन वदन्ति । भगवन्निर्हेतुककटाक्षवीक्षणेन शेमुषीरूपभक्त्या, भगवत्साक्षात्कारं प्राप्य, साक्षात्कारानुभवपरीवाहरूपैः पाशुरैः परतत्त्वं श्रीमन्नारायण एवेति निर्धारितवन्तः । भगवदनुग्रहविशेषसमधिगतदिव्यज्ञानसंपन्नाः भक्तिसाराः परमात्मनः दिव्यात्मस्वरूपं, अनन्तकल्याणगुणान्, दिव्यमङ्गलविग्रहं, तन्निरन्तरानुभवभाग्यसम्पन्नान्, कैङ्कर्यलक्ष्मीविशिष्टनित्यसूरीन्, परमपदं लीलाविभूतिं च यथा क्रमेण सन्दृष्टवन्तः । चेतनेषु अधिकसङ्ख्याकाः रजस्तमोगुणवशाः सन्तः, देवतान्तरान् भजन्ते इति असह्यमानाः सन्तः,तान् सन्मार्गे प्रवर्तयितुं श्रीमन्नारायणस्य परत्वं संस्थाप्य, भगवत्प्रावण्यं प्रबोधयन्ति अस्मिन् प्रबन्धे । अस्मिन् प्रबन्धे ९६ पाशुराणि सन्ति ।

समस्तोत्पादकः श्रीमन्नारायणः विश्वसृष्टिकार्यनिर्वाहकं चतुर्मुखं स्वनाभिकमलात् उत्पादयामास । चतुर्मुखः संहारकर्तारं शुभकरं शिवम् उत्पादयामास । अतः श्रीमन्नारायणस्य परत्वं स्पष्टं भवति । श्रीमन्नारायणपरत्वोद्घाटनेन संसारनिवर्तकः स एवेति स्फष्टं भवति ।

*तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः ।*
*तत्त्वमेको महायोगी हरिर्नारायणः स्मृतः ।।*

इत्यादिभिः प्रमाणैः श्रीमन्नारायणः एक एव परतत्त्वमिति व्यासादीनामुक्तिः । तस्य महत्त्वं वाचामगोचरम् । भगवत्प्राप्तेः उपायाः बहवः अनुष्ठीयन्ते, तथापि तेषां सफलतायाः कारणभूता भगवत्कृपा एव ।

समस्तस्याद्वितीयकारणभूतः परमात्मा । तस्य निरन्तरप्रत्यक्षानुभवः नित्यसूरिणां भाग्यवशात्प्राप्तः । जलधिशयनं, सर्वेश्वरं क्षीरसागरे शेषशायिनं प्रलये वटपत्रशायिनं, श्रीरङ्गशायिनं च दृष्ट्वा, तस्य भोग्यतां जानामि ।

विष्णुपादोदकं शिरसि धृत्वा, शिवः धन्यो जातः । अखिलाण्डकोटि-ब्रह्माण्डनायकः सवेश्वरः श्रीमन्नारायण एव । तत्समानो वा,त्ततः अधिको वा नास्ति कुत्रापि । सर्वे शब्दाः परमात्मनः वाचकाः एव । सर्वशब्दवाच्यं परमात्मानम् उद्दिश्य सङ्ग्रहेण वदामि ।

हिरण्यकशिपुना सम्पादितान् वरान् अपि अतिक्रम्य, अघटितघटनासामर्थ्येन नखैः तं हत्वा, लोकोपकारं कृतवान् परमात्मा । विश्वस्य सृष्टिस्थितिसंहाराः परमात्मनः सङ्कल्पमात्रनिर्वर्तितक्रीडाविशेषाः । अन्तर्बहिश्च व्याप्य स्थितः सर्वात्मा परमात्मा ।

जैनाः अज्ञानिनः, बौद्धाः भ्रान्तिभाजः, शैवाः अल्पाः, सर्वगन्धः आश्चर्यगुणचेष्टितः, आश्रितवत्सलः सर्ववेदान्तसंस्तुतः रमारमणः । तं सर्वेश्वरं ये न भजन्ते ते सर्वेऽपि हीना एव ।

हे नारायण । अहं त्वदर्थं, त्वं मदर्थः । एतदन्वयं विधिनिर्मितम् । अहं शेषः भवान् शेषी । आवयोः शेषशेषि भावः अपृथक्सिद्धः । श्रीवैष्णवानां उपायः उपेयश्च परमात्मैव । चतुर्मुखः स्वनैच्यानुसन्धानं कुर्वन् वेदमन्त्रैः अखिलाण्डकोटि-ब्रह्मण्डानायकस्य श्रीचरणं स्वस्य कमण्डलोदकेन प्रक्षालनं कृतवान् । तन् जलमेव विष्णुपादोदकं गङ्गेति प्रसिद्धम् । तां गङ्गां शिरसि धृतवान् शिवः । ब्रह्मरुद्रादयः सर्वेऽपि श्रीमन्नारायणमेव यजन्ति । परमात्मनः दिव्यमङ्गलविग्रहदशंनानुभवः अस्माकं सुप्राप एव । तस्य निर्हेतुकपायाः वयं भाजनाः ।

भवतां सर्वेषां जिह्वाः परमात्मानं कीर्तयन्तु । नेत्राणि परमात्मनः दिव्यमङ्गलविग्रहं सन्दर्शयन्तु । श्रोत्रियाणि परमात्मनः गुणकीर्तनानि शुण्वन्तु । शिरांसि परमात्मनः श्रीचरणयोः सन्निधौ एव प्रणमन्तु । हस्तानि परमात्मानं अञ्जलिं समर्पयन्तु । उत्तुङ्गकिरीटधारी, तुलसीमालाघरश्च परमात्मा आश्रितवत्सलः ।

ये परमात्मानं न स्मरन्ति ते चतुर्विधयोनिषु पतन्ति, संसारचक्रे भ्रमन्ति। विष्णुभक्तिमहिम्ना गजेन्द्रस्यं मोक्षसाम्राज्यं सिद्धं खलु। अस्माकं सर्वेषामपि परमपुरुषार्थप्रदाता यथार्थोपायस्वरुपः, सर्वैः वेदैः जगत्कारणभूत इति कीर्तितः श्रीमन्नारायण एव।

लक्ष्मीवल्लभः श्रीमन्नारायणः भक्तं गजराजं नक्रात् ररक्ष। आश्रितवात्सल्यैक जलधिः, आर्तत्राणपरायणः परमात्मेति ज्ञात्वा, तमेव उपायरुपेण स्वीकृत्य नामानुसन्धानेन विमुक्ताः भवन्ति सज्जनाः। अज्ञानिनः दुर्जनाः नरकेषु पतन्ति।

महाभारते स्वश्रितजनरक्षणं बहुविधैः प्रदर्शितवान् परमात्मा श्रीकृष्णः। आश्रितानां पाण्डवानां रक्षणार्थं अद्भुतानि कार्याणि आचरितवान्। तेषु कार्येषु एकं सैन्धववधसंदर्भे चक्रेण सूर्यस्य आवरणम्।

पादेन विश्वं सर्वमाक्रम्य, प्रलये विश्वं सर्व स्वनाभौ निक्षित्य, वटपत्रे शेते परमात्मा श्रीमन्नारायणः इति भगवल्लीलावैभवं अगस्त्य, पुलस्त्य, दक्ष, मार्कण्डेयानामुपदिष्टवान् अमोघतपस्संपन्नः रुद्रः।

परमभक्तं प्रह्लादं हिंसितवन्तं कनककशिपुं आत्मनः शत्रुः इति परिगणय्य, नृसिंहावतारेण नखैः हतवान् परमात्मा। भगवद्भक्ताः ये परमात्मानं दृढाध्यवसायेन आश्रयन्ते ते भगवत्कृपया मुक्ताः भवन्ति। भगंवत्सेवया एव न, भगवदद्भक्तानां सेवया अपि मुक्तिर्भवतीति चरमोपायनिष्ठायाः प्रासिद्धलक्ष्याः शत्रुघ्नः, मधुरकविः, आन्ध्रपूर्णः इत्यादयः। अत्र स्मर्यते अयं श्लोकः -

***सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम्।***
***न संशयोऽस्ति तद्भक्तपरिचर्यारतात्मनाम्॥*** *इति॥*

राक्षसाः ब्रह्मरुद्रादीनुद्दिश्य तपमाचरन्ति। तपसः प्रसन्नाः ब्रह्मदयः अनालोचनेन वरान् प्रसादयन्ति। वरबलभुजबलदर्पिताः राक्षसाः सकललोकैः सह वरप्रदातॄन् देवान् अपि हिंसन्ति। तस्याः बाधायाः निवारणार्थं ते देवाः सर्वेऽपि श्रीमन्नारायणचरणौ शरणं प्रपद्यन्ते। अन्यथा शरणं नास्ति, श्रीमन्नारायणचरणौ एव शरणमिति परमात्मानमाश्रित्य, तस्यामोघसङ्कल्पशकत्या राक्षसेभ्यः मुक्ताः भवन्ति। अतः आश्रितसंरक्षकः मोक्षप्रदाता श्रीमन्नारायण एवेति स्पष्टं भवति।

अग्निः, अचलः दिशः चन्द्रः, सूर्यः, प्रजापतिः, पशुपतिः, देवश्रेष्ठाः

इत्यादीनां सर्वेषां सुस्थितेः मूलाधारभूता भगवत्कृपा एव । भगवत्कृपया एव भगवत्प्राप्तिर्भवति । आश्रितानां देवानां रक्षणार्थमेव त्रिविक्रमरूपेण बलीन्द्रं याचितवान् परमात्मा । स्वप्रयोजनार्थं न । अन्तर्बहिश्च व्याप्य स्थितं परमभोग्यं श्रीमन्नारायणमेव सदा स्मरामि, अन्यत्स्मरणं नास्ति ममेति स्पष्टं प्रकटितवन्तः भक्तिसाराः अस्मिन् प्रबन्धे ।

एकेन शरेण वालिनं हत्वा, वानरैः सेतुबन्धनं कारयित्वा, गर्वान्धं साधुजनकण्टकं रावणं हत्वा, महाद्भुतकार्याणि अनन्यसाध्यानि सुलभतया साधितवान् श्रीरामचन्द्रः । घोरविकृताकारं कुम्भकोणं एकेन शरेण हतवान् श्रीरामचन्द्रः ।

ब्रह्महत्यापापात् शङ्करं रक्षितवान् श्रीमन्नारायणः इति सर्वलोकप्रसिद्धमेव खलु । अतः तस्य देवदेवस्य भजनमेव अस्माकं शरणम्, उपायान्तरं नास्ति ।

श्रीरङ्गक्षेत्रे नागशयनः श्रीरङ्गनायकः, श्रीवेङ्कटाद्रिनिलयः श्रीनिवासः, गोष्ठीपुराधीशः, तिरुवल्लिक्केणिक्षेत्राधीशः पार्थसारथिः, कुंभकोणाधीशः, यथोक्तकारि सन्निधिः, तिरुवल्लूरु, पेर्नगर्, अंबिल् क्षीराब्धिक्षेत्राधिपतयः भक्तिसारैः सङ्कीर्तिताः । अधिकपाशुरेषु श्रीवेङ्कटाद्रिनिलयः श्रीवेङ्कटेश्वरः संस्तुतः । ब्रह्मरुद्रादयः सर्वेऽपि श्रीवेङ्कटरमणं संसेव्य स्वाधिकारेषु प्रवर्तन्ते । अनन्तकल्याणगुणैः निस्समाभ्यधिकः श्रीमन्नारायणः श्रीवेङ्कटाद्रौ विराजते । सर्वेषां जनानां नित्यसूरिणां ब्रह्मरुद्रादीनामपि आश्रयणीयः, सुखसन्तोषदायकः श्रीनिवास एव । दया क्षान्तिः, इत्यादयः परमात्मनः सौलभ्यसहजगुणाः श्रीवेङ्कटाचले एव अधिकतया गोचरन्ति । सर्वव्याधिनिवारकः श्रीवेङ्कटाद्रिनिलयः आश्रितजनवत्सलः । क्षीरसागरमथनसन्दर्भे श्रीकूर्मावतारेण, धन्वन्तरिरूपेण, अदृश्यशक्तिरूपेण सहायकः श्रीमहाविष्णुः एव अमृतकामधेनुकल्पवृक्षादीन् देवानां प्रसादितवान् । तस्य सर्वेश्वरस्य नामसङ्कीर्तनमेव वाग्जन्मसाफल्यम् । सर्वपापमृत्युदूरीकरणोपायः चरमश्लोक एवेति जानामि इति भक्तिसाराः प्रकटितवन्तः ।

लोकमोहनसर्वावयवसौन्दर्यनिधिः, सकृत्प्रपन्नजनतासंरक्षणैकव्रतः लक्ष्मीनित्ययोगविशिष्टः एव परमात्मा । रक्षकश्च । इतरे रक्षकाः न । वेदेषु यागेषु आरध्यदेवताः इत्युक्ताः अग्नीन्द्रवरुणादयः सर्वेऽपि परमात्मनः शरीरभूताः एव । तेषां सर्वेषमपि अन्तरात्मा अपहतपाप्मा परमात्मा श्रीमन्नारायण एव । क्षुद्रदेवाः अवान्तरसुखान् स्वर्गाद्यनुभवानेव दास्यन्ति । परमपुरुषार्थप्रदाता श्रीमन्नारायण एव ।

ब्रह्महत्यापापं विधूय वृषभवाहनं शङ्करं श्रीमहाविष्णुरेव रक्षितवान् । जीवात्मपरमात्नोः विद्यमाननिरुपाधिकसम्बन्धः स्वस्वामिभावसम्बन्धः । अतः रक्षकः परमात्मैवेति परमार्थं स्पष्टयन्ति भक्तिसाराः । मधुसूदन एव अस्माकं रक्षक इति दृढाध्यवसायेन विद्यामानानां भक्तानां मनोव्यथाः न संभवन्ति । तेषां हृदयेषु परमात्मा निर्हेतुककृपया स्वयमेव अन्तः स्थितः ।

रमाधिष्ठितवक्षसः, श्रीधरस्य, देवदेवस्य शीतलतुलसीमालधारणमेव प्रपन्नानां धारकम् । श्रीमन्नारायणः जगत्कारणभूतः परात्परः, आश्रितवत्सलः, सुन्दरमकरकुण्डलाञ्चितकर्णः । तस्य श्रीचरणयोः पुष्पसमर्पणेन, भजनेन, भगवन्नामानुसन्धानेन च सिद्धिर्भवति । अतः श्रीमन्नारायाणस्य भजनमेव श्रेयस्करम् । सर्वेश्वरस्य दिव्यनामानि ये अनुसन्धानं न कुर्वन्ति, ते देवान्तरभाजकेभ्यः श्रेष्टाः एव । सर्वेश्वरस्य नाम विस्मरणादपि देवतान्तरभजनं अधिकदोषकरं भवति । यथा गृहिणी पतिविषये उदासीना भवति ततः अधिकदोषः अन्यपुरुषस्य विषये प्रावण्यप्रदर्शनम् ।

सकलवेदसारार्थः सर्वेषां समाश्रयणीयः, तापहरः अनन्तनिधनः भगवद्विषय एव । भगवच्चरणाश्रयप्राप्तिः भगवदनुग्रहेणैव सिद्ध्यति । विविधावतारेषु परमात्मना प्रदशिर्शताः भगवल्लीलाः बहुत्र बहुविधैः बहुवारं प्रशंसिताः भक्तिसारैः अस्मिन् दिव्यप्रबन्धे ।

महाभारते गीतायां च भगवता उक्तः तत्त्वार्थः सारसङ्ग्रहरूपेण चरमश्लोके उक्तः । प्रपत्तिबोधकं चरमश्लोकार्थं ये न जानन्ति ते तत्त्वज्ञानशून्याः एव ।

कर्मज्ञानभाक्तियोगानां सफलीकरणाय अस्माकमावश्यकी भगवत्कृपा । भगवत्कृपा नास्ति चेत् उपायाः सफलाः न भवेयुः । सर्ववेदप्रतिपादितानि कर्माणि सर्वाणि श्रीमन्नारायणस्यानुग्रहेणैव फलन्ति । अतः श्रीमन्नारायणचरणावेव अस्माकं शरणम् । श्रीमन्नारायण एव अमोघोपाय इति मार्गान्तरं नास्तीति गीताचरमश्लोकार्थः । शाश्वतविरोधिनोः सर्पगरुडयोः मैत्रीं प्रसादितवान् दिव्यमङ्गलविग्रहलाञ्छितः सकृत्प्रपन्नजनतासंरक्षणैकव्रतः श्रीमन्नारायणः । अग्निवर्णजटाजूटधारी रुद्रः स्वयं श्रीमन्नारायणं स्तौति । अतः अहमपि सर्वदा श्रीवैकुण्ठनाथस्य श्रीचरणद्वयमेव स्मरामि, स्तौमीति स्पष्टं प्रकटितवन्तः भक्तिसाराः ।

साहित्यं, सङ्गीतं, इतिहासपुराणानि, अग्निः आकाशः, धर्मशास्त्रग्रन्थाः, उच्चारणानुच्चारणक्रमेण परम्परागताः वेदाश्च आश्चर्यकरसर्वशक्तियुक्तस्य परमात्मनः

सङ्कल्पसञ्जनिताः एव । परमात्मा अनन्तकल्याणगुणानिधिः । वयं दोषनिधयः । तथापि भगवत्कृपा अस्माकमुपरि वर्षति । अस्माकं पापानि निवारयति । परमात्मा वात्सल्यैकनिधिः खलु । श्रीमन्नारायणस्य नामसङ्कीर्तनेन भगवन्नामस्मारितानन्दपारवश्येन शङ्करः एव परवशो भवति । प्रत्यक्षसन्दर्शनेन कीदृशानन्दः स्यात् ।

जगत्कारणभूतस्य सर्वेश्वरस्य सततसंस्मरणेन हृदये परमात्मानं निधाय तदेव वैकुण्ठवासिनः स्थानमिति, वैकुण्ठप्राप्तिरेव मोक्षप्राप्तिरिति ज्ञातव्यम् । आनन्दतन्मयाः भगवद्भक्ताः सततभगवद्ध्यानेन, भगवद्भजनेन सर्वेभ्यः दुःखेभ्यः विमुक्ताः सन्तः भगवत्संश्लेषानन्दसागरे निमग्ना): भवन्ति । ब्रह्मरुद्रादीनामपि असाध्यं परमात्मनः वशीकरणं भगवन्नामसङ्कीर्तनाचार्याणामत्यन्तसुलभमित्युक्ते, भगवन्नाममहिमा कथमिति वर्णनीया । दुष्टशिक्षणं, शिष्टरक्षणं, सुवृष्टिः, सकालवृष्टिः, स्वर्गभोगफलप्रदानं, मातापिताबन्धुभिः क्रियमाणानि सत्फलकार्याणि इत्यादीनां सर्वेषमपि प्रधानकर्ता परमात्मैव । भगवद्भक्तानां स्वयमेव वशो भवति परमात्मा । तस्य औदार्यातिशयः अनिर्वचनीयः । भगवन्नामसङ्कीर्तनमेव मम नित्यकर्मानुष्ठानम् । तस्मिन् विषये एव कालःगच्छति, पर्याप्तं न भवति, इतरविषयाणामवकाश एव नास्तीति भगवन्नामसङ्कीर्तने आत्मनः प्रावण्यं प्रकटितवन्तः भक्तिसाराः ।

आश्रितजनसंरक्षणमेव धारकमिति, ध्यानशीलानां हृदयेषु नित्यवासः परमात्मा यादवान् इन्द्रस्य प्रलयात् रक्षितवान् । वैदिकमतप्रवर्तकः परमात्मा अपगतान् वेदान् पुनः चतुर्मुखाय प्रसादितवान् ब्रह्महत्यापापात् शिवं रक्षितवान् । विश्वं सर्वमपि प्रलयकाले स्वनाभौ निक्षिप्य रक्षितवान् । अतः सर्वेषमपि संरक्षकः परमात्मा श्रीमन्नारायण एव । अन्यः न । श्रीमन्नारायणस्य श्रीचरणावेव शरणमिति ये प्रपद्यन्ते ते सर्वेऽपि श्रीवैष्णवाः एव । श्रीमन्नारायणस्य परत्वं ज्ञातव्यम् । जीवानां नित्यधर्मस्य श्रीमन्नारायणदास्यस्य पारमार्थिकविच्छेदः नास्तीति ज्ञातव्यम् । अनन्तकल्यामगुणैः निस्समाभ्यधिकं सर्वस्वामिनम् आश्रितसंरक्षणदीक्षापरं परमात्मानं श्रीमन्नारायाणं सङ्कीर्तनीयमिति अभिरति कदापि न विस्मरामि । प रमभोग्यान् परमात्मनः स्वरूपस्वभावान् ये जानन्ति ते कदापि तं न त्यजन्ति ।

सर्वजगतः सृष्टिस्थितिलयानां कर्ता, ब्रह्मरुद्रादीनामपि आश्रयणीयः, रक्षकः श्रीमन्नारायण एवेति श्रीमन्नारायणस्य परत्वम् अस्मिन् प्रबन्धे बहुत्र बहुविधैः प्रतिपादितवन्तः भक्तिसाराः ।

*शक्तिपञ्चमयविग्रहात्मने शुक्तिकारजतचित्तहारिणे ।*
*मुक्तिदायकमुरारिपादयोः भक्तिसारमुनये नमो नमः ॥*

**तिरुच्चन्दविरुत्तम्**

श्रीभक्तिसारयोगीन्द्रैः अनुगृहीते दिव्यप्रबन्धद्वये द्वितीयोऽयं प्रबन्धः तिरुच्चन्तविरुत्तं नाम । अयं प्रबन्धः प्रथमसहस्रे षष्ठप्रबन्धत्वेन परिगण्यते । प्रथमादिपञ्चमान्ताः प्रबन्धास्तु तिरुप्पल्लाण्डु पेरियाळ्वार् तिरुमोलि, तिरुपपावै, नाच्चियारतिरुमोलि, पेरुमाल् तिरुमोलि इत्येते ।

दिव्यप्रबन्धस्यास्य तिरुच्चन्दविरुत्तमिति सञ्ज्ञा केन हेतुना प्रथिता इत्युक्ते उच्यते - संस्कृतभाषायां यथा स्रग्धरा, शार्दूलविक्रीडितम्, वसन्ततिलकम् इत्यीदनामभिः प्रसिद्धानि वृत्तानि सन्ति, तथा द्राविडभाषायामपि आशिरियविरुत्तम्, कलिविरुत्तम् इत्यादिनामभिः प्रसिद्धानि वृत्तानि सन्ति । सोऽयं प्रबन्धः छन्दवृत्तसमाह्वयवृत्तविशेषग्रथित इति हेतुना उपचारार्थकतिरुशब्दपुरस्कृतस्सन् तिरुच्चन्दविरुत्तमिति प्रसिद्धम् । आशिरियवृत्तविशेषः एषः कर्णश्राव्यतातिशययुक्तः छन्दोबन्धः छन्दोवृत्तमित्यभिधीयत इति परमार्थः । इतरप्रबन्धापेक्षया अस्य प्रबन्धस्य कर्णश्राव्यता अधिका, अध्यापकगोष्ठ्यामनुभवैकवेद्या ।

तत्त्वार्थप्रतिपादनपरेषु प्रबन्धेषु अयं दिव्यप्रबन्धः प्राथम्यमधिवहति । संश्लेषविश्लेषप्रकाशन् दूतप्रेषणादिरूपा वाग्विन्यासा अस्मिन् प्रबन्धे न सन्ति । अतिगहनवेदान्तार्थतत्त्वानामाविष्करणमेवात्र प्राधान्येन क्रियते । देवतान्तराणाम् अवरत्व प्रतिपादने, परदेवतापारमार्थ्यप्रकाशने च अस्य दिव्यसूरिवरस्य अधिकश्रद्धा अस्ति । दिव्यप्रबन्धद्वितयेऽपि सा श्रद्धा विशेषतः प्रकाशते । किञ्च भगवतो श्रीमतो नारायणस्य सर्वान्तर्यामित्वानुसन्धाने अस्य दिव्यसूरेः उत्साहः अस्मिन् दिव्यप्रबन्धे विशेषतः प्रकाशते ।

भगवतः दिव्यात्मस्वरूपं, ज्ञानशक्तिमुखानन्तसद्गुणगणान् तत्परीवाहरूपान्, विविधानवतारान् अवतारचेष्टाविशेषान्, दिव्यमङ्गलविग्रहं, दिव्यभूषणदिव्यायुधयोगं, दिव्यमहिषीजनसमन्वयं, परिजनपरिबर्हवैशिष्ट्यम्, अन्यदन्यच्च साक्षात्कृत्य, अनुभूय तादृशानुभवपरीवाहात्मना प्रादुर्भावितः एषः दिव्यप्रबन्धः ।

कर्णश्राव्यं, छन्दोबन्धविशेषं शन्दविरुत्तपाशुरमयमिति द्राविडाः कथयन्ति । एतत्प्रबन्धप्रणेता भक्तिसारमुनीन्द्रः नानादर्शनेषु प्रविश्य, सकलदर्शनसार-तत्त्वविदामग्रणीरासीदिति, अन्ततः नारायणपरत्वनिर्धारणेन सुरभिहृदय आसीदिति, नारायणपरत्वप्रतिपादने एकस्मिन्नेव असाधारणप्रज्ञाविभूषितहृदयश्चेति सुप्रसिद्धमेतत् । अयं दिव्यप्रबन्धः श्रीमन्नारायणपरत्वप्रतिपादने विशेषतः प्राधान्यं वहति । भगवतः स्वरूपरूपगुणविभूतीनां यथायथं प्रतिपादने प्रावण्यशाली सोऽयं सूरिवरः एतस्मिन् दिव्यप्रबन्धे भगवत्स्वरूपादिकमतितरां वैलक्षण्येन प्रतिपादयति । परव्यूहविभवान्तर्याम्यर्चावताररूपेण पञ्चधा अवस्थितस्य भगवतः अर्चावतारे प्रावण्यं सर्वेषामपि दिव्यसूरिणां समानम् । अस्य सूरिवरस्य तु अन्तर्यामिरूपे विशिष्य प्रावण्यं प्रथते । तच्च अस्मिन् दिव्यप्रबन्धे बहुत्र विशदं भवति ।

प्रथमपाशुरे एवं स्तौति - हे भगवान् ! पृथिवीनिष्ठगन्ध, रस, रूप, स्पर्श, शब्दपञ्चकात्मत्वम्, सलिलनिष्ठरस, रूप, शब्द, स्पर्शगुणचतुष्टयात्मकम्, तेजोनिष्ठरूप, स्पर्श, शब्दगुणत्रितयात्मकम्, वायुनिष्ठस्पर्शशब्दोभयात्मकम्, व्योमनिष्ठशब्दगुणात्मकम् परस्परविलक्षणदेवादिपदार्थन्तरात्मानं च त्वाम् स्वप्रयत्नेन विचिन्त्य, कः विज्ञातुं प्रभवति ?

पञ्चभूतानां तद्गुणानां च निर्वाहकः भगवानेव । भगवतः भूतपञ्चकान्तरात्मतया अवस्थितिः अत्रानुसन्धीयते । अस्य पाशुरस्य तत्त्वार्थं सम्यक्विवृतं व्याख्यासु । अत्र किञ्चिदुच्यते । पृथिव्याः गन्धगुणात्मकत्वम्, अपां रसगुणात्मकत्वम्, अग्नेः रुपगुणात्मकत्वम्, वायोः स्पर्शगुणात्मकत्वम्, आकाशस्य शब्दगुणात्मकत्वं च शास्त्रविदां व्यवहारे प्रथते । तथापि अत्र पृथिव्याः पञ्चगुणाश्रयत्वमम्, अपां गुणचलतुष्टयाश्रयत्वम्, अग्नेः गुणत्रितयाश्रयत्वम्, वायोः गुणद्वितयाश्रयत्वम्, चाभिधीयते । तदिदं कथमिति चेत् अवधेयम् । काकणगुणाः कार्ये सङ्क्रामन्ति इति न्यायतः इदमभिधीयते । तैत्तिरीयोपनिषदि आकाशाद्वायुः, वायोरग्निः, अग्नेरापः अद्भ्यः पृथिवी इत्याम्नायते । आकाशाद्वायोरुत्पत्तिः, वायोः अग्नेरुत्पत्तिः, अग्नेः अपामुत्पत्तिः, अद्भ्यः पृथिव्याः उत्पत्तिः इति एषः क्रमः अत्र अभिहितः । आकाशस्तावत् शब्दगुणकोऽवतिष्ठते । आकाशादुत्पद्यमानो वायुः स्वकीयगुणभूतस्पर्शेन सह स्वकारणव्योमगुणभूतशब्दमपि बिभर्तीति तस्य गुणद्वयाश्रयत्वमुपपन्नम् । अथ वायोरुत्पद्यमानं तेजः स्वकीयगुणभूतरूपेण सह स्वकारणभूतवायुनिष्ठगुणाद्वितयमपि बिभर्तीति तस्य गुर्णात्रितयाश्रयत्वमुपपन्नम् । अथ

तेजसः उत्पद्यमानं सलिलं स्वकीयगुणभूतरसेन सह स्वकारणभूततेजोंनिष्ठगुणत्रितय-मपि बिभर्तीति तस्य. गुणचतुष्टयाश्रयत्वमुपपन्नम्। अथ च सलिलादुत्पद्यमाना पृथिवी स्वकीयगुणभूतगन्धेन सह स्वकारणभूतसलिलनिष्ठगुणचतुष्टयमपि बिभर्तीति तस्याः गुणपञ्चकाश्रयत्वमुपपन्नम्। यद्यपि तन्मात्रात् तन्मात्रोत्पत्तिः भूतात् मात्रोत्पत्तिः इत्येवं प्रकारान्तराण्यपि सन्ति। अथ च पञ्चीकरणप्रक्रियया पञ्चस्वपि भूतेषु पञ्चानामपि गुणानां न्यूनातिरिक्तभावेन सद्भावप्रकारश्चास्ति, तथापिआकाशात् वायुः इत्युदाहृतश्रुतिछायया अत्र अनुगृहीतमिति वेदितव्यम्। सैषा प्रक्रिया श्रीविष्णुपुराणेऽपि प्रथमांशे द्वितीयाध्याये -

*आकाशवायुतेजांसि सलिलं पृथिवी तथा।*
*शब्दादिभिर्गुणैर्ब्रह्मन् संयुतान्युत्तरोत्तरैः॥*

इत्यस्मिन् श्लोके प्रथिता।

भूम्यां शब्दस्पर्शरूपरसगन्धाः अप्सु शब्दस्पर्शरूपरसाः तेजसि शब्दस्पर्शरूपाणि, वायौ शब्दस्पर्शौ, आकाशे शब्दः एकः इत्युक्तं भवति। ननु अस्तु नाम एवम्। इदानीमत्र एतदभिधानं किमर्थमिति चेत्, भूतानामिव भूतगुणानामपि भगवानेव नियामक इति कथनमुखेन कश्चन प्रभावातिशयः भगवतः प्रपञ्चितो भवतीति वेदितव्यम्।

द्वितीयपाशुरे एवं स्तौति- अध्ययनाध्यापन, यजन, याजन, दान, प्रतिग्रहरूपषट्कर्मनिर्वाहक! षट्कर्मानुष्ठानौपयिकवसन्त, ग्रीष्म, वर्ष, शरत्, हेमन्त, शिशिररूपषड्ढुतुनिर्वाहक! आग्नेयाग्निष्टोमीयोपांशुयाज, ऐन्द्रदधि, ऐन्द्रंपयः, ऐन्द्राग्निः इति यज्ञ षट्कसमाराध्य! देवयज्ञ, पितृयज्ञ, भूतयज्ञ, मनुष्ययज्ञ, ब्रह्मयज्ञ रूपपञ्चमहा-यज्ञाराध्य! प्राण, अपान, व्यान, उदान, समान इति पञ्चहुतिसमाराध्य! गार्हपत्य आहवनय, दक्षिण, सभ्य, आवपथ्य इति पञ्चाग्निशरीरक! अतिशयितज्ञानविरक्तिरूपद्वितयानुग्राहक! परभक्ति, परज्ञान, परमभक्तिरूप-त्रितयप्रदायक! विवेक, विमोक, अभ्यास, क्रिया, कल्याण, अनवसाद, अनुद्धर्ष इति सप्तकनिर्वाहक! ज्ञानबलैश्वर्यवीर्य शक्तितेज इति षाड्गुण्यनिर्वाहक! अपहतपात्मत्व, विजरत्व, विमृत्युत्व, विशोकत्व, विजिघत्सुत्व, अपिपासुत्व, सत्यकामत्व, सत्यसङ्कल्पत्वरूपगुणाष्टकप्रचुर! बाह्यकुदृष्ट्यादि-नानासमयप्रवर्तक, यथार्थज्ञानिनां यथार्थभूत, अयथार्थज्ञानिनाममयथार्थभूत! स्पर्शशब्दरूपरसगन्ध

इति विषयपञ्चकप्रवर्तक ! गोपालसजातीयतया अवतीर्णः भगवन् ! भवन्तं परिच्छेतुं के वा प्रभवन्ति ? केऽपि न प्रभवन्तीत्यर्थः ।

हे भूतपञ्चकात्मन् ! ज्ञनेन्द्रियपञ्चकात्मन् ! कमेन्द्रियपञ्चकात्मन् ! पञ्चतन्मात्रात्मन् ! प्रकृतिमहदहङ्कारात्मन्, मनोनिर्वाहक ! चेतनानामप्यन्तर्यामिन् ! आदिदेव ! श्रीवैकुण्ठाधिप ! अप्राकृतपञ्चशक्ति, पञ्चज्ञानेन्द्रिय, पञ्चकर्मेन्द्रियनिर्वाहक ! शब्दादिभोग्यपञ्चकस्वरूप ! भोगस्थानभोगोपकरण ! वैकुण्ठमुनिमुक्तरूपपञ्चकनियामक ! परमपुरुष ! एवं भूतं भवन्तं ज्ञातुं के प्रभावन्ति । केऽपि न प्रभवन्तीत्यर्थः ।

त्रयस्त्रिंशतो हलक्षराणां, षोडशानामजक्षराणां, ळकारादीनां पञ्चाक्षाराणां च निर्वाहक ! ऋग्यजुस्सामाख्यवेदत्रयस्वरूप ! द्वादशाक्षरीप्रतिपाद्य ! वर्णत्रयात्मकप्रणवप्रकाशमानज्योतिर्मय ! शाश्वतप्रदीपायित ! अकारवाच्य ! अस्मन्निरुपाधिकशेषिन् ! भगवन् ! मदीयं सर्वं भरं स्वस्मिन्नावाह्य हृदि मम प्रविष्टवानसि, हन्त किमिदं सौशील्यम् ?

स्थावरजङ्गमात्मकेषु उच्चावचेषु अशेषेष्वपि शरीरेषु आत्मत्वेन अवस्थाय सर्वत्रापि परसिमाप्य, वर्तमान भो भगवन्, तावकीनस्वभाव एवंविध इति कालत्रितयेऽपि न कस्यापि परिच्छेत्तुं शक्यम् जगदादिकारणभूत स्वामिन् पुरा निजनाभीनलिने समुत्पादितचतर्मुखः आदिदेवः खलु भवान् ।

भोः फणिपतिधृतदिव्यमङ्गलविग्रह ! स्वर्गलोकधारकं मेरुगिरिं, दिग्दन्तिधृतामवनीं, परमं पदं, व्योमप्रवाहिनीं, नभःस्थलव्याप्तं मेघमण्डलं, वैश्वानराग्निं, पञ्चवृत्तिप्राणविशेषं च सुष्ठु परिपालयन् वर्तसे । एकमेवाद्वितीयं वस्तु समस्तचराचरधारकं विराजत इत्युपनिषद्भिः आम्नातः प्रभावः त्वय्येव प्रतिष्ठितः खलु ।

ब्रह्मरुद्रयोः शरीरित्वेन नियामकतया अवस्थितप्रधानमूर्ते ! विमतानां स्वस्वरूप याथात्म्यप्रकाशनविरहेण तमोऽभिवर्धक ! भक्तानां तत्प्रकाशनेन समीचीनज्ञानविकासकारिन् ! भूतभविष्यद्वर्तमानाख्यकालत्रयप्रवर्तक ! आहवनीय-गार्हपत्य-दक्षिणाग्नि समाख्याग्नित्रितयसमाराध्य ! गोपालसजातीयतया अवतीर्णदिव्याद्भुतभगवन् ! ललाटलोचनोऽपि त्वां स्तोतुं न क्षमः ।

हे आदिकालनिर्वाहक ! जगत्सृष्ट्यादिकारकाणां प्रजापतिप्रभृतीनाममर्त्यनां,

दिव्ये धामनि विराजमानानां नित्यसूरिणां च नियामकः त्वमेव । जगदधिपतित्वेन प्रथामश्नुवानानां ब्रह्मादीनामपि अवसानकालं त्वं शास्त्रेषु प्रकाशयामासिथ । ईदृशं त्वां के वा परिच्छेतुं प्रभावितारः ?

किञ्जल्काञ्चितवन्यकुसुमालङ्कृतकपर्दभरतकपर्दिवन्दितपादपद्म । विमलस्वरूपभगवन्, विविधोत्कर्षशालि, वेदघनैर्वैदिकैः सामगानोज्ज्वलयज्ञप्रवर्तकैः यायजूकैः शास्त्रीयश्रवणमननादिनिरतैर्महात्मभिश्च नियतमभिवन्दनीयता सत्यं परत्वं त्वय्येव प्रतिष्ठिता ।

भगवन् ! यथा तरङ्गमालिकासङ्कुले महति पयोनिधौ ऊर्मिमालास्समुद्भूय पुनः तत्रैव लीयन्ते, तथा स्थावरजङ्गमात्मकं प्रपञ्चजातमशेषं त्वय्येव जनित्वा, त्वय्येव लीयते इत्याम्नातः प्रभावविशेषः त्वदैकान्तिकः खलु ।

भगवन् । वेदान्तशास्त्रमुखेन परमैकान्तिनां सम्बन्धज्ञापकः त्वमेव । कतिपयेषु पुराणेषु आश्रयणीयतया प्रतिपाद्यमानानां देवानाम् अन्तरात्मा च त्वमेव । वेदैरपि अपरिच्छेद्यं तेज इति प्रतिपादितं वस्तु च त्वमेवासि । वेदोक्तरीत्या जगत्सृष्ट्यर्थं भवता सृष्टानां ब्रह्मादीनां संक्षिप्ताया अपि भवतः कल्याणगुणान् वर्णयितुं सामर्थ्यं नास्ति । तादृशानन्तकल्याणगुणात्मकः त्वमेवासि ।

भगवन् । भुवनान्यखिलानि भवानेव सृजति । नित्यनैमित्तिकादिप्रलयापत्सु तानि सर्वाणि भवानेव जठरे निधाय अभिरक्षसि । सर्वजगच्छरीरकोऽपि भवान् असाधारणविग्रहविशिष्टस्सन् व्यावृतो विराजसे । त्वदीयानद्भुतप्रकारान् कः जानाति ?

भवान् एवं विधोऽसि इति निष्कृष्य वक्तुमनर्होऽस्मि । त्वद्विषयकसर्वोदन्तवेदिनः तत्त्वज्ञाः महान्तः कृशोदर्या नीलादेव्या वल्लभं त्वामाहुः । त्वदीयं सर्वविलक्षणदिव्यमङ्गलविग्रहयाथात्म्यं, दिव्यनामानि दिव्यस्थलानि विग्रहपरिग्रहनिदानं च त्वत्कृपा भूम्ना केचिदेव विज्ञातुमीशते । त्वत्कृपाविदूरगास्तु चिन्तयितुमपि नार्हन्ति ।

संसारिणां मलीयसदेहनिवर्तनपूर्वकम् अप्राकृतदेहमनुगृण्हन् भो भगवन्, तुलसीस्रगलङ्कृत, गभीरे पारावारे दिव्यकूर्मरूपितया शयितदेवाधिदेव, भवदीयशुभनामवाच्यानि गुणचेष्टितादीनि विविच्य वर्णयितुं वयमसमर्थाः स्मः । सामवेदगीतस्वरूपी चक्रपाणिश्च भवानेव खलु ।

वेदाङ्गभूतशीक्षादिषट्कप्रवर्तक, अङ्गिभूतवेदचतुष्टयनिर्वाहक, तेषु साङ्गेषु वेदेषु सुप्रतिष्ठितस्वरूपस्वभाव, महाब्धौ रक्तविलोचनफणिफणशायिन्, सम्पत्समृद्ध ! गुणगणाढ्य, कृतयुगे शङ्खसमानवर्णतया अवतीर्ण भगवन्, शार्ङ्गपाणिः खलु भवान् ।

मुख्यतां प्राप्तवत्यां देवजात्यां, क्षुद्रे स्थावरगणे मिश्रयोनिभूतमनुष्यतिर्यग्जातौ च अप्राकृततेजसा सह प्रादुर्भूय स्थावराणामपि वस्तूनामनुभवयोग्यतया यद्यपि तिष्ठसि, तथापि नित्यविपुलवेदादिशास्त्रसमूहा अभिधानवृत्या तात्पर्यवृत्या च त्वदीयं प्रभावं मनसाऽपि ध्यातुमशक्तास्सन्तः पर्वतसमूहवत् अपरिच्छेद्यतां केवलमनवबोधयन्तीति यत् तदिदं तव महिमावैजात्यम् ।

सर्वकारणभूत ! भगवन् ! परमपदनिलयः परवासुदेवमूर्तिः सङ्कर्षणप्रद्युम्नानिरुद्धमूर्तिः, प्रधानपुरुषाव्यक्तकालशरीरकः, विभवरूपविलक्षण-भोगमूर्तिः, रामो विग्रहवान् धर्मः कृष्णं धर्मं सनातनम् इत्युक्तरीत्या रामकृष्णात्मकधर्ममूर्तिः, एवमसङ्ख्येयमूर्तिस्सन् क्षीरार्णवे भोगिभोगशयनीयशायी च सन् अर्चामूर्तिश्च विराजसे । इदं सर्वं अस्माकमप्रमेयम् ।

भगवन्, जलधिश्यामलवर्ण, विषाढ्याद्वदनसहस्रान्नयनद्विसहस्राच्च सुतीक्ष्ण मग्निं वमति । निरन्तरत्वदनुभवशालिनि निरवधिकज्योतिषि वितानरूपतेजः-पुञ्जसम्भृते, शयनरूपिणि शेषे अधिजलनिधि यच्छेते भवान् तदिदमस्माकमप्रमेयम् ।

भास्वरचक्रायुध ! भगवन् ! हंसरूपी सन् चतुरोऽपि वेदानुपादिशः । अथ च बकासुरवक्त्रं विदारयामासिथ । पक्षिराजं ध्वजत्वेन स्वीचकर्थ । तमेव वाहनत्वेन च स्वीकृतवान् । एवं बहुमुखमाश्रितरक्षणं कुर्वन्नापि भवान् जलनिधौ शेषमधिशयानस्सन् इतोऽपि रक्षणाचिन्तां कलयति । किमेतत् ।

हे भगवन् । प्रागर्णवे फणिपतिं तल्पतया निर्भयं स्वीकृत्य स्तुत्यभिमुखैः देवैः स्तुतस्सन् शयनं यदकरोत्, क्षीरसागरमथनसन्दर्भे जलचरकमठरूपमास्थितवन् केशव इति अविवेकजनपरिहासपात्रं शयनं यदकरोः तदिदमुभयमधिकृत्य तत्त्वं मह्यमुदीरय । अत्र परत्वशाली परमात्मैव नीचत्वमपि स्वीकरोति इति भावः ।

हे श्रीरङ्गनाथ ! पुरा शरणागतानां सुराणां प्रार्थनां श्रुत्वा, सागरस्य कालुष्यं समुत्पाद्य, मन्दराद्रिप्ररूढमहीरुहाणां शैथिल्यं चोत्पाद्य, वासुकिनागं रज्जुतया परिवेष्य, यदा त्वं मथनमकरोः तदा शूरत्वेन प्रथिताः पार्श्वस्थिताः देवासुरप्रभृतयः किमकुर्वत ? कथय ।

मधुपमुखरशिशिरतुलसीस्रगलङ्कृत ! परमसौन्दर्यनिधिसरसिजवासिनीसनाथवक्षस्क, भूमिवल्लभ ! भूतभविष्यद्वर्तमानात्मककालत्रितयेऽपि यतो हि त्वमप्रच्युत रक्षादीक्षः ततः त्रैलोक्यमपि हृदि निगूह्य वटदलमधिशयितवान् मूलपुरुषः खलु भवान् ।

पाण्डुरविग्रहनरहरिवर्ष्मणा अवतीर्य, वक्रदंष्ट्रस्य हिरण्यकशिपोः वक्षसि पाणितलनखाग्रप्रवेशनपटो ! भगवन् ! अप्रतिमवैभवशालिचतुर्वेदविभासुरजिह्वाग्रैः श्रोत्रियैः सदुपायपरिग्रहपूर्वकं वन्दनीयः क्षीराब्धौ शयानः पद्मनाभश्च खलु भवान् ।

गङ्गातीर्थसमुत्पादकपादारविन्द ! पञ्चायुधीसनाथ ! चतुर्भुज ! नरसिंहमूर्ते ! देवदेव ! मधुस्यन्दिसरसीरुहवासिनीनित्यसंश्लेषास्पदवक्षः स्थल ! अर्णवसवर्ण ! भगवन् ! जयीभव ! विजयी भव !

ब्रह्मरुद्रवरबलगर्वितस्य भयानकदंष्ट्रस्य हिरण्यकशिपोः उरसि करं विन्यस्य नखानि निखाय तं हतवान् भवान् । एतादृशप्रभावशाली त्वं कदाचित् याचकश्च भवसि । आः किमेतदिन्द्रियजालम् ? याञ्चालब्धां जगतीं कदाचित्, उदरे निगूढं निदधासि । भगवन् ! तव सङ्कल्पशक्तिं को वा अवगन्तुं शक्यः ?

स्त्रीपुंसोभयजातिप्रवर्तक ! क्लीबजातेरपि प्रवर्तक ! निरुक्तजातित्रयमध्ये अत्यन्तमभ्यर्हितवस्तुभूत ! रसशब्दस्पर्शादिविषयनियामक ! गोवर्गरक्षणनिरतगोपालजातीय ! नास्तिकानामसद्भूत आस्तिकानां सद्भूत ! भूमिभिक्षुक ! भिक्षुवर्ष्मणा महाबलिसविधे प्रच्छन्नगत्वर ! कृत्रिमपटो, हरे ! त्वां परिच्छेत्तुं कः समर्थः ?

विभुभूतां मूलप्रकृतिं स्वसङ्कल्पैकदेशवशंवदां कर्तुं समर्थ, तोजमय, स्वयं प्रकाशजीवात्मशरीरक ! वेदानामपि वैदेशिके दिव्ये धाम्नि नित्यवास्तव्य ! हेयप्रत्यनीक ! सर्वेश्वर ! अप्रमेयाश्चर्यशक्तियुक्तवामनमूर्तिस्सन् भिक्षुको भूत्वा, यत्त्वं त्रैलोक्यमाक्रान्तवानसि तादृशसामर्थ्यं कस्यापि नास्ति खलु ।

अण्डकारणभूतमेकार्णवमुत्पाद्य, अनन्तरं भूमिं विसृज्य, भुवो जातां विपदां वराहवपुषा च व्युदस्यसिस्म । संवर्तसमये भुवं निगीर्य ततः परम् उद्गिरसि स्म । समयविशेषे जलधौ सेतुं निबध्य, तत्रैव जलधौ शयनं मथनं च विरचयसि स्म । भगवन् ! विविधायुधभासुरबाहो । युद्धोन्मुखमालिसुमालिप्रमुखयातुधानां मृत्युमुख प्रवेशनाय हेतिगणं प्रेरयसि स्म ।

नाथ ! ज्ञानस्वरूपिन् ! भवान् परात्परः । श्रिया नित्यसंश्लिष्टवक्षोऽसि । जलधौ योगनिद्रामुद्राकृदसि । अत्यन्तहेयमनुष्यजातावपि जायसे । भगवन् ! भवदनुग्रहप्रकारान् न कोऽपि विज्ञातुमीष्टे ।

ऊर्ध्वलोकस्थान् सुरान्, भूतलस्थान् नरान्, सप्तकुलाचलान् सप्तसागरांश्च जठरे निधाय वटदलमधिशयितवान्। पुण्डरीकसवर्णदिव्यावयव ! मधुभरितशिशिर-सुरभितुलसीस्रग्विभूषित ! कुब्जावक्रभावनिरासको जैत्रकोदण्डपाणिः खलु भवान् ।

कालनेमिनामकदैत्यमृत्यो ! भगवन् ! असंख्येयकीर्तिमूर्ते ! आश्चर्यशील ! "सागरं शोषयिष्यमी" ति अमर्षेण महता नम्रितशार्ङ्गमहावीर ! स्वाश्रितभक्तवच्छानुगुणं मुक्तिप्रदानशील ! जयी भव विजयी भव । विजयी भव ।

भगवन् ! वानरवीरसेनाभिस्सह उत्तरङ्गसागरोपरि गत्वा दारुणान् सायकान् प्रयुज्य, लङ्कानिलयरावणादिराक्षसमारणं कृतवान् खलु भवान् । याच्ञामात्रेण भूमिदानं कृतवति महाबलौ निर्घृणतां प्रदर्श्य, विक्रम्य, लोकानशेषान् पादपद्मतः स्वायत्तीकृतवान् खलु भवान् ।

भगवन् ! विद्युत्सन्निभदशनश्रेणिभीषणदशाननहननाय शरानाशीविषोपमान् प्रयुज्य, अथ तदनुजे विभीषणे अकम्पामनुकम्पामारचय्य, साम्राज्यधुरं तस्मिन्निक्षिप्तवान् । परमसुन्दर्या मधुरवाण्या मुग्धायाः नीलादेव्याः वल्लभ ! हरे ! नित्यसिद्धकल्याणगुणशाली रुक्माभदिव्यविग्रहः पुण्डरीकाक्षः त्वमेव ।

उपादानकारणं, निमित्तकारणं, सहकारिकारणमित्युच्यमानं त्रिविधमपि कारणं जगतः त्वमेव भवसि । अण्डान्तर्वर्ति समस्तवस्तुजातनिर्वाहकश्च त्वमेवासि । निष्कृष्टपरमतत्त्वं त्वमेव भवसि । अनन्याधीनस्वयंप्रकाशविशिष्टोऽसि । वेदात्मा, सर्वयज्ञाराध्यः, उभयविभूतिनायकः, सर्वकारणविभूतिश्च सन् भवान् गोपजन्मा संवृत्त इति यत्तदिदमद्भुतादप्यद्भुतमहो ।

अस्मदीश्वर ! भगवन् ! चक्रधरः परमपुरुषोऽपि सन् भवान् जलचरमत्स्यकूर्माकृतिर्भूत्वा, तत्राप्यतिशयमेव अधिगतवान् । आश्रितवात्सल्यं च परममाविष्कृतवान् । अथ च वल्लीतुल्यावलग्नशालिन्याः गोपाङ्गनायाः यशोदायाः सुतो भूत्वाऽपि अप्रच्युतसर्वस्वामिभावो विराजसे । किमिदमद्भुतम् ?

हिरण्मयभूषणभूषितायाः यशोदायाः स्तनन्धयो भूत्वा, पादक्षेपेण शकटमुपमर्द्य, बालारिष्टजनकपक्षिविशेषस्वरूपिण्याः पूतनायाश्च

विषदुग्धस्तन्यपानेन तां पञ्चतां प्रापय्य, हाटकमयकरवलशालिनीनां वल्लवीनामधरसुधामास्वादितवानसि, किमेतत् ?

यशोदास्तन्यपायिन् ! नवनीतोपभोगनिरत ! पूतनास्तन्यपानसमुत्सुक ! कल्पान्ते महीनिगरणनिपुणवराहरूपेणावतीर्ण ! परिगृहीतवामनमूर्ते ! भगवन् ! शलाटुभरितसमुत्तुङ्गकपित्थानोकहसमुत्थफलोपमर्दिनम् असुरावेशविशिष्ट-कुन्दमहीरुहभञ्जनदक्षिणं वाजिवेषधरकेशिदैत्यनिषूदननिपुणकरतलं च त्वामामनन्ति कवयः कृष्णम् ।

कंसप्रेरितमत्तवारणमारणप्रवीण ! यमुनाह्रदे कालियविषधरमस्तकमण्डल-कृतनिस्तुलनर्तन ! नाथ ! कुम्भनर्तनतत्पर ! कालमेघसवर्ण ! सुभगतुलसीमालालङ्कृत-वक्षस्क ! कालनेमिकाल ! भगवन् ! जयी भव विजयी भव !

मन्दराद्रिणा जलनिधिं कलुषीचकर्थ । महीधरैः जलनिधौ सेतुं बबन्धिथ । जलदुर्गपरीतां शैलमयप्राकारपरिवेष्टितां तङ्कापुरीं विध्वंसयामासिथ । गोवर्धनाद्रिमुद्धृत्य, महावृष्टिविपन्निवारणमारचयामासिथ । एवंविधो भवान् भगवन् । कालमेघनिभदिव्यगात्रः सन् मादृशां मनो हरति ।

भगवन् ! गजेन्द्रं ररक्षिथ । गोपालकुमारस्सन् कुवलयापीडकरीन्द्रं जघन्थ । गाः चारयामासिथ । गव्यमासिथ । अद्रेश्छत्रीकरणेन गाः पालयामासिथ । अञ्जनालङ्कृतदृशो नीलायाः कृते तत्पुरतः सप्तर्षभौद्धत्यमाचकर्थ । किमिदमद्भुतचेष्टितबृन्दम् ?

अयि भोः ! आश्चर्यभूत ! भगवन् ! गोपालबालो भूत्वा, गोपालबालिकायाः, नीलादेव्याः संश्लेषमकामयथाः । दिव्येषु भौमेषु च महामतिषु को वा भवन्तं यथायथं वेद ? सत्यं नैकोऽपि वेद । इदमवेदनं न तावत् प्रकृतिप्रयुक्तेन आज्ञानेन । स्वतस्सर्वज्ञानामप्यहो तव स्वरूपम् । आस्तामिदम् । स्वाराधनोपकरणभूतकर-चरणाद्यवयववितरणे त्वया कृतेऽपि सति प्रनष्टान् संसारिचेतनान् विलोक्य, तदनर्थासहिष्णुतया संहरणमेवैतेषां श्रेय इति मत्वा तान् तमसि लीनांश्चकर्थ । सर्वोऽपि ते सङ्कल्पः परमाद्भुतः । गोपालबालो भूत्वा गोपालबालिकायाः नीलादेव्याः संश्लेषमकामयथाः इत्यत्र -

*हे सुन्दरैकतरजन्मनि कृष्णभावे द्वे मातरौ पितरौ च कुले अपि द्वे ।*
*एकक्षणादनुगृहीतवतः फलं ते नीलाकुलेन सदृशी किल रुक्मिणी च ।।*

(सुन्दरबाहुस्तवः) इत्येषा श्रीकुरनाथगुरुवरदिव्यसूक्तिः अनुसन्धेया । नीलादेव्यर्थं निर्भयलेशं निरस्तसप्तर्षभौद्धत्य भगवन् । संहारकृत्योचित वह्निकल्पवपुषा भस्मधारिणा चन्द्रावतंसिकपर्दशालिना च कपर्दिना करधृतं ब्रह्मकपालं वक्षःस्थलस्त्रुतरुधिरधारयाः यदपूरयः तत् कुतः ? अत्र विविरणमिदम् ब्रह्महत्याशापग्रस्तेन रुद्रेण भिक्षुणा करे घृतं कपालं बदरिकाश्रमस्थाो नारायणो भगवान् प्रयाचितस्सन् स्ववक्षःस्थलतः रुधिरधारावमुत्पाद्य प्रक्षिप्तया तया च पर्यपूरयदिति तावत् पौराणिकी कथा । कुतः एवमपूर य इति प्रश्नस्य कोऽभिप्राय इति चेत्, अवधेयम् भगवन् । भवान् सर्वस्मात् परः । रुद्रस्तु सर्वदा भवतः शेषभूतः । तस्मात् सः याचकोऽभूत् त्वयि । त्वया च सोऽनुगृहीतोऽभूत् । तदिदं तव सर्वशेषित्वानुगुणं प्रणतार्तिहरत्वप्रथानुकूलं चेति सर्वे वयं मन्महे । एवं नाम भवदीय परत्वप्रकाशनमेवात्र फलतीति सिद्ध्यति यदि कारणानन्तरं किमपि स्यात् तुर्हि तदभिधीयतामित्युक्तं भवति ।

उग्रकोपशालिकुवलयापीडदन्तिदन्तभञ्जक । कृद्धमहाबलकंसघातुक । स्तन्यपानच्छलवियोजितविप्रलम्भकपूतानाप्राण । लोकविक्रान्तचरण । भगवन् । अञ्जनसवर्णः त्वमेव खलु आदिदेवोऽसि ।

क्षीरसवर्णतां रुचक्रसवर्णतां हरिद्वर्णतां किङ्गत्धुकरकमलनीलोत्पलसवर्णतां क्मशः चतुर्षु युगेषु स्ववपुषा प्रकाशयतः महाविष्णोः महाविष्णोः सौलभ्यं यदेष लोकः तिरस्कुरुते किमेतन्मैख्र्यम् ?

अनन्तशायिन् । मूर्तसुकृतस्वरूप । भगवन् । समृद्धतुलसीमालालङ्कृत । परमपाववन । लीलाविभूत्यामवतीर्णोऽसि । नित्यविभूत्यां विराजसे भुवि विपरीतज्ञानिनां संसारिणां चिन्ताया अप्यभूमिरसि । अनन्यप्रयोजनानां चक्षुर्विषयोऽसि । इतरेषां दवीयानसि । किमिदमद्भुतम् ? शिशिरतुलसीमालालङ्कृतमकुटतट । श्रीपाञ्चजन्यधर । चक्रपाणे । गरुडवाहन । भगवन् । लौकिकैः अन्यैः जनैः यदवाप्तं श्रेयः तदहं नाविन्दिषि । क्षोदीयानहं यथा हि मुक्तिमवाप्य, संसृतिमुन्मूलयेयम् तथा कमपि उपायमनुगृहाण । अत्र विवरणमिदं - लौकिकैः अन्यैः जनैः यदवाप्तं श्रेयः तदहं नाविन्दिषि । इत्यत्र किं हृदयमिति चेत् लौकिकाः जनाः शब्दादिविषयप्रवणाः भगवद्विषयविमुखाः अविज्ञातभगवद्विश्लेष - व्यसनाः सांसारिकसुखानुभवतृप्ताः सुखेन कालं क्षिपन्ति

खलु । तादृशी स्थितिः ममापि भवति चेत् ौहमपि सुखी सन् कथञ्जित्कालं नयेयम् । तादृशं श्रेयः नास्ति मम । भगवद्विषयप्रावण्यधारणेन खलु एवं क्लेशाः अनुभोक्तव्या भवन्ति । एषः क्लेशः मुक्तिदशायामेव विलयमुपैष्यतीति हृदयम् । संसारिणां दुःखस्थितेः श्रेयस्त्वेन कथनं तेषां धिया इति भावः ।

नीलमेघनिभ, गोपालकृष्ण । नित्यसूरिनाथ । भवान् । क्षीरसागरे शेषशय्यामधिशयानो आसीत् इत्याहुः प्राज्ञाः । किन्तु इदं स्थलम् तव स्थलम् इति तावत् वक्तुं न शक्यम् । अनवधिकानि ते निवासस्थलानिं इत्यप्याहुः । क्षोदीयानाहं कुत्र समागत्याश्रयेयम् ? तदिदमाचक्ष्व ।

श्रीवेङ्कटाद्रिमधितिष्ठसि । दिव्ये धाम्नि निषीदसि । क्षीराम्बुधिमधिशेषे । त्रिविक्रमस्मन् भुवमाक्रमसि । कदाचित् भुवं निगिरसि । कदाचिद्वराहरूपी तामभिरक्षसि । प्रतिक्षणं नानाजन्तुजातं सृजसि तत्तद्गुणानुगुण्येन तेषां तेषां आश्रयणीयानि दैवतानि च व्यवस्थापयसि । एवं महोपकारकः परमपुरुषः त्वमेव ।

भ्रमरमगखरचिकुरबन्धायाः कुब्जायाः काये कुटिलतां सदुपायेन विनिवर्त्य, प्रकृष्टेन प्रभुणा अधिष्ठितो दिव्यदेशः कः इति चेत् ? कुलीरभक्षि-बलाकामन्दगतिदन्तुरं, बलाकाचकितशफरविततिभासुरं नीलोत्पलछाया-निलीनक्षुद्रमीनं च तीर्थनिकरं दधाना श्रीरङ्गनगरी । अत्र विवरणमिदम् - कावेरीसलिले बलाकाः कुलीरं भक्षयित्वा मन्दंमन्दं चरन्ति । ताः अवलोक्य महामत्स्याः भीतभीता उत्प्लवन्ते । तेभ्योऽपि भीताः क्षुद्राः मीनाः निलीयन्ते इति वर्णनेनानेन द्योत्यमानो ध्वन्यर्थः एषः - बलाकस्थाने अहङ्कारः कुलीरस्थाने संसारी महाशफरस्थाने उपासकः लघुमीनस्थाने प्रपन्नश्च ग्राह्याः । बलाका कर्कटमश्नातीत्यनेन अहङ्कारः संसारिणं कबलीकरोतीत्ययमर्थो द्योत्यते । तदवलोक्य महामत्स्यः अन्यत्रापसरतीत्यनेन अहङ्काराच्चकित उपासकः संसारिभिस्सह सङ्गं विहाय विविक्तदेशमन्दिष्यतीत्ययमर्थः स्फोर्यते । ततोऽपि भीताः लुघुमीनाः उत्पलच्छायायां निलीयन्त इत्यनेन उपासकसङ्गकान्ताराः प्रपन्नाः पुरुषकारभूतलक्ष्मीकटाक्षवीक्षापेक्षिणो वलन्ते इत्ययमर्थः स्मार्यते ।

कदाचित् शरणागतितो अप्रसन्ने दक्षिणोर्मिमालिनि क्रोधवशात् शार्ङतः शरानाशीविषोपमान् प्रयुक्तवता महावीरेणाधिष्टितो दिव्यदेशः कः ? इति चेत्, अटभ्योऽपि दिशाभ्यः समागताभिः जनताभिः अवगाह्यमातैः पगण्यतीर्थैः विभासुरं भ्रमरमुखरोद्यानपरीतमभिरामं श्रीरङ्गनगरम् ।

शार्ङमवनमय्य सायकान् प्रयुज्य, लङ्काधीशस्य शिरसां दशकं विलूनवता श्रियःपत्या नित्यमध्युषितो दिव्यदेशः कः इति चेत्, चञ्चच्चामरचन्द्रचन्दनमहा माणिक्यमुक्तोत्करान् लहरीकरैः प्रवाहयन्त्या कावेर्या दिव्यसरिता परीतं चतुर्मुखसंसेवितं च श्रीरङ्गक्षेत्रम्। अत्र विवरणमिडं- चतुर्मुखसंसेवितम् इत्यत्र -

*सर्गाभ्यासविशालया निजधिया जानन्ननन्तेशयं*
*भारत्या सहधर्मचाररतया स्वाधीनसङ्कीर्तनः*
*कल्पानेव बहून् कमण्डलूद्गाङ्गप्लूतोऽपूजयत्*
*ब्रह्मा त्वां मुखलोचनाञ्जलिपुटैः पद्मैरिवावर्जितैः ॥*

इत्येतत् श्रीरङ्गराजस्तवोत्तरशतकश्लोकरत्नमनुसन्धेयम्।

शैलेषु चिरं स्वच्छन्दविहरणेन मदमुदितस्य बलिष्टस्य च कुवलयापीडगजराजस्य मधुरायां कंसप्रासादमुखे अभिभवितुमुपनतस्य दन्तभञ्जनं कृतवता प्रभुणा दामोदरेणाधिष्ठितो दिव्यदेशः कः ? इति चेत्, परिपक्वेणुनिर्मित-त्रिदण्डधारिभिरेकान्तिभिर्विरक्तैः परीतं शिशिररमणीयतीर्थपरिवृतं श्रीरङ्गनगरम्।

*नन्दिन्यानन्दशून्ये गलति गणपतौ व्याकुले बाहुले ये।*
*चण्टे चाकित्यकुण्ठे प्रमथपरिषदि प्राप्तवत्यां प्रमाथम् ॥*

इति सुदर्शनशतकोक्तरीत्या लज्जावहशापलक्ष्यभूते विषमविलोचने परिजनपरिवारैः समं समराङ्गणात् पलायिते सति बाणासुरस्य दोस्सहस्रमुच्छिन्नं कृतवता परमपुरुषेणाधिष्ठितं स्थलं सुम्हितं सह्यजापरिवृतं श्रीरङ्गक्षेत्रम्।

शिताग्रसायकप्रयोगतः लङ्कावप्रविततिविध्वंसकारी रामचन्द्रः। सह्यमहीधरात् प्रवहन्त्या पाटीरतरूनुत्खाय समानयन्त्या प्रशिथिलितकुङ्कुमलताप्रसूतकुङ्कुमपुञ्ज-करम्बितया समुत्तुङ्गतरङ्गया मरुद्वृधया परीतं श्रीरङ्गक्षेत्रमधिशयानः परमपुरुषः।

पद्मवनालयायाः श्रीदेव्याः भूदेव्याश्च वल्लभ, नीलादेवीदोस्संश्लिष्ट, परमकृपया मम मनसि विनिहित, खचरणारविन्दभगवन्। त्वं हेमापगापरिवृत-श्रीरङ्गशायी परमभोग्यः खलु।

लङ्काधीश्वरशीर्षदशकनिपातननिपुण, विजयराघवमहावीर ! यज्ञसूत्राञ्चितवक्षस्कैः वेदाक्षरोद्भासिजिह्वाग्रैः बहुश्रुतैः महात्मभिः आराध्यस्सन् श्रीकुम्भकोणक्षेत्रमधिशयानः सर्वेश्वरो भवान् खलु।

भगवन्नित्यसंश्लेषशालिन्यां साक्षात् श्रीमहालक्ष्म्यां सीतादेव्यां कामुकस्य दशकन्धरस्य समूलविनाशमारचितवान् । सिन्धुसवर्णश्रमहरशुभविग्रहो दाशरथिः सुरभिचिकुरप्रकरललनामणिविगाहनविभासुरदिव्यतीर्थपरीतं श्रीकुम्भकोणक्षेत्र-मधिशयानः सर्वाङ्गसुन्दरः ।

यमलार्जुनभञ्जनचरणगतिविशेषाभिराम ! कुवलयापीडमत्तवारणगर्वनिर्वापण - निपुण । तच्छिरसि प्रहरणेन भञ्जिततद्दन्त ! परमपुरुष ! केशिवक्त्रविदारणविचक्षण ! भगवन् ! लोकविक्रान्तचरण । स्वामिन् वैदिकजनाभीष्टपूरकस्सन् श्रीकुम्भकोण-क्षेत्रमधिशेते खलु भवान् ।

शालिसंभृतसुभगकेदारपरीतं पुष्पोद्यानपरिवृतं समुत्तुङ्गसौधाञ्चितं च श्रीकुम्भकोणपुरमधिशायान, भगवन्, कृष्ण, कालनेमिदन्तवक्त्रमुराणां मृत्युमुखप्रवेशहेतुभूतशार्ङ्गपाणे, जयी भव, विजयी भव ।

हिमधारासम्पातसन्नतानाम् अथ सूर्यकिरणपतनस्समुन्नतानां च व्योमस्पृशां वेणुदण्डानां मण्डलेन मण्डिते श्रीवेङ्कटाद्रौ तिष्ठसि भगवन् । भ्रमरझङ्कारपरीत-पुण्पोद्यानपरिवृत्ते समुल्लसत्तटाके च श्रीकुम्भकोणक्षेत्रे शेषे एतादृशो भवान् साक्षान्नारायणः ।

भगवन् ! केशव ! पर्वतनिकरादीनतिलङ्घ्य, प्रवहन्त्याः कनकापगाया कूले चिरात्क्रियमाणमिदं ते शयनम् अखिलभुवनविक्रमणकालिकचरणश्रान्तिपरिहृतये वा ? भूमिदेव्यवसादपरिहारकमहावराहावतरणकालिकश्रमपरिहाराय वा ? समुत्थाय संभाषस्व । जय । विजयस्व ।

करण्डकविहारास्पदतटाकविशेषे निपत्य लुठितानि बृहत्तरतालफलानि विलोक्य स्वभक्षकजलचरकाकभ्रमेण चकितानां शफराणां वैयाकुलीं बिभ्रति वैष्णववामनक्षेत्रे विराजमानमहाप्रभो ! भुजबलाढ्यस्य हिरण्यकशिपोः मात्सर्यसमुज्ज्वलमद्वितीयकर्कशदेहं विदारितवान् नरहरिरिति त्वामेव महान्तः आचक्षते खलु ।

योगाभ्यासस्य अर्हासने नियमानुसारेण निश्चलेन स्थित्वा योगं उपायं च अवाप्तवतां योगिनां हृदयकुहरमाविश्य, तान् विधूतकल्मषानाकलयन् भो देवदेव शैलोपमेयप्राकाराञ्चिते तिरुप्पाडग इति पाण्डवक्षेत्रे, तिरुऊरगं इति उरगक्षेत्रे वेःकणै

इति वेगाक्षेत्रे च क्रमशः उपवेशनम्, अवस्थानम्, शयनं च ते परमकृपां व्यनक्ति। अत्र विवरणमिदम् - पाण्डवक्षेत्रादि त्रितयं काञ्ची काञ्चीपुरे विराजमानं। पाण्डवदूतभगवदालयः पाण्डवक्षेत्रमित्युच्यते। त्रिविक्र मभगवदालयः उरगक्षेत्र-मित्यभिधीयते। यत्र भगवानुरगरूपी च विराजते। यथोक्तकारि भगवदालयः वेगाक्षेत्रमिति व्याह्रियते।

भगवतः उरगक्षेत्रे अवस्थानम्, पाण्डवक्षेत्रे उपवेशनम्, वेगाक्षेत्रे शयनं च मम सत्तायाः प्राक्तने काले। तदानीं मया ज्ञानजन्म न लब्धमासीत्। तल्लाभादनन्तरं नांह विस्मृतवानस्मि। ततः सः भगवान् ममैव मनसि स्थित्युपवेशनशयनानि वितनुते। तेषु दिव्यदेशेषु यावानभिनिवेशो भगवतः तावान् परमभक्तानां हृददयेऽपि भवतीति व्यञ्जना अत्र परमतात्पर्यम्।

अद्भुतज्ञानशक्त्यादिकः, फणिपतिशायी, जगत्कारणभूतः माधवः, श्रीवेङ्कटाद्रौ तिष्ठति, परमव्योमशब्दाभिधेये श्रीमति वैकुण्ठे निषीदति महत्तर-तरङ्गमालासङ्कुले क्षीराब्धौ शेते इति यत् तदिदं मम सत्ता विरहकाले समभूत्। अधुना तु ममैव मनसि स्थित्युपवेशनशयनानि तस्य सम्पद्यन्ते इति आत्मनः परमात्मना विद्यमानं सम्बन्धं प्रकटितवन्तः भक्तिसाराः अस्मिन् पाशुरे।

जगति सद्यो म्रियन्ते केचित्। किञ्चित्कालं स्थित्वा म्रियन्ते अपरे। किन्तु न केऽपि सुदीर्घकालजीविनः इत्येतत् प्रत्यक्षम् ईक्षमाणाः अपि अविवेकिनो जनाः लोकविक्रान्तचरणारविन्दचिन्ताविमुखा अर्चिरादिमार्गप्राप्यपरमपदप्रवेशभाग्य-विधुराश्च ताम्यन्ति। किमेतत् ? अत्यन्तशोचनीयमेतत्।

भास्करमण्डलमध्यसरण्या दिव्यं धाम निषेव्य तत्र भक्तिफलभूतशाश्वतानन्दं लिप्समानाः भो मुमुक्षुजनाः ! पुण्डरीकपादस्य भगवतः पुण्यकीर्तीः कर्णकुहरतो अनुभूय प्रबलपापफलदुःखानुभवदूरगास्समुज्जीवत।

सात्त्विकराजसतामसफलमध्ये सात्त्विकव्यतिरिक्तफलद्वितयकामुका जघन्यजना लोकविशेषेषु तादृशफलानुभवानन्तरं पुनरपि गर्भवासतो भूलोकमाविश्य देहात्म भ्रमशालिनो व्यामुह्यन्ति। तेषां तु ''गतागतं कामकामा लभन्ते'' इत्युक्तात् लाभादन्यत् किमपि न। यदि भवन्तः उज्जीवितुमिच्छथ शिशिरतुलसीस्तबकालङ्कृतं परमं पुरुषोत्तमं सङ्कीर्तयत।

दृष्टिविषभूतवैरुप्यभारितानि कर्णारुन्तुदापख्यातियुक्तानि भक्तानामभीष्ट-

पूरणयोग्यता दरिद्रणि च दुर्दैवतानि शरणं प्रपद्यमानाः भो विवेकान्धाः जनाः जगन्निदानभूतं परमपुरुषं प्रतिपद्य संसाराख्यमहत्तरगुल्मच्छेदनकुशला भवत ।

कुन्तशूलदण्डलोहमुसलगदासिप्रमुखहेतिभिस्सह जङ्घाबलं प्रदर्श्य दिविषन्निवहे स्वं स्वं स्थानामासेदुषि सति, अथाप्यभिभवितुमागतस्य बाणासुरस्य बाहुसहस्रच्छेदनावसरे जातां वैयाकुलीं ते एव देवा वेदितुमीशते ।

भ्रमरसुखरचिकुरप्रकरायाः उषायाः साहसमवगत्य, कोपमावाह्य अभिभवितुमायातस्य बाणासुरस्य दोस्सहस्त्रलवनावसरे मुण्डितशिरसिभस्मधारिणि महादेवे तदपत्येषु ज्वरदैवते दुर्गायामग्नौ च पलायितेषु एतादृशैः कान्दिशीकैः सह योद्धुं वा अहमागतोऽस्मीति ह्रिया भगवान् अद्भूतशक्तियुक्तः मुकुन्दः बाणे परमकृपां प्राचीकशत् ।

भगवतः हरेः पद्मा, धात्री च देव्यौ स्तः । सरसिजासनसंनिविष्टचतुर्मुखः तनूभवः अर्धनारीश्वरो वृषभवाहनः पौत्रः । एवं वेदशास्त्रं यद्यदाह तत्परमार्थः । अन्यैः शिवपारम्यं यदुच्यते तदसत्यम् ।

पुरा कदाचित् सप्तसालनिष्पत्रीकरणाय शरमेकं प्रयुक्तवता, वालिवक्षोभिक्षोभणक्षमरुक्षसायकक्षेपकृता च देवाधिदेवेन भगवता स्वकीयान्तरङ्गे विषयीकृताः ये ते एव शाश्वतपरिपूर्णदिव्यभोगभागिनः भवितारः । स्वर्गलोकपालनसामर्थ्यजुषामपि अन्येषां तादृशभोगभागिता न भवित्री ।

भगवतो वामनस्य पादद्वन्द्वमुपायोपेयधिया नमस्यतां सतां सुप्रशस्तं ज्ञानं भक्तिसम्पच्च समृद्धे स्याताम् । उत्तरङ्गकलशजलनिधिनिकेतनस्य तस्य भगवतः मङ्गलाशासने निरतानां नृणां सकलदुरितसवासनक्षयः निष्प्रत्यूहः ।

चित्तस्थेमानमावलम्बय भूयसीषु जन्मपरम्परासु कर्मयोगमनुष्ठाय भगवतः गुणगणांश्च क्रमशः अनुसन्धाय मनसः कल्मषाणि व्यपोह्य श्रवणमनननिदिध्यासनपर्वणि अधिरुह्य, अथ परभक्तिपरज्ञानपरमभक्तियुक्तानामेव सतां पगण्डरीकाक्षस्य भगवतो दर्शनं घटेत । देवदेवानामपि सतां न इतरेषाम् ।

इन्द्रियाणां क्षुद्रविषयावगाहनमार्गप्रतिरोधाय विषयमार्गद्वारे लाक्षामुद्रणमारचय्य, सन्मार्गद्वारं समुद्घाटितमाकलय्य, ज्ञानरूपां विलक्षणप्रभां प्रज्वाल्य, अस्थिनिकेतनभूतं शरीरमुपाशोष्य हृदयमार्द्रमारचय्य,

परिपक्वविलक्षणप्रेमसम्पदं गाहमाना एव सन्तः चक्रपाणिं भगवन्तं सदा पश्यन्ति । अन्ये नानुपश्यन्ति।

चतुर्विंशतितत्त्वनिर्वाहकं, सप्तद्वीप, सप्तकुलाचल, सप्तसागरनियामकं, द्वादशा-दित्यान्तरात्मानं च परमं पुरुषं साष्टाङ्गनमस्कारलक्ष्यमाकलय्य तस्यैव भगवतः परमतन्त्रभूतम् अष्टाक्षरीम् ये अनुसन्दधते ते दिव्यभोगभाजो भवितारः खलु। चतुर्विंशतितत्त्वानि नाम पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि, शब्दस्पर्शरूपरसगन्धाः पञ्च भूतानि, मनः महत् अहङ्कारः, प्रकृतिश्च । आहत्य चतुर्विंशति तत्त्वानि । सप्तद्वीपानि नाम जम्बु, प्लक्ष, कुश, क्राञ्ची, शाक, शाल्मल, पुष्करद्वीपानि, सप्तकुलाचलाः नाम महेन्द्र, मलय, सह्य, शुक्तिमन्त, गन्धमादन, विन्ध्य पारियात्राचलाः, सप्तसागराः नाम लवण, इक्षु, सुरा, सर्पि, दधि, क्षीर, जलसागराः। द्वादशादित्याः नाम इन्द्र, धातृ, पर्जन्य, त्वष्ट, पूष, अर्यम, भग, विवस्व, विष्णु, अंशुमद्वरुण, मित्राः द्वादशाः ।

कलशजलनिधावहीन्द्रतल्पमधिशयानस्य निखिलहेयप्रत्यनीकस्य भगवतः पादारविन्दे सप्रेमभरमाश्रित्य, विषयान्तरव्यासङ्गासहभक्तिभरितमेकाग्रं मनो दधाना दिव्यमष्टाक्षरीमन्त्रं दृढाध्यवसायपरिकार्मिता ये अनुसन्दधते ते दिव्यधामशासनायापि कल्पेरन् ।

दशानां दिशानां, दशानां दिक्पालकानां च अन्तर्यामिणि, सप्तानां, स्वराणां, नवानां नाट्यरसानां च प्रवर्तके, चतुर्दशभुवनवर्तिजनतानां श्रेयसे भूयसे दशावतारान् कृतवति च भगवति क्षमार्णवे ये भक्ताः तेषामेव मुक्तिपुरुषार्थो निष्पद्येत, नापरेषाम्।

भगवन्! रासभवर्ष्मणा अभिभवितुमागतं प्रेमदरिद्रं धेनुकासुरं व्यपगतजीवितं विधातुमुत्तुङ्गदोर्भ्यां तं स्वादुतालफलोपरि क्षिप्तवतः तव पादाब्जभक्तेभ्यः अन्येषामलभ्यमेव खलु अमरत्वम् । भो जनाः कदाचित् मथिते क्षीरपयोनिधौ शयितवतः, कालनेमिनामकं दैत्यं विनाशितवतः, दाशरथिभावे भयविह्वलस्य वाल्यनुजस्य सुग्रीवस्य प्रत्ययकृते सान्द्रसप्ततालतरुनिष्पत्रीकरणनिपुणस्य श्रीवेङ्कटाद्रिनिवासरसिकस्य भगवतः श्रीनिवासस्य पादावेव नित्यमाश्रित्य समुज्जीवत इति सन्देशं दत्तवन्तः भक्तिसाराः अस्मिन पाशुरे ।

अवतारेषु तत्तज्जातीयसाजात्ये सत्यपि गुणविशेषैः अत्युच्छ्रितमाहात्म्य-शालिन् ! क्षीरार्णवे फणिपतितल्पमधिशयानस्य भवतः विषये, प्रेमभूमभासुर-

मानसानां विषयान्तरविमुखानां च सताम् अत्रामुत्र सर्वत्र च सर्वविधं सुखं सुलभं भवेत् खलु ।

मधुस्यन्दिशिशिरतुलसीस्रगलङ्कृत भगवन् ! अस्यामेव विभूत्यां विलक्षणं त्वत्पादारविन्दानुभूतिरूपं भाग्यमुपेक्ष्य, दिव्यं धाम निषेव्य शाश्वतदिव्य-भोगानुभवस्पृहा नास्ति मम । अस्यामेव विभूत्यामवस्थाय भक्तिसमाख्यया दाम्ना हृदयं निबध्य निरन्तरनिर्मलानुभवविवर्धनेन यः आनन्दः आसाद्येत सः परमपदानन्दादपि अत्यधिकः खलु ।

सुदर्शनायुधविभूषितपाणितलः परमपुरुषः इतोऽपि मम जन्मसन्ततिं सङ्कल्पयति वा ? अथवा स्वपादारविन्दयोरेव स्थिरतरप्रेमसम्पदमनुगृह्य मां नित्यकिङ्करं कर्तुं सङ्कल्पयति वा ? स्वविषयकभक्तिलवलेशदुर्विधस्य विवेकदरिद्रस्य पापीयसो मम विषये भगवतः चिकीर्षितमिदमिति न जाने ।

आश्रितविरोधिषु उद्धान्तगरलमुरगराजमधिशयान भो स्वामिन् । त्वत्पादारविन्दयोः निवेशितं मामाकं मानसं नित्यं,विषयान्तरेषु विगाहयितुं निरङ्कुशस्वतन्त्रस्त्वं समर्थोऽसीति जाने। अद्भुतशक्तियुक्तभगवन्। स्वातन्त्र्यभूम्ना प्राकृतपाशेषगुमां प्रवेश्य मा स्म व्यामोहय ।

कृष्णावतारे शकटासुरशिथिलीकरणनिपुणचरणारविन्द । कालियफण कलितनर्तननाथ । श्रीपाञ्चजन्यालङ्कृतपाणितल । मुकुन्द भगवन् ।तव चरणारविन्दद्वन्द्वम् अनारतं ध्यायतो मम अद्यापि नित्यकैङ्कर्यसमम्पद्धितरणविरहः कथम् ?

ललाटलोचनसुराधिनाथसररसिजासनप्रमुखैः अखिलैरपि दिविषदिभः सक्रममभिवन्द्रितपाद । नाथ । वेदमय । एष एव मम द्रढीयानध्यवसायः यत् भवन्तं विना अन्यं कमपि न शरण्यं मन्ये ।

क्षीरपयोनिधौ मन्दराद्रिं मन्थानमारचय्य, तत्र सितदशनरशि वासुकिमहि मथनदामतया परिवेष्ट्य, यदा भगवन्नुत्तरङ्गजलधिमथनमकारि, तदानी, भवता अतिकर्कशवहीधरधारककमठरुपमास्थाय, दारिद्रयव्याधिनिवर्तनक्षमौषधभूतां सुधामनुगृहीतवन्तं परमोदारं, परमपुरुषं ऋते नान्यद्दैवतमहं विभावये ।

भगवन् । पुरा समिद्धं भूभारमपवारंयितुम् अर्जुनसारथिभावमङ्गीकृत्य, सुबहूनि आश्चर्यचेष्टितानि आरचय्य प्रतिभटवर्ग व्यापाद्य जैत्रम्मन्यान् महारथान्

कौरवान् वीरस्वर्गभाजो विधाय कृत्स्नमाधिराज्यं पञ्चपाण्डवसात्कृतवतो यशश्विनो भवतोऽन्यं देवं नाहमाद्रिये ।

परमपावनपरमपुरुष । ब्राह्मणादिवर्णचतुष्टये नैकस्मिन्नपि वर्णे अहमजनिषि । सन्मार्गप्रदर्शकसच्छास्त्रभूतवेदाध्ययनकलामपि न जाने । जितेन्द्रियताया अपि दवीयानस्मि - शब्दादिविषयवागुराबद्धोऽस्मि । अतश्च त्वदीयौ दिव्यपादौ विना मम अन्या गतिः नास्ति । सत्यमिदम् ।

मधुरालापायाः असितेक्षणायाः सीतायाः कृते असङ्ख्यान् यातुधानानग्निसात्कृतवान् भगवान् । त्वदन्यं कमपि रक्षकमहं न जाने । बन्धुश्च मे त्वत्तोऽन्यः नास्ति रुचिरः । अनन्ताद्भुतशक्तियुक्तस्वामिन् । नाहं कदापि त्वद्वियोगदुःखं लम्भयितुमर्हः ।

''अप एव ससर्जादौ'' इत्युक्तरीत्या प्रथमतः जलतत्वम् उत्पादितवतः अथ रामावतारे सिन्धौ सेतुबन्धमारचितवतः आर्तत्राणपरायणतया सिन्धुमधिशयि तवतः, कदाचित् सिन्धु मथितवतः, सप्तर्षभौद्धत्य विध्वंसन पूर्वकमसितेक्षणायाः नीलादेव्याः पाणिग्रहणमारचितवतश्च गोपालकृष्णस्य तव पादौ शरमं प्रपन्नं माम् अभयदानेन अनुगृण्हातु ।

इक्षुरससारवत् परममधुर । क्षीरसागरशयन । केशव । अतिकठिनहृदययुक्तरक्षों गणविनाशकसायकप्रेरक शाङ्र्गपाणे । दाशरथे । श्रीरङ्गनाथ । मधुपभरितशिशिरतुलसीमालाञ्चितौ भवतः पादावेव सादरं प्रणमति मयि परमकृपां प्रकाशयेथाः ।

भगवान् । रामचन्द्र । शरीरवर्तिनः प्राणाः भवदधीनाः । ज्ञानमज्ञानं च त्वदधीनम् । पञ्चगव्यमपि त्वमेव । तन्निष्ठा परिशुद्धिरपि त्वय्यायतते । नित्यविभूतिः लीलाविभूतिश्च त्वदधीने । सागरद्रव्यसारभूतसुधारत्नादिकं व त्वमेव । अहमपि त्वमेव । किं भूयसा प्रलपितेन ? सर्वेश्वरः त्वमसि ।

अस्मत्स्वमिन् । दुर्निग्रहाणि पञ्चेन्द्रियाणि निगृह्य, विषयान्तरप्रावण्यं सवासनमपहाय समुपेत्य भवत्कैङ्कर्यैकनिरतं मां यद्यपि भवानुपेक्षितुं कामयमानो मदुज्जीवनार्थकृषिविरतस्सन् विषयान्तरप्रावण्यमेव पुनरुपजनयेत् तथापि क्षीरसागरशायिनं त्वामृते नान्यं कमपि शरणं मन्येय ।

स्वाधीननिरवधिकप्रकृतितत्व । आश्चर्यशक्तियुक्त । सप्तलोकस्थैरपि जनैः सममिलितैः अनवधिककल्पावधिस्तु तौ कृतायामपि अदृश्यसीमकीर्ते । भगवन्

पुण्डरीकाक्ष । संसृतिचक्रभ्रमणमद्यैव विनाश्य, तव पादौ प्रपद्य, यथाहं तत्प्रावण्यैकनिरुपणीयः स्याम्, तथा त्वं पुश्कलमनुग्रहमाकलयेथाः ।

सुतीक्ष्णसुदर्शनपाञ्चजन्यकौमोदकीशाङ्र्गनन्दकालङ्कृतसुन्दरपाणे । पद्मालयानत्यसंश्लिष्टवक्षस्क । सर्वस्वामिन् । श्लेष्माद्याकरशरीर सम्बन्धवैदेशिक स्सन् भवन्तमनुप्रपद्य यथा अहमुज्जडीवेयम् तथा कमप्युपायं त्वमेव मह्यमनुगृहाण ।

अद्भुतशक्तियुक्तपरमपुरुष । क्रोधवैवश्यं दूरतः परिहृत्य, विप्रलम्भादिकमवद्यं च सुदूरतः विसृज्य,पञ्चानामिन्द्रियाणां च तृष्णां परिहृत्य, समेधमानत्वत्पादभक्तिः दासजनोऽयम् जननमरणरुपमहादुःखमयसंसरणात् निवृतः परमानन्दभागी यथा नाम भवेत् तथा नियतमनुग्राह्यः ।

अतसीपुष्पसंकाश । नीलावल्लभ । भगवन् । यमकिङ्कराः तावदुपरितनलोके मदीयानि प्रबलपातकानि संस्मार्य, तत्फलानुभवं च अवर्जनीयमुद्बोध्य, दुस्स्हानि हिंसनानि चिकीर्षन्तीति शृण्वतः मे भीतिः यथा नाममोधतां व्रजेत् तथा मदात्मानं त्वया सह संश्लेषितवन्तं मां नित्यंसश्लिष्टमेव कलंयेथाः ।

अभक्तदुर्ग्रहभगवन् । गर्भवासादिनानादुःखनिवर्तनौपयिकतत्वज्ञानदरिद्रान् प्राज्ञंमन्यान् नीचानपि यथाहं समुत्तरयेयं तथा नाम मे भक्तिपोतं प्रयच्छ । अत्र विवरणम् - यद्यपि इदानिं मे भक्तिरस्ति, तथाऽपि नैव पर्याप्तिः अनया अधोऽधः पतितान् परानपि अहं यया भक्त्या समुत्तारयेयं, तादृशीं भक्ति अनुगृहाणोति प्रार्थितं भवति ।

सागरसवर्णस्वामिन् भगवन् । जयी भव । विजयीभव । प्रर्थनापूर्वकमावेद्यमानमिदं मे वचः अवधेहि । अर्थितार्थपरिदानदीक्षा तव यदि पुनरस्ति, तर्हि मे एषः वरः प्रदेयः - विषयवीथीषु विसृत्वरं मे मनः यथा स्थैर्यमवाप्य त्वदीयमेव पादपङ्कजं निरन्तरं निध्यायेत् तथा नाम तावत् सङ्कल्पय ।

उत्तरङ्गजलनिधिमधिशयान । सर्वेशान । दिव्यवराहमूर्ते । जैत्रमहावीर । महति जलनिधौ शिलोच्चयसञ्चयसम्पादितसेतुबन्ध । भगवन् । अकृत्रिमप्रेमबन्धेन हृदयं तव पादपद्मे निधाय तदेव नियतं निध्यायतो मम कर्मवासनारुचिव्यपायोपायं कमपि अनुगृहाण ।

इन्दिरानित्यसंश्लिषृवक्षस्क । देवदेव । वेदैकसमधिगम्य निर्मलगर्भकालमेघसवर्णविग्रहगोपालकृष्ण । त्वदीयं दिव्यं नाम दिव्य वपुश्च येनोपायोन सन्ततमहं सङ्कीर्तयितुं प्रभवेयम्, तमनुगृहाण ।

दारुणकबन्धदन्तवक्त्रखरमुरादीनां शिरोलवनचतुर। विविधायुध परिकर्मित बाहो भगवन्। शयनासनावस्थानपर्यटनादिषु सर्वास्वपि अवस्थासु भवत्पादारविन्द प्रावण्यनैरन्तर्यरुपमनुबन्धमनुगृहाण।

भुवं संवर्तसमये निगीर्य परस्तात् उद्गीर्य महाबलेरवलेपं विलोप्यं जगतोऽस्य मत्कटाक्षादृते धारकम् अन्यत् नास्तीति धिया समयेषु सर्वविधान्यपि रक्षणानि कृतवान् भगवन्। सर्वकालनिर्वाहक। अतिमधुरवाचा महालक्ष्म्या नित्यसंशिलष्ट पुण्डरीकाक्ष। भवतः दिव्यमङ्गलविग्रहात् अन्यत् ध्येयं वस्तु मे किमपि नास्ति।

पुरा युद्धोन्मुखं कालनेमिनामानमसुरम् उज्जृम्भितं मृत्युमुखं प्रापितवान्। पञ्चहेतीलसत्पाणितलभगवन्। व्रजे सञ्जातां महतीं वृष्टिविपदं सद्यः समुद्धर्तु गोवर्धनाद्रिमुद्धृतवतः तव यशसः अन्यत्र न वे हृदयं मुह्यति।

भो अस्मत्स्वामिन्। क्रोधवशंगतः काशीराजो दन्तवक्त्रः, पौण्ड्रकवासुदेवः माली, सुमाली, केशी, धेनुक इत्येते यथा समूलं व्यनश्यन् तथा वामकृतवतः ते पादयोः अन्यत्र न कुत्रापि अहं प्रेमभागी भवेयम्।

सुप्रसिद्धवरबलशालिनोः चतुर्मुखपञ्चमुखयोः जनपदाभ्यां सह सहस्त्राक्ष जनपदस्यापि साम्राज्यभोगे सङ्घटिते सत्यपि साक्षात् मुक्तिरुपमहैश्वर्यलाभे समुपस्थितेऽपि भवदनुबुभूषामात्रे मम स्पृहा, नान्यत्र। अनया गाथया भगवदनुभव कामनादशायाम्। आशातिशयः प्रकटितोऽभूत्।

अपक्षयहेतुभूतकर्मविरहेऽपि वामनवर्ष्मणा सञ्कुचितमूर्ते वृद्धिहेतुभूतकर्म विरहेऽपि त्रिविक्रमवर्मणा अभिवृद्धमूर्ते। अवलिप्तानां महाबलिप्रमुखानाम् अहङ्कार ममकारादिहेयगुणनिरासनिपुण। भो देवदेव इति भवन्तं वेदघनामहान्तो महर्षयः स्तुवन्तीति हेतुना अज्ञो अहमपि अस्तौषम्।

मधुपानोत्सुक मधुपभरितशिशिरतुलसीस्त्रगलङ्कृत। विचित्रशक्तिनिधे। क्षीरसागर रुपया शय्यया च सह भक्तचितमधिवसन् आम्भोधिसवर्ण। भगवन्। जघन्योऽहं पवित्रो अपवित्रोऽपि वा यत्त्वां संसेव्य सङ्कीर्तनमकरवम् तदिदं सर्वसहिष्णुस्त्वं क्षान्तिलक्ष्यं विरचयन् दयेथाः।

भो सर्वेश्वर। त्वद्विषये यावच्छक्तिनिन्दनानि दूषणानि च प्रयुक्तवतां शिशुपालादीनाम् असमं युद्धमारचय्य भवतः कोपानले दाहं गतानां च त्वत्पादोपसर्पणं घटत इत्याचक्षते महर्षयः। ततश्च सर्वस्वामिन्। क्षोदीयसा मया

कलितानि दुरितानि गुणतया गृहाण । श्रीविष्णुपुराणे शिशुपालस्य पञ्चतां प्रतिपादयन् पराशरः परमर्षिः एवमाह- ''भगवच्चक्रेण व्यापादितः तत्स्मरणाद्दग्धाखिलाघसञ्चयो । भगवता अन्तमुपनीतस्तस्मिन्नेव लयमुपययौ ।।'' इति । तदत्रानुसन्धेयम् ।

हे हृदयवासरा अस्मज्जीवितकृन्तननिपुणकृपाणनिर्विशेषमतिपतन्ति । विविधैः व्याधिभिः शीर्यते शरीरम् । जरा च संवृद्धा । मुमूर्षुदशा च सन्निहिता । ततश्च भगवत्कैङ्कर्यमेव श्रेय इति । द्रढीयांसमध्यवसायमावाह्य भगवन्तं प्रणिपत्य कीर्तय ।

अयि भो हृदय । अवद्यावहमविद्याकर्मवासनारुचिप्रकृतिसम्बन्धतापत्रयाख्य मष्टकं विनिवर्त्य, सांसारिकदुःखानि विधूय अर्चिरादिसरण्या च गत्वा दिव्यधामभोगानुभवकुतूहलं यदि वहसि, तर्हि बाह्यबाह्यान्धकारक्षपणनिपुणस्य दंष्ट्राग्रोद्धृतमहीमण्डलस्य महावराहमूर्तेः अस्मत्स्वामिनः पादौ विचिन्त्य प्रणिपत्य स्तुहि ।

संसृतिसम्बन्धविदूरगो मुक्तिभूमिप्रदश्च भगवन् उच्चावचानेकजन्मसन्तति विच्छेदनेन अस्मत्समुज्जीवनाय पिता च माताशेषी च सन् अस्माभि : सह सुश्लिष्टोऽभूत् । एवं च सति हे दीनमानस । किमिति त्वं शोकसागरे निमग्नमवतिष्ठसे ।

महापचारनिरतस्य राक्षसराजस्य जीवितक्षये पुरा लङ्कामुपेत्य तां श्मशानभूमिनिर्विशेषामरचय्य, प्राप्तविजयो महावीरो भगवान् यन्मामन्तरङ्गकिङ्करमङ्गीचकार, ततश्च यमः न मे प्रभवति न मत्पापफलप्रदाने स शक्नोति ।

अनन्तकीर्तिः आद्यन्तरहितः मङ्गलाशासनपरफणिपतिकृतशयनो वेदगीतश्च भगवान् अच्युतः भीतिम् आधिव्याधी बह्वपायास्पदजरां विविधानि जन्मानि तदनुकूलं मनश्च शरीरं च विनिवर्त्य अस्मान् दिव्यं धाम नेतुं कृतसङ्कल्पो विराजते ।

अयि भो सरसिजवासिनीसहाय मम तु हृदयं वाग्वृत्या, कायिकव्यापारेण च मनागपि मेदमविन्दमानम् अविच्छिन्नप्रेमास्पदं सत् रात्रौ सायं प्रातरहनि च त्वत्पादारविन्दैकसंसक्तं विषयान्तरस्पृहाविमुखं प्रतिष्ठितं विराजते ।

हेमापगापरिवृतश्रीरङ्गक्षेत्रनिवासरसिक । अतसीकुसुमसुकुमार । भगवन् आकर्णय । मदात्माभिधाने प्रबलपापराशौ त्वद्विषयकानुरागरूपा वल्ली

काचिदङ्करिता सती त्वत्पादसमाह्वयप्रशस्तपुष्पेण सह सङ्गता तत्रैव स्थेमानमधिगत्य ग्लानिलेश विरहिता विद्योतते ।

अस्मादृशां संसारिणामुज्जीवनैकतत्परः कालमेघनिभः भगवान् अविच्छिन्न संसृतिमण्डलादद्य मामुद्धर्तुकामः मत्सविधमुपेत्य, स्वात्मना अविनाभूते मयि स्वकीयनित्यज्योतिर्मयदिवव्यमङ्गलींविग्रहं समाश्लेषयत् । अतश्च तदात्मवस्तु चिरन्तनाविद्याग्रन्थिविनिर्मुक्तं सदगाहतमहानन्दसन्दोहम् इति भक्तिसारसूरिवरः स्वाभिलषित परम फलावाप्तिप्रकाशनपूर्वकं प्रबन्धं समापयामास ।।

**कुलशेखराल्वार्चरितम्**

*घुष्यतेः यस्य नगरे रङ्गयात्रा दिने दिने ।*
*तमहं शिरसा वन्दे राजानं कुलशेखरम् ।।*

दक्षिणपश्चिमयोः मध्ये नेर्ऋतिभागे केरलनामकः देशः अस्ति । सर्वालङ्कारालङ्कृते तालक्रमुकशोभिते तस्मिन् देशे सुमहद्रम्यं श्रीकोलिपट्टणं वभूव । सर्वशोभाद्ये राजस्थाने महोच्छ्रये तस्मिन् पट्टणे भगवद्भक्तिपारगः दृढव्रताख्यः राजा आसीत् । सः चेरकुलदुग्धाब्धिचन्द्रमा क्षत्रियर्षभः । सः सन्तानार्थं सततं श्रीहरि समुपासत । राजर्षेः दृढव्रतस्य प्रसन्नो भक्तवत्सलो भगवन् हरिः कृपया अपत्यलाभं प्रददौ। पराभवनामसंवत्सरे माघमासे शुक्लपक्षे पुनर्वसूनक्षत्रे दशम्यां गुरुवासरे कौस्तुभांशेन महात्मा कुलशेखरः राजर्षेः संजज्ञे । अस्यावतारश्लोकाः प्रथिताः भुवि गीयन्ते -

*तस्यामभूच्चेरकुलप्रदीपः श्रीकौस्तुभात्मां कुलशेखराख्यः ।*
*महामतिमघपुनर्वसूभे दिह हरेः पूर्णकटाक्षलक्ष्यः ।।*

*कुम्भे पुनर्वसौ जातं केरले कोलिपट्टणे ।*
*कौस्तुभांशं धराधीशं कुलशेखरमाश्रये ।।*

अतिसुन्दरं पुत्रं दृष्ट्वा अतिसन्तुष्टः महीराजः दृढव्रतः ब्राह्मणेभ्यः बहु वसुधान्यादिकं प्रददौ । मङ्गलकार्याणि कृत्वा अमिततेजसः पुत्रस्य (कुलस्ल शेखरो यस्मात् इति अयं) कुलशेखरः इति नामकरणं चकार । चेरकुलभूषणः दृढव्रतमहाराजः चौलादिसर्वसंस्कारान् यथाकालं यथाविधि कृतवान् । अयं कुलशेखरः शुक्लपक्षेन्दुवत् दिनदिनप्रवर्धमानाः साङ्गोपाङ्गान् वेदानघीत्य, स्वजात्युपयुक्तानि नीतिशास्त्राणि, रथगजतुरगादितन्त्राणि, च अचिरादेव अभ्यस्य सर्वोत्तुङ्गां

चातुरीमुपलेभे । तादृशम् अनुपमं चातुर्यम् अभिवीक्ष्य महाराजः अमुं यौवराज्ये आभ्यषिञ्चत् । चतुरङ्गबलोपेतः राजधर्मपरायणः कुलशेखरमहीपालः चोलपाण्ड्यादिप्रभुवरान् विजित्य तन्मण्डलानि स्वायत्तान्याकलय्य सर्वत्र प्रसृमरभूरियशाः प्रचकाशे । निहतकण्टकं राज्यं स्ववशे स्थापयामास । पुरा रामराज्ये प्रजाः सर्वाः यथा मुमुदिरे, तथा कुलशेखरराज्ये च प्रजाः मुमुदिरे । महौजसं पुत्रं दृष्ट्वा महाराजः दृढव्रतः ''वार्धके मुनिवृत्तीनाम्'' इत्युक्तरीत्या तापसवृत्तिमाश्रयितुमिच्छन् कुलशेखरं मकुटाभिषेकमहोत्सवेनाभिनन्द्य, सकलभुवनभारम् अस्यैव मूर्ध्नि प्रतिष्ठाप्य तपोवनमुपागतः ।

गुणानामाकरो महान् कुलशेखरभूपतिश्च पितृपादशासनम् अवतंसयन् अणुमात्रमपि अप्रस्खलितनीतिवर्त्मा अपरोऽयं रामचन्द्र इति अशेषैः अभिनन्द्यमानः प्रजाः सुष्टु परिपालयन्, सकाले गृहमेधी सन् अपरं नीलामिव इलां नामपुत्रीं दृढव्रतं नाम पुत्रं च प्रसूय, सकलविधसम्पत्समुदयसमृद्धिभासुरः सन्तोषसीम्नि समतिष्ठत । एवम् अनवधिकमैहिकैश्वर्यमनुभवतः अस्य मानसम् आमुष्मिके श्रेयसि समसृज्यत । ततश्च श्रुतिस्मृतीहासपुराणादिप्रवीणविपश्चिदपश्चिमसत-तिसहवाससुरभिमानसः लौकिकीसु क्रियासु विरक्तिम् अश्नुवानः, भगवतो नारायणस्य लभ्मीपतेः निर्हेतुकविषयीकारपात्रभूतः, स एक एव परं तत्वमिति द्रढीयांसमध्यवसायम् अनवरतम् अभिवर्धयन् भगवतः विभवावतारेषु रामवतारे भृशमनुरक्तः, अर्चावतारेषु च श्रीरङ्गनाथे निष्प्रतिद्वन्द्वभक्तिभासुरः श्रीरामयणपठनपाठनैकपरायणः श्रीवैष्णवाराधन समुत्सुकतानिधिः अतिथिसत्कारविश्रुतकीर्तिः असमाभ्यधकः समैन्ध । स्वगृहारधने भगवतो रामचन्द्रस्य राजगोपालस्य च दिव्यमङ्गलविग्रहौ परमसुन्दरौ सर्वाभरण भूषितौ समाराधयन् नित्यतैमित्तिकोत्सवादीश्च तयोः विशेषतः निर्वर्तयन्, स्वात्मीयां भगवद्भागवतभक्तिसंपदम् अन्यादृशी प्राचीकशत् ।

श्रीरामायणदिव्यार्थान् स्वयमेव बोद्धुं बोधयितुं च कुशलोऽपि असौ कुलशेखरः प्रवचनपारायणानां मुखतः श्रवणमेव परमभोग्यं मन्वानः, परमभागवतं पण्डितमेकं आनाय्य, तन्मुखात् श्रीरामकथामृतमास्वादयन् कालं चिक्षेप । अतियति चैवं काले आरण्यकाण्डप्रवचनानेहसि खरदूषणसङ्गरे सुश्रावतमिमं श्लोकं भक्तिमान् कुसशेखरः ।

***चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।***
***एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥*** (२४-२३)

इत्यादिश्लोकार्थप्रवचनं विपुलया श्रुत्वा, प्रेम्णा परवशः अधर्मयुद्धमसहिष्णुः शीघ्रं स्खलद्गतिः धनुर्बाणान् श्वङ्गं वर्त्म च समादाय एतादृश्यां महीयस्यां भगवत आपदि चतुरङ्गबलसमन्विता वयं किं तु तूष्णीकाः स्थातुमर्हामः । भगवद्विषये किञ्चित्काररहितानां धिग्धिग्जीवितम् । न वयं निन्द्यजन्मानो भवेम । अधुनैव वयं स्वकीयसेनासमूहसनाथाः पञ्चवटीप्रान्तं गत्वा, असहायस्य दाशरथेः यथाशक्ति साहाय्यमारचय्य विजयश्रियं पश्येम इति उद्गृणन् सेनासन्नहमादिशन् कोलाहलमुच्चावचं कलयन उदस्थात् । एवमस्थाने समुज्जृम्भमाणमित्रं संभ्रममदसीयं संपश्यन्, चित्रीयमाणचेताः सदुपायविदग्रणीः सः पौराणिकः चातुर्यभूम्ना सद्य एव

*तं दृष्ट्वा शत्रुहन्तारं महर्षीणां च सुखावहम् ।*
*बभुव दृष्ट्वा वैदेही भर्तारं परिषस्वजे ।।*

इति तत्रैव विजयधट्टं वाचयित्वा, असहायशूरस्य अनपायसाहसस्य रक्षाबलक्षपणविचक्षणस्य रामभद्रस्य विजयश्रियं विशेषतः उपन्यस्य अखण्डकोलाहलम् अशीशमत् । ततः प्रभृति सः प्रौराणिकः यत्र यत्र रामचन्द्रस्य विजयप्रथा विशेषतः वर्णिता श्रीरामायणे, तत्रैव स्वकीयमुपन्यासप्रागल्भ्यं प्रपञ्चयन्, यत्र यत्र क्लेशवार्ताप्रसक्तयः तत्र झाटित्येन व्रजंश्च सन् जागरूक एवासीत् कथाप्रवचने । कुलशेखरः परमया भक्त्या युक्तः तदेकहृदयः आक्षेपादिरहितः रामयणं शृण्वन् स्थितः ।

एकस्मिन् दिने सः पौराणिकः अन्यकार्ये संप्रविष्टः रामायणं वक्तुं पुत्रं प्रेषितवान् । राज्ञः अभिप्रायं अजानानः सः पौररुणकः तत्रोक्तरीत्या सीतापहारकथां विषादमयीं विशेषतः विवृण्वन् तां सर्वां कथां तथा अकथयत् । तदाकर्णनसमक्षण एव कुसशेखरः आग्रहस्य परां काष्टां प्राप्नुवन् परितप्यमानमानसः सहसा समुतथाय असमन्मातरं यशस्विनीं रामपत्नी दुरात्मा पापः रावणः कथमपहृतवान् ? अहमधुनैव झटिति गत्वा, सिन्धोः, सलिलं उल्लङ्घ्य, सलीलम् अखिलजगन्मातरम् अस्मन्मातरम् आनीय मम पितुः रामचन्द्रस्य पादयोः समर्पयेयम् इत्याक्रन्दन् लङ्कां प्रतस्थे । तस्य पृष्ठतः महत् चतुरङ्गबलं प्रतस्थे । तद्भक्तिपारवश्येन समुद्रमभिगच्छतः तस्य निवर्तने कोऽपि न शक्तः । यथा प्रलये तथा वेलातिक्रमणस्याब्धेः भुपतेः अतिदेवचरितस्य रामभक्तस्य कुलशेखरस्य परमाद्भुता तर्मा सर्वोत्कृष्टतमांभक्ति सन्द्रष्टुकामाः देवाः सर्वे विमानस्थाः नभस्स्थले आस्थिताः । राजर्षिः कुलशेखरः

महोदधिं विवेश। यथा राजा तथा प्रजाः, चतुरङ्गबलमपि सागेरे विवेश। ततः भक्तपराधीनः करुणाम्बुधिः श्रीरामचन्द्रः लक्ष्मणानुचरः मैथिलीं हस्तेनादाय प्रसन्नः तस्य नृपतेः शुभं वचः व्याजहार - कुलशेखर सद्भक्त। पुत्रक। मयि तिष्ठति किमर्थ भवतः एतादृशः महान् श्रमः? समरे सपुत्रज्ञातिबान्धवं रावणं हत्वा, सीमादाय अधुनाहं समागतः। पश्य एषा हि भवतः माता सीता इत्युक्त्वा राघवः स्वभक्ताय सीतां प्रदर्शयामास। रामं, लक्ष्मणं, सीतां, च विलोक्य कुलशेखरः सन्तुठः, प्रणिपत्य, राघवादिभिः सार्थ ससैनिकः कृतकृत्यः वेलाधिरोहणं चक्रे। ससैन्यं नृपपुंगवं कुलशेखरं ताम्रचूडपूरस्य अभिमुखं कृत्वा सर्वेषां पश्य तां श्रीरामः अन्तर्दधे। राघवमदृष्ट्वा दुःखितो राजा यथा स्वंप्नलब्धं धनं जागृवान् जनः अष्दृष्ट्वा तदा क्षणमात्रमखिलमबुध्यत कुलशेखरः। अनन्तरं पौराणिकमुखात् रामायणे प्रोक्तं सीताहरणादिकं सर्व विबुध्य, स्वरथचित्तः नृपः स्वपुरं जगाम। एवमेव अस्य राज्ञः भगवत्कथस्वभिनिवेशः उच्चावचः वाचामभूमिरवर्तत।

पौराणिकानां मुखादेव श्रीरङ्गक्षेत्रमाहात्म्यम् आकर्णयन् असौ चक्रवर्ती -

*कदाऽहं कावेरीतटपरिसरे रङ्गनगरे*
*शयानं भोगीन्द्रे शतमखमणिश्यामलरुचिम्।*
*उपासीनः क्रोशान् मधुमथन नारायण हरे*
*मुरारे गोविन्देत्यनिशमपनेष्यामि दिवसान्॥*

इत्युक्तप्रक्रियया स्वकीयाम् आशाम् अतिमात्रं वर्धयन् परिजनपरिच्छदपरिवृतः प्रस्थातुं च समैहत। अमात्यास्तु यद्यसौ श्रीरङ्गक्षेत्रमधिगच्छेत् तर्हि तत्रैव नित्यनिवासं कामयेत। पुनः अत्रगमनं मनसाऽपि न ध्यायेतं इति प्रतियन्तः, प्रतिरोधोपायचिन्तापराः सन्तः कांश्चन परमभागवतान् श्रीवैष्णवान् आतिथ्याय, समुपस्थितान् कृत्वा पुरतः अवस्थापयामासुः।

*षष्ठिवर्षसहस्रान्तं विष्णोराराधनातत्फलम्।*
*सकृद्वैष्णवपूजायाः फलेन न समं भवेत्॥*

इत्यमुं शास्त्रर्थम् अतिदृढम् अवधारयतः अस्य धरणीपतेः तदा श्रीवैष्णवाराधन कुतूहलातिशयसमृद्ध्या श्रीरङ्गयात्राकौतुकमपाहीयत। भूयसी च प्रवृतिः भागवताराधने विजजृम्भे। एवं नाम यदा श्रीरङ्गयात्रोद्यमः अस्य भवति, तदा तदा सचिवैः एतादृश एव सदुपायः संविवीयमानः आसीत्। अतश्च

श्रीवैष्णवाराधन प्रवृत्तिरेव नित्यशः वर्धमाना रङ्गयात्रा प्रवृत्तिस्तु वाङ्मात्रेण वर्तमाना चासीत्। अत एव अयमुपश्लोक्यतेऽद्यापि -

*घुष्यते यस्य नगरे रङ्गयात्रा दिने दिने।*
*तमहं शिरसा वन्दे राजानं कुलशेखरम् ।।*

इति। यदि असौ भूमिपतिः भागवताराधनप्रेमभूमानम् अनुपधिम् अनवधिम् आविकार्षीत् तदभिववृद्धे तत्र सर्वतः भागवतसमाजः। राजगृहे सर्वत्रापि अविशङ्कम् असङ्कोचं च गतागतजुषः अनेके भागवताः आसन्। तेषु च प्रीतिः प्रभोः पप्रथे वचसो वैदेशिकः। स्थित्याम् अस्याम् अतिमात्राम् असूयाम् अबिभरुः अमात्याः। अचिन्तयंश्च कथमपि भूभृतो भागवतेषु अमीषु विद्धेषं जुगुप्सां वा मंक्षु जनयेमेति।

श्रीरामनवमीमहोत्सवःसन्निदधे। तदर्थम् अपरिमितानि अलङ्करणानि सर्वतः सम्पद्यन्ते। राजभवने रामचन्द्रमूर्तेः अन्येषां च दिव्यमङ्गलविग्रहाणां दिव्याभिषेकनिर्वर्तनार्थ विग्रहतः दिव्याभरणानि उद्धासितान्यभूवन्। विपुलवेदघोषवाद्यघोषसनाथं सुमहता समारोहेण समपादयन् अभिषेकम् आराधकमहाभागाः। तदात्वे सर्वेषु च राजाधिराजप्रभृतिषु भंवत्सेवासमासक्तचितेषु सत्सु भूषणबृन्देषु अन्यतमाम् अनार्घां नवरत्नमालाम् अमात्याः अपहृत्य न्यगूहन्। अथ च भगवन्मूर्तीनां भूषणालङ्कारे प्राप्ते, तां दिव्यभूषामनवेक्षमाणाः आराधकाः अतिमात्रभयविषादविह्वला धरणीपतेः पुरः विनिवेदयन्तिस्म सम्राट् च सचिवान् समाहूय भूषणमलिम्लुचो भवदिभः अविलम्बेन विमृश्यानेतव्य इति शास्तिस्म। अचकथन् अमात्याः तदा महाप्रभो ! श्रीवैष्णवाः भागवताः इति च सततम इतस्ततः स्वैरमटन्तः मिथ्याभक्ता अमी एव मषितभगवद्भूषणाः भवितुमर्हन्ति, नेतरेशामेतावती घृष्टता कदाऽपि भवेन्नाम। तानन्तरेण नान्यत्र गता दिव्यभूषेति सत्यं शपामहे। ते एव प्रसभमव स्कन्दनीयाः। तथासति द्रुतमेव लभ्येत दिव्यभूषणं तत् इति। एवं कथनेन राज्ञः भागवतेषु वैमनस्यम् उत्पादयितुमेव किल सचिवैः भूषणमपजह्रे।

अतिसाहसिकैः जाल्मैः अमात्यैः अभिहितमिदं कर्णारुन्तुदं वचः विनिशम्य विश्वं भराधिपतिः कुलशेखरः हा हन्त हन्त बत कष्टं कष्टमिति सद्यः कर्णौ पिधाय, हरिभक्तसाधुजनसद्गुणशीलादिसम्यगवबोधसौरभोल्लासिमनस्कतया पारमार्थिकभक्तेषु तेषु मनागपि मनोविकृतिम् अनुद्वहन् मृषाभाषिषु मन्त्रिषु एव

महत्तरममर्षोद्वेगमावहन् वैष्णवशिखामणयः न कदाऽपि ईदृशं पातकं कलयेयुः सत्य, सत्यमिदम्। तदेतदनवेद्यं प्रमापयितुमद्भुतं च किमपि कर्म करवाणि पश्यत इति सङ्गिरमाणः सपदि कुम्भमेकम् अन्तर्निहितदन्दशूकमानाय्य तदेव वाक्यं पुनः उच्चारयन् प्रासारयत्पाणि कुंभस्य कुक्षौ । पुनः पुतः अवादीत् च एवं त्रिकरणशुद्धाः एते श्रीवैष्णवाः यदि भगवद्भूषां मुषितवन्तस्स्युः तर्हि दशतु कामं दन्दशुको मम हस्तम् प्राणैश्च मां वियोजयतु सद्यः इति । सत्यबद्धः सर्पः कथं नु दशेतं । परं प्राचीकशत् प्रभुवरस्य सूनृतवादितां भागवतानांच अप्रमेयं प्रभावम्।

तदात्वे सचिवाः स्वकीयामसमीक्ष्यकारितामनुशयानाः अतीव चकिताश्च प्रभोः पादपद्मयोः प्रणिपत्य, साञ्जलिबन्धं संविनयं स्वकीयं दौरात्म्यमभ्युपगच्छन्तः, क्षमां च प्रार्थयमानाः उद्गीर्णबाष्पाम्बुनयनाञ्चला अतिष्ठन्। क्षमाधनो कुलशेखरः मनसा वाचा कर्मणा च नेतः परं भागवतेषु द्रोहं वोढुमर्हथ यूयम्, सर्वथा सर्वविधपरिचर्याः तडीयपाडपद्मेषु प्रयुज्य समुज्जीवत । तत्पादसलिलपानमेव परमं प्रायश्चित्तमिदानींतनस्य पातकस्य इति अभिधाय पाययित्वा च तत्पादतीर्थं तानपि समुदजीवयत्।

अनन्तरं राजा कुलशेखरः एवमचिन्तयत् । हुतवहज्वालापञ्जरान्तः व्यवस्थितिः वरम् न तु शौरिचिन्ताविमुखजनमध्यव्यवस्थितिः इति। एवं समालोच्य भगवद्भक्तिपारगः कुलशेखरः तेषां मन्त्रिणां सहवासं अतिदुस्सहमिति मत्वा, दृढव्रताख्यं स्वसुतं सादरं साम्राज्ये निक्षिप्य, महाभागैः विबुधैः स्वान्तरङ्गिभिः श्रीवैष्णवैः सह निवृत्तराज्यः सन् सत्वरं श्रीरङ्गं प्राप्य, श्रीरङ्गनायकं दृष्ट्वा, अधनः नत्वा महाधनमिव मुमोद। नीलांशजां चेरकुलपदीपां निजात्मकां रङ्गिणी सक्तचित्तां तस्मै जगदीश्वराय समर्प्य, स्वसम्पदं यौतकमिव चक्रे। कः स्वयं च भगवद् भागवताराधननिरतः तत्रैव श्रीरङ्गधाम्नि कतिचन हायनान् यापयामास। अथन्यत्र च श्रीवेङ्कटाद्रिश्रीमदयोध्यादिदिव्यदेशेषु पर्यटनं कृत्वा तत्र तत्र भगवतो मङ्गलमाशास्य, स्वानुभवपरीवाहरूपतया पेरुमालूतिरुमोलि इति प्रथमानां द्रविडाम्नायमयी कृति धाम जगाहे ।

परात्परः श्रीमन्नारायण एव परतत्वमिति निश्चित्य, पुराणसारभूतां महती मुकुन्दमालाख्यां स्तुतिं लोकहितेच्छया चक्रे।

एव महात्मा कुलशेखरार्यः वैष्णवपारिजातः अव्याहतश्रीर्हरिभक्तिधर्मः

प्रह्लाददिव्यश्रुतदिव्यकीर्तिः दिव्यसूरिः स्वकीये दिव्यप्रबन्धे श्रीवेङ्कटाद्रिविषयके दशके श्रीमद्वेङ्कटशैलनाथ। भवतः दिव्यालयप्राङ्गणे सोपानत्वमुपेत्य सोऽहमनिशं पश्यानि तव वक्त्रम् इति स्वकीयाम् आशंसाम् आविरकार्षीदिति हेतुना अद्यापि सर्वेष्वपि दिव्यदेशेषु मुखमण्टपस्थं पृथुसोपानं कुलशेखरसोपाननाम्ना सम्प्रदाय रसिकैः व्यपदिश्यत इति वेदितव्यम्।

**पेरुमाळ्तिरुमोलि**

पेरुमाल्तिरुमोलीति द्राविडवाणी श्रीकुलशेखरसूक्तमित्यर्थं बिभर्ति। श्रीकुलशेखरसूरेः पेरुमाळ् इति साम्प्रदायिकव्यवहारः। भगवन्तं रामचन्द्रं दाशरथिं महान्तः सम्प्रदायवृद्धाः पेरुमाळ् इत्येव द्राविडभाषायां व्यवहरन्ति। श्रीरामचन्द्रस्य दिव्यावतारनक्षत्रे पुनर्वसुभे अवतीर्णोऽयं दिव्यसूरिः इति, तमेव रामचन्द्रम् आराध्यदैवतं स्वीकृतवानिति च हेतुना तमिमं पेरुमाल् इत्येव व्यवजह्रुः। अत एव अयं दिव्यप्रबन्धः पेरुमाळ्तिरुमोलीति पप्रथे। द्राविडवेदव्यासपदसमलङ्कुर्वाणेन श्रीमन्नाथमुनिना सहस्रचतुष्टयात्मना विभक्तेषु दिव्यप्रबन्धेषु प्रथमसहस्रे पञ्चमप्रबन्धतया शब्दतः अर्थतश्च परमभोग्यः अयं दिव्यप्रबन्धः निवेशितः। अस्मिन् दिव्यप्रबन्धे दशदशकानि सन्ति। पञ्चोत्तरशतसंख्याः गाथाः सन्ति। प्रथमदशके भगवतो श्रीरङ्गनाथस्य सिसेविषाम् उच्चावचप्रक्रियाभिः उदघाटयत्। द्वितीये दशके श्रीरङ्गनाथभगवद्भक्तजनानां वैभवं वाचमभूमिमवदत्। तृतीये भगवति श्रीरङ्गनाथे स्वकीयम् उन्मादातिशयं प्राकृतजनसहवासविमुखतां च व्याचख्यौ। चतुर्थे श्रीवेङ्कटाद्रौ नित्यवासकुतूहलेन तत्र नानाविधानि जन्मानि मनोरथपथे न्यधत्त। पञ्चमे केरलमण्डलस्थतिरुवित्तुवक्कोडुनामकदिव्यदेशाधीशस्य भगवतः सविधे स्वकीयम् अनन्यगतित्वम् अनेकोदाहरणप्रपञ्चनमुखेन प्राचीकशत्। षष्ठं सप्तमं च दशकं कृष्णावतारचेष्टितानुभवप्रचुरं निबबन्ध। तत्र षष्ठदशके प्रणयरोषविवशगोपिका-वर्ष्मणा बभाषे। सप्तमे कृष्णचेष्टितादि अनुभवभाग्यहीनायाः देवक्याः वाचा प्रलापविलापनात्याश्चर्यशैल्या प्रबबन्ध। अष्टमे श्रीरामचन्द्रशिशुं डोलातल्पमधिशाय्य गीतवत्याः कौसल्यायाः वाचा दाशरथिदिव्यगुणानन्वभवत्। तिरुक्कण्णपुरदिव्यदेशभगवदनुभवं चात्र चकार। नवमे कैकेयीवाग्वागुरावन्धबलेन रामचन्द्रं प्रति प्रस्थापितवतः दशरथस्य महत्तरशोकपरीवाहभूताः प्रलापाः निबद्धाः। अथ दशमे चित्रकूटदिव्यदेशस्थभगवदनुभवः कृत्स्नरामायणकथानुसन्धानमुखेन व्यरचि। एवं नाम परमविलक्षणान् दशविधाननुभवान् प्रकाशयद्भिः दशभिः दशकैः विभूषितोऽयं दिव्यप्रबन्धः भक्तजनभाग्यपरिपाकात्मारसघनः समिन्धे।

श्रीरङ्कधामनि अनन्तमधिशयानम् नीलमणिनिभं सुकुमारदिव्यविग्रहं श्रीरङ्गनाथं संसेव्य मम दृशौ कदा नु प्रहृष्येताम् । स्वामिनः पादद्वन्द्वपरिसरे प्रसूनमालिकाः प्रक्षिप्य तत्रत्यैः किङ्करैः साकं कदा नु परिचरेयम् ? स्वामिनम् उच्चैः अभिष्टूय पुष्पमालिकाः समर्प्य कदा पुनरञ्जलिबन्धेन अभ्यर्चयेयम् ? परमानन्दतुन्दिलतुम्बुरुनारदाभ्यां नमस्करणेन निरन्तरम् आसेव्यमानं मणिमयप्रासादप्राकारपरिवृत श्रीरङ्गमन्दिरे फणिनमधिशयानं च मणिवर्णं परमपुरुषं कदा नु चक्षुषा वीक्ष्य मूर्ध्ना प्रणमेयम् ? कमलासनगौरीपतिशचीपतिभिस्सह अन्यैरप्यमरैः बृन्दशः सेव्यमानस्य, सुप्रसन्नमतिभिः महर्षिभिश्च समन्तादहमहमिकया पुष्पसमर्पणपूर्वकं निषेव्यमाणस्य, मधुस्यन्दिपुष्णसंभृत-महोद्यानपरिवृत्ते श्रीरङ्गधामनि उरगराजमधिशयानस्य च जलधिसवर्णस्य श्रीरङ्गनाथस्य नयनारविन्दं मुखचन्द्रं च कदा नु संसेव्य द्रवीभूतहृदयो भवेयम् ? प्राचीनसदाचारपद्धतिबद्धादराः ये महान्तः तेषां परमधार्मिकाणां श्रीवैष्णवानां परमप्राप्यभूतं श्रीरङ्गधामनि भोगिभोगशप्यामधिशयानं परमसुन्दरम् आश्चर्यशीलं श्रीरङ्गिणं कदा न संसेव्य समुद्गीर्ण वाष्पाम्बुनयनो वर्तेय ? शार्ङ्गपाञ्चजन्यसुदर्शन-कौमोदकीनन्दकेति पञ्चायुध्याम्, वायुवेगशालिनि जयशीले गरुत्मति पक्षिराजे, अन्येषु चाखिलेषु भक्तवर्गेषु समन्तात् रक्षणमभिमुखेषु सत्सु-महत्तरैः केदारैः आरामैश्च परिवृते श्रीरङ्गे दिव्यधाम्नि शेषशय्यामधिशयानं सर्वोत्तुङ्गं श्रीरङ्गनाथं महापापी सोऽहं कदा नु संसेव्य परमानन्दसान्द्रसंश्लेषसुखं च विन्देय ? सन्ततानुभवेऽपि तृप्तिमविन्दतां परमभक्तानां परिषदि निषिद्य, भगवतो दिव्यकीर्तीः भूयसीः संकीर्त्य, हर्षप्रकर्षेण सह बाष्पधारावृष्टिम् अक्षिद्वन्द्वादवकीर्य, द्रवीभूतेन हृदा सह स्तुत्वा, सततमम्बोधिघोषसनाभिनानावाद्यघोषमुखरे श्रीरङ्गक्षेत्रे फणिपतिशयनमधिशयानं परुषहेतिराजपाणिम् अस्मत्स्वामिनं कदा नु संसेव्य संसभ्रमनृत्तं च कृत्वा स्वात्मानं विस्मृत्य भूतले लुठेयम् ? स्वर्गलोकसमुज्जीवनार्थम्, अमराणामुज्जीवनार्थं, भूलोकसंजीवनार्थम्, भूनिलयसकलमनुजसमुज्जीवनार्थम्, दुःखोदर्कपापराशिप्रच्यावनार्थम्, आनन्दसान्द्रभर्गसञ्जीवनार्थं च सप्रेमभरं दक्षिणदिशामभिमुखं शयानस्य श्रीरङ्गिणः मन्दिरप्राङ्गणे परमभक्तश्रीवैष्णवानाम् आनन्दैकनिरूपणीयां महतीं गोष्ठीमासेव्य कदा नु सोऽहमपि तेषु अन्यतमस्सन् तस्यामेव गोष्ट्यां वर्तेय ? सैकतपरिवृततीरप्रान्त-विभासुरकावेरीमध्यदेशे श्रीरङ्गनामनि धामनि फणिपरिवृढशय्यामधिशयानस्य नीलतनोः श्रीरङ्गनाथस्य

सेवातत्परतां प्रकाशयता सर्वलक्षणसम्पन्नं, परमभोग्यं गाथादशकमिद-मधीयानास्सन्तः अनन्तकल्याणगुणिनः श्रीमतो नारायणस्य पदच्छायायां विराजेरन्निति फलकीर्तनेन प्रथमदशकं समाप्तम् ।

भगवद्विषयावगाहनादपि भागवतविषये अवगाहनं वरीयम् । भागवतप्रावण्यं यदा विवर्धते तदैव भगवत्प्रावण्यं संसिद्धिमुपैति । पारमार्थिकं भगवत्प्रावण्यं भागवत-प्रावण्यातिशयसमुत्पादनाय कल्पते । अत एव द्वितीयदशके कुलशेखरसूरिः स्वकीयं भगवद्भक्तजनप्रावण्यातिशयं बहुभिः प्रकारैः प्रख्यापयति । भागवतगोष्ठीदर्शनमेव चक्षुषोः साफल्यावहम् । भागवतपादारविन्दपरागनिषेवणं गङ्गास्नानादप्यतिरिच्यते । भगवद्भक्तभक्तेषु उन्माद एव मम वास्तविकी स्थितिः इत्यादि इथयन् कुलशेखरसूरिवरः अतिविलक्षणप्रक्रियया द्वितीयदशकं निबध्नाति । भघवद्गीतायां ''ज्ञानी त्वात्मैव मे मतम्'' इति भगवानपि गायति स्म । भागवतान् स्वस्यापि धारकान् नियामकान् शेषी भूतांश्च मन्यते खलु भगवान् । अन्यथा तु ज्ञानिषु भागवतेषु आत्मत्वयव्पदेशः न हि घटते । ज्ञानी आत्मा चेत् भगवान् तच्छरीरं हि भवति । ''यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम् ''यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम् तच्छेषतैकस्वरूपम् तत्तस्य शरीरम्'' इति भाष्यकाराः शरीरलक्षणमामनन्ति खलु । एतादृशशरीरलक्षणसम्पन्नत्वं भगवान् स्वस्मिन् अभ्युपैति । एवं भगवतः अपि आत्मभूतेषु भागवतेषु प्रावण्यं भगवत्प्रावण्यादपि अतिशयितम् इत्यत्रं सन्देहः नास्ति । तथा नामातिशयितं तद्भक्तप्रावण्यं द्वितीयदशके प्रतिपादितम् । अतः इदं द्तीयदशकं पूर्वचार्याणामत्यन्तादरपात्रं वेदितव्यम् ।

सत्यं चक्षुषोः फलं किमित्युक्ते - स्वप्रयत्नेन लिप्समानानाम् अत्यन्दुर्लभं स्वानुभवोपयोगिबलसम्पत्प्रदारं मधुवत् परमभोग्यं लक्ष्मीसनाथं अम्लानवनमालाविभूषितवक्षसं च श्रीरङ्गशायिनं स्तुत्वा मोहविवशमानसा ये नृत्यन्तः भगवन्नामानि क्रन्दन्तश्च ज्ञानविपाकरूपम् अज्ञानमासादयन्ति तथाविधानां पारमार्थिकभागवतानां गोष्ट्या अवलोकनभाग्यं यदि लभेमहि तदेव सत्यं चक्षुषोः फलम् ।

भगवतः सरसिजनिलयासंश्लेषवैदग्ध्यम्, गोगणसञ्चारणम इत्यादिकम् अनुचन्त्यि प्रेमवैवश्येन नृत्यतां गायतां भो रङ्गनाथोति क्रोशतां च भक्तानां पादाब्जरेणुषु विगाहनं यदि सिद्ध्यति तर्हि गङ्गावगाहनकुतूहलमपि विफलम् ।

नीलादेवीपरिणयार्थं सप्तर्षभौद्धत्यसमुत्सादनं दिव्यवराहरूपमास्थाय कृतं भूमीसमुद्धरणं, दाशरथिरूपमास्थाय कृतं वैरिव्रातावलेपविलोपनं, त्रिविक्रमरूपमास्थाय कृतं भूमण्डलसाक्रमणं च सानन्दं संकीर्त्य कवेरकन्याप्रवाहनिर्विशेषं प्रावाहितया नयनाम्बुधारया श्रीरङ्गमन्दिरप्राङ्गणं पङ्किलं विदधतां परमभागवतानां पादाब्जलग्नं जम्बालमहं तिलकपदे विन्यस्येयम्।

सज्जीकृतं दधि नवनीतं दुग्धं च युगपदुपभुज्य, तदवलोकनतः कुपितया यशोदया प्रापितदामबन्धस्य पुरा कृष्णतया अवतीर्णस्य अस्मत्स्वामिनः रङ्गनाथस्य दासानाम् उच्चैः मुहुः नारायणेति क्रन्दतां प्रणमतां स्तुवताम अत एव प्रहृष्यतां च परमभक्तानां दिव्यचरणानेव मम मानसमभिष्टौति ।

असुरावेशभरितदारुणध्वनिकरालसप्तर्षभौद्धत्यनिरसनेन नीलादेवीं परिगृहीतवन्तं, कालियनागमर्दननिर्दयं, तेजिष्ठसुदृढमहाप्राकारपरिवृत श्रीरङ्गादिव्यक्षेत्राधिनाथं सधनुष्कालमेघोपमेयं च भगवन्तं परमपुरुषं स्वहृदये बिभ्राणान् अत एव सदा पुलकाञ्चितवपुषश्च भागवतानेव ध्यात्वा मम मनः हर्षप्रकर्षविवशं बोभवीति । निखिलजगन्निदानस्य संवर्तसमयेऽपि जाग्रतः त्रिविधपरिच्छेदरहितत्वेन अनन्तव्यपदेशभाजः अत्यद्भुतस्य देवाधिदेवस्य रङ्गनाथस्य पादाब्जमवतंसयितुं स्पृहया दरिद्रान् पापिनोऽपि समुज्जीवयितुं तीर्थाटनापदेशेन सर्वत्र सञ्चारताम् स्वानुष्ठानमुखेन निरवद्यसन्मार्गसन्दर्शनसमर्थानाम् अस्मत्स्वामिनि श्रीरङ्गनाथे परमभक्तिनिध्नानां भागवतानामेव विषये मम मानसं सर्वेष्वपि जन्मसु स्पृहयालु भवेत् ।

जीमूतनिवहसदृशदिव्यगात्रं, दिव्यलावण्यनिधिं, मौक्तिकोपमेयमन्दस्मिताञ्चितदिव्याधरं, मुक्ताहारविभूषितदिव्यवक्षस्थलं विलक्षणतेजः पुञ्जमयं श्रीरङ्गनाथं सततमनुभोक्तुकामानाम् । अत एव सन्ततस्रवदश्रुपूराणां परमभक्तानां पादद्वन्द्व एव मे मनः प्रेमशालि विलसति ।

सन्ततप्रवाहया नयनाश्रुधारया रोमाञ्चिततनुश्रिया विह्वलविक्लबदशया महत्तरकोलाहलात्मकनर्त्तनकीर्तनादिनिरताः अस्मत्स्वामिनि श्रीरङ्गनाथे किङ्करवृत्त्या विभासुराः सन्तः ये नाम तस्मिन्नेव भगवति विराजन्त्युन्मत्ता इव, न ते उन्मत्ताः, तदितरे सर्वेऽपि सत्यमुन्मत्ताः ।

सरसिजवासिनी सहायस्य श्रीरङ्गनाथस्य पारमार्थिकभक्ताः ये, तेषां चरमपर्वदास्ये निष्णातेन सम्राजा श्रीकुलशेखरसूरिणा प्रोक्तमिदं परमभोग्यं

गाथाबृन्दमधीयानाः सन्तः दासदासाः भवितारः इति फलकीर्तनेन द्वितीयदशकं समापितम्।

प्रथमदशके भगवत्प्रावण्यं विशदीकृतम्। द्वितीयदशके ततोऽपि अतिशयितं भागवतप्रावण्यमाविष्कृतम्। तृतीयदशके अभागवतेषु मुमुक्षुत्वगन्धविरहितेषु केवलबुभुक्षुषु यथा वर्तितव्यमस्मादृशैः प्रपन्नैः सोऽयं प्रकारः स्वनिष्ठाप्रख्यापनमुखेन ज्ञाप्यते। पारमार्थिकभक्तानां भगवच्चिन्ताविमुखजनसहवासस्तु सर्वथा सुदुस्सहो भवति। तादृशभक्ताग्रणीः विभीषणः इति पारमार्थिकभक्तानां वैखरीं प्रकाशयति तृतीयदशकम्। देहात्माभिमानदूषितैस्सह न संवसेयम्। स्त्रीलोलुपानां परिसरेऽपि न वर्तेय। मदनकदनविवशानां सविधेऽपि न गच्छेयम्। अशनाच्छादनगवेषणैकसक्तैस्सह न युज्येय। सत्पथवैमुख्येन दुरध्वाध्वन्यान्नोपसर्पेयम्। किं बहुना ? सर्वथा मद्विसजातीयैः सह न संवसेयम् इति स्वकीयं दुर्जनसंवासवैमुख्यम् अतिविपुलं प्रकाशयति कुलशेखरसूरिः तृतीयदशके।

क्षणभङ्गुरजीवितमेव पारमार्थिकजीवितत्वेन गृण्हता, प्राकृतनिवहेन सह न संवसेयम्। स्वामीन् श्रीरङ्गनाथेति भगवन्नामान्येव सततमानवर्तयन् वर्ते। मयि वत्सले भगवति एव अहं व्यामुग्धो अभूवम्।

कृशोदरीषु वनितास्वेव सक्तैः प्राकृतैः सह नाहं युज्येय। श्रीरङ्गधामन्नित्युच्चैः आक्रोशन् नृत्यंश्चाहं मयि व्यामुग्धे भगवति व्यामुह्यामि।

इक्षुधन्वनो मारस्य दारुणधनुष एव ये किङ्कराः तादृशैः प्राकृतैः सह न संमिलेयम्। हारस्फुरदुरसोऽनन्तस्य नारायणस्य नरकान्तकस्य रङ्गनाथस्य विषये अहमुन्मत्तः।

अशनमाच्छादनं चैव कामयमानानां तदर्थम् इतस्ततः धावतां च प्राकृतानां निवहे नाहं संगतस्स्याम्। भगवति पूतनास्तन्यपायिनि श्रीरङ्गनाथे व्यामुग्धोऽहम्।

निरवद्यां समीचीं सरणिम् उत्सृज्य विपरीतमेव नियतमाचरताम् अनीतिपथयायिनां समाजे न संगतो भवेयम्। जगन्निदाने गोपालकृष्णे लक्ष्मीनाथे भगवति रङ्गनाथे भृशम् उन्मत्तोस्म्यहम्।

अनन्यप्रयोजनतायां मत्साधर्म्यविरहितैस्सह न संवसेयम्। स्वर्भोगमपि तृणीकृतवानहम्। नित्यसूरिनाथे श्रीरङ्गनाथे परम् अनारतम् उन्मत्तोऽस्मि।

भगवान् पुण्डरीकाक्षः सर्वथा धूर्तसंवासकामुकं चेतो निरास्थत् । स्वामिन् रङ्गप्रभो इति तमेव आह्वयामि । तस्मिन्नेव प्रभुपरिबृढे भृशमुन्मत्तोऽस्मि ।

हेतिराजाभिरामदिव्यपाणितलस्य श्रीरङ्गनाथस्य चरणद्वन्द्वे प्रवणेन अद्वितीयेन उन्मत्तेन राज्ञा कुलशेखरेण कथितमिदं सूक्तं अधीयानाः सन्तः सर्वथा निरवद्या भवितार इति फलकीर्तनेन एकया न्यूनं दशकं समापितम् ।

भगवति श्रीरङ्गनाथे तद्भक्तेषु च भक्तिभूमानाम् इतरेषु वैमुख्यं च त्रिषु दशकेषु प्रकटितवान् श्रीकुलशेखरसूरिः । अधुना चतुर्थदशके भगवति श्रीवेङ्कटाद्रिनाथे प्रवणहृदयस्सन् विलक्षणम् अर्थविशेषं प्रकाशयति । कुलं रूपं वयो विद्या धनं च मदयन्ति इत्युक्तरीत्या गर्वहेतुषु पञ्चसु सत्स्वपि प्रथमपरिगणितं कुलं प्रायः अत्यन्ताहङ्कारहेतुर्भवति । नाहं जघन्यजातौ जातः । अपि तु उत्तुङ्गजातिजन्माऽस्मीति बहूनामग्रिमं कुलम् अवलेपहेतुर्भवति । तत्त्वदर्शिनस्तु भगवद्भागवतदास्यानुकूलं जन्म यद्वा तद्वा भवतु नाम । सैव सत्कुलप्रसूतिः इत्यवधारयन्तः अभिजनाहङ्कारविदूरगा भवन्ति । तथा असौ कुलशेखरसूरिवरः श्रीवेङ्कटाद्रौ नानाजन्मकामनां प्रकटयति चतुर्थदशके ।

भगवत्कैङ्कर्यमेव कामये । न पुनः मांसप्रचुरदेहयोगम् । भगवत्सम्बन्धविशिष्टे देशविशेषे क्वापि कोणे यत्किमपि वा जन्म भूयात् । श्रीपाञ्चजन्यपाणेः भगवतो वेङ्कटमहीधरे स्वामिपुष्करिण्यां बकजन्मा भवानि ।

अभङ्गुरयौवनसम्पदाद्यसुरस्त्रीगणमध्ये सम्पत्स्यमानं स्वर्लोकसाम्राज्यं वा भूलोकसाम्राज्यं वा न कामये । अपि तु मधुस्यन्दिदिव्योद्यानपरिवृते श्रीवेङ्कटशैले क्वापि जलाशये मीनजन्यलाभौपयिकभाग्यवान् भूयासम् । अधस्तनगाथायां बकजन्मा भूयासमित्याशसा प्रकाशिता । बकस्तावत् विहङ्गमविशेषः । अत एव स पक्षाभ्यामुड्डीय ततः अन्यत्रापि गन्तुं शक्तः । तथा गमने वेङ्कटाद्रिनित्यनिवासो हि न सिद्ध्येत् । अतः तस्मिन् जन्मनि अनुपपत्तिः अस्तीति मत्वा अन्यत् जन्म कामयते अस्यां गाथायाम् । मीनो हि स्वाश्रयादन्यत्र गन्तुं न पारयतीति तज्जन्मकाङ्क्षणं क्रियते । इदानीमेव झषजन्मना भवितव्यमिति न निर्बन्धः । यदा कदाऽपि वा तज्जन्म घटतामित्याशयं व्यनक्ति मीनजन्मलाभौपयिकभाग्यवान् भूयासम् इति एषः वचोविन्यासः ।

जटाधरचतुर्मुखशचीपतिप्रभृतीनां सुरवराणामपि भक्तजनसम्मर्दातिशयेन अन्तःप्रवेष्टुमशक्यस्य भूलोकवैकुण्ठव्यपदेशभाजः वेङ्कटाद्रेः द्वारि श्रीसुदर्शनपाणेः

भगवतो श्रीनिवासस्य तम्बूलचर्वणानन्तरभाविनिष्ठीवनोपयुक्तसौवर्णकलशधारी सन् अन्तरङ्गपरिचारकैः साकम् अन्तःप्रवेशभाग्यशाली भूयासम् । अधस्तनगाथायां मीनजन्मनि आशंसा प्रकाशिता । तत्रापि काचिदनुपपत्तिः बभासे । मीनो हि जलैकजीवातुर्जन्तुः । जले शुष्के सति मीनो न हि । एवं विधां झषजन्मनि अनुपपत्तिम् अभिसन्धाय किङ्करविशेषजन्म काङ्क्षति अनया गाथया । जगति महाराजः ताम्बूलचर्वणानन्तरं तन्निष्ठीवनार्थं पात्रविशेषं पालयितुं कमपि सेवकं बिभर्ति । तथा श्रीवेङ्कटाद्रिनिलयः कमलाकामुकोऽपि सौवर्णकलशपाणिं किङ्करं धत्ते । तस्य पदवी काङ्क्षता भवति । भगवत्परिसरगमनसौकर्यार्थम् एतत् जन्मकाङ्क्षणमिति ध्येयम् ।

चारुविद्रुमादिरत्नौघभासुरशिशिरकलशोदधिशायिनो भगवतो वेङ्कटाचलपतेः पादद्वन्द्वसिसेविषया, उच्चावचगीतमुखरभ्रमरौघसङ्कुले श्रीवेङ्कटाचले चाम्पेयमहीरुहजन्मौपयिकभाग्यं कामये । भगवत्पादाब्जसेवनेच्छया चम्पकवृक्षजन्म कामये इति अनया गाथया कथ्यते । चम्पकवृक्षजन्मलाभे सति भगवत्पादारविन्दसेवा कथं घटते इति शङ्का माभूत् । भगवतो वहिर्यात्रावसरेषु सुलभमेव तत्सेवनम् । अधस्तनगाथायां किङ्करविशेषजन्म काङ्क्षितम् । तत्रापि काचिदनुपपत्तिः अभवत् । सौवर्णकलशे करस्थिते सति स्तेयबुद्धिरपि जातुचिज्जायेत । भगवत्परिसरगमने नानाविधा अपचारा अपि संभवेयुः इति विभाव्य स्थावरविशेषजन्मैव भूयादिति अनया गाथया काङ्क्षति ।

मत्तमातङ्गमूर्धनि निषद्य नानाविधानन्दोपभोगरूपां सम्पदं साम्राज्यं च नाहं कामये । सर्वेश्वरस्य भगवतो अभिरामे वेङ्कटमहीधरे वन्ध्यवृक्षविशेषो वा भूयासम् ।

ऊर्वसीमेनकादीनां कृशोदरीणामप्सरसां गानलास्यादि उपभोगरूपं स्वर्भोगं नाहमाद्रिये । षट्पदझङ्कारमुखरे श्रीवेङ्कटशिखरिणि तत्तादृशः शिलाखण्डविशेषः भवितुं भाग्यवान् भूयासम् ।

गगनमण्डलोद्भासकशशधरमण्डलसन्निभश्वेतच्चत्रच्छायायां राजाधिराजभावेन सिंहासनमलङ्कृत्य सर्वोपलालानीयस्थितिरूपां सम्पदं सम्पत्त्वेन न मन्ये । मधुस्यन्दि पुष्पोद्यानसान्द्रे श्रीवेङ्कटाचले वन्यनिर्झरो भवितुं कामयेय ।

शशिकलाञ्चितकपर्दिशालिना कपर्दिना विरिचेन वासवेन च यथायथं आचर्यमाणानां यज्ञविशेषाणां फलेग्रहित्वकरणे प्रभवता भगवता श्रीनिवासेन सनाथे सौरभाढ्यशिशिरोद्यानपरीते श्रीवेङ्कटमहीधरे भक्तजनसञ्चारार्हः पन्था भूयासम् ।

श्रियःपते ! परमपुरुष ! श्रीवेङ्कटाद्रिनाथ ! भवदालयमुखद्वारे भागवतानां निर्जराणां निर्जरयोषितां च पादन्यासयोग्यस्य दिव्यसोपानस्य जन्म लब्ध्वा संसेविषीय भवदीयं विद्रुमसममधरम् । ईदृशीमाशंसनमनुसृत्य श्रीशैले अद्यापि कुलशेखरप्पडि इति व्यवहारः सम्पद्यते । भगवन्मुखारविन्दसन्निकृष्टस्य सोपानस्य तावदेवं व्यवहारः । श्रीवेङ्कटाद्रौ केवलमेवं न, सर्वेष्वपि विष्णवालयेषु । एतेन च कुलशेखरसूरेः नानाजन्माशंसनं सर्वदिव्यदेशविषयकमिति गम्यते ।

स्वर्लोके एकच्छत्राधिंपत्यसम्पत्प्राप्तिपूर्वकम् ऊर्वशीपरिरंभलाभमपि नाद्रियेय । विद्रुमसमाधरस्य भगवतो वेङ्कटमहीध्रनाम्नि दिव्ये धाम्नि यत् किमपि वा वस्तु जायेय । सर्वथा श्रीशैलवास्तव्यत्वमेव परमपुरुषार्थतया अभिसंहितम् ।

अतिशिशिरपरिसरपरिकर्मितस्य श्रीवेङ्कटाद्रेः ईशितुः भगवतो श्रीनिवासस्य पादब्जसेवाहेवाकिना क्षत्रियकुलानुरूपवर्ष्मभृता श्रीकुलशेखरसूरिणा कीर्तितमिदं स्वादुद्राविडवाङ्मयं गाथादशकमधीयानाः सत्पुरुषाः योग्यभक्ताः भवितारः इति फलकीर्तनेन चतुर्थदशकं समापितम् ।

प्रपित्सूनां जनानां आकिञ्चिन्यम् अनन्यगतित्वम् इति उभयम् अतिमुख्या अधिकारसम्पत् । आकिञ्चन्यं नाम ''न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे'' इत्युक्तप्रक्रियया कर्मयोगज्ञानयोगाद्युपायान्तरेषु मात्रयापि अनन्वितत्वम् । अथ अनन्यगतित्वं नाम-हे भगवन् । त्वमापन्निवारको वा भूयाः । अथ आपदभिवर्धको वा भूयाः । सर्वथा त्वमेव शरणं मम इति अनुसन्धानपूर्वकं तदेकगतिकत्वम् । इदं तु प्रपन्नानामत्यावश्यकं लक्ष्म । यदा सम्पद्विवर्धते तदा भगवन्तं स्तुयुः । यदा तु विपदुद्भवति तदा तं निन्देयुरपि निर्घृणो भगवानिति । संपद्विपदुद्भवरूपायाम् उभय्यामपि दशायां समरूपमेव भगवति परमकारुणिकत्वानुसन्धानं हि उत्तमभक्तलक्षणम् । इदमेव पञ्चमदशके आविष्क्रियते । भगवतस्तु चेतनानां विषये प्रियपरता हितपरता च इत्युभयं वर्तते । प्रियपरस्सन् सम्पदो ददाति । हितपरस्सन् विपदो वितरति इति अनुसन्धाने सति अनपाये भक्ताः सर्वथापि तस्मिन् परमकारुणिकतामेव प्रतिपत्तुं प्रभवन्ति । तदिदं विविधोदाहरणपूर्वकम् पञ्चमे दशके उपन्यस्यते । केरलमण्डले तिरुवित्तुवक्कोड्डु समाख्यः दिव्यदेशविशेषः विलसति । तदधिनाथस्य भगवतस्सन्निधौ दशकमिदं विज्ञाप्यत इति वेदितव्यम् ।

सौगन्ध्यसंभृतपुष्पवितितिविभूषितदिव्योद्यानपरिवृतविद्वत्क्रोडक्षेत्राधीश ।

भगवन् त्वयैव समुत्पाद्यमानान् क्लेशान् त्वं न निरस्यसि चेदपि त्वमेव अस्माकं गतिः। त्वत्पादारविन्दात् अन्यत् अस्माकं शरणं नास्ति। लोके जननी यद्यपि महता कोपावेशेन स्वकीयं स्तनन्धयं निरस्यति, तथापि तस्याः कारुण्यमेव अनुसन्दधानः सः शिशुः विलपन्नपि यथा तामेव अनुधावति तथा ह्येतत्।

गगनस्पृशा प्राकारेण परिवृतस्य विद्वत्क्रोडदिव्यदेशस्य स्वामिन् हरे! सस्यानि यथा जलदैरुपेक्षितान्यपि तानेव कालमेघान् सकुतूहलं प्रतीक्षन्ते, तथा अहमपि भवदनपोढदुःखोऽपि सन् भवदेकसक्तचितो भवामि।

विद्वत्क्रोडपुराधिनाथ हरे। सर्वैरपि गर्हणीयानि दण्डनानि कुर्वन्तमपि भर्तारं विसृज्य कमप्यन्यं यथा न कामयते कुलयोषित्, तथाहं भृशमुपेक्षमाणमपि भवन्तमृते नान्यं जाने। तवैव पादाब्जे कीर्तयेयम्।

झषविततिविहृतिभरितविपुलकेदारपरीतविद्वत्क्रोडस्थलेश्वर! भगवन्। मयि कृपाद्रदृष्टिपातमकुर्वन्तमपि भवन्तं नाहं विसृजेयम्, त्वदेकशरणो भवामि। प्राजारक्षणदीक्षितो महाप्रभुः परिपालनमकृत्वा क्लेशानेव उच्चावचान् सम्पादयति चेदपि यथा स एव प्रजाभिः शरणवरणकर्मतां नीयते, तथा अहमपि भवदेकगतिकः।

भगवन् विद्वत्क्रोडपुरेश आमयावी जनः निजगात्रच्छेदनतापनादिदारुण-कृत्यनिष्णातेऽपि भिषजि यथा भृशमनुरक्त एव भवति, तथा अहमपि सन्ततदुःख-सन्दायकेऽपि भवति न वीततृष्णो भवामि। कैङ्कर्यरुचिविवशस्सन् त्वत्कृपामेव प्रतीक्षमाणो वर्ते।

स्वजिघांसु कंसप्रेरितं भीषणलोचनं कुवलयापीडाभिधानं मत्तमातङ्गमभिभूतवन् विद्वत्क्रोडपुरेश। भगवन्। त्वदीयचरणयुगलप्रपदनात् अन्यत्किमस्ति मम सञ्जीवनस्थानम्। न किमप्यस्ति। वीचिमालाकुले जलनिधौ नौकायाम् ऊर्ध्वभागमध्यासीनः विहगविशेषः स्वयं सर्वतः परिभ्रमन्नपि कुत्रापि गतिम् अलभमानः यथा स्वस्थानमेव वाञ्छति, तथा अहमपि अनन्यगतिरिति मन्यस्व।

भगवन् विद्वत्क्रोडदेशाधीश! यथा सरसीरुहं नभोमण्डलसञ्चारि-गभस्तिमालिगभस्तिमालाभिरेव विकासमयते, न पुनः स्वपरिसरे सुतीक्ष्णवह्नि-सन्तापितं सदपि तथा अहमपि भवदीयशुभगुणगणैकविकासनीयहृदयोऽस्मि। त्वं ममार्तिहारी न भवसि चेदपि निरपायः मम अयम् अध्यवसायः।

भो विद्वत्क्रोडपुराधिनाथ ! हरे सस्यानि यथा जलदैः उपेक्षितान्यपि तानेव कालमेघान् सकुतूहलं प्रतीक्षन्ते, तथा अहमपि भवदनपोढं दुःखोऽसन् भवदेकसक्तचित्तो भवामि।

सान्द्रजलदविततिसंनिभदिव्यमङ्गलविग्रह ! भगवन् ! विद्वत्क्रोडक्षेत्रपते सुकृतस्वरूपिन् ! हरे ! परिपूर्णपयःप्रवाहभरितानां सरितां सर्वासामपि ''नदीनां सागरो गतिः'' इत्युक्तरीत्या यथा पारावार एव परमागतिर्भवति तथा भवदीयाः मनोहराः कल्याणगुणा एव मम शरणं भवति।

जाज्वल्यमान हेतिराजपाणे भगवन् ! विद्वत्क्रोडपुरीश ! यथा हि ऐहिकी सम्पत्तिः स्वात्मानम् उपेक्षमाणमपि भगवत्प्रवणं जनं स्वयमुपसर्पति कामयमाना सती, तथा अहमपि मदुपेक्षकं भवन्तमेव कामये।

भगवन् ! विद्वत्क्रोडदिव्यदेशनाथ ! भवता अहमुपेक्ष्यमाणोऽपि सन् सर्वथा अनन्यगतिरेव भवामि इति तत्पादारविन्दप्रावण्यातिशयेन कथयता जयशीलहेतिसेनासनाथेन श्रीकुलशेखरसूरिणा प्रणीतं गाथादशकं कीर्तयन्तः सन्तः दुर्गतिदवीयांसस्स्युः इति फलकीर्तनतः समापितं पञ्चमं दशकम्।

अर्चावतारानुभवप्राधान्येन गतपञ्चदशकानि व्यतीयुः। षष्ठदशकं विभवावतारीयगुणानुभवप्राधान्येन सम्पद्यते। जगति दम्पत्योरनुभवे प्रणयरोषपरीवाहभूतचेष्टितविशेषावतारः योषित्सु प्रथितः प्रणयरोषविरहे शृङ्गाररसपरिपूर्तिश्च न भवति। एकदारव्रतरामावतारे प्रणयरोषप्रसक्तिः अल्पीयसी। पञ्चलक्षसंख्याकान् गोपीजनान् अनुभोक्तुम् अवतीर्णे गोपालकृष्णे प्रेयसीनां प्रणयरोषजविचेष्टितानि विविधानि समपद्यन्त। तदशेषतः प्रतिपादयितुं सहस्रवदनः भगवानादिशेषोऽपि न समर्थः। तादृगनुभवप्रणाल्यैव षष्ठदशके कुलशेखरसूरिवरः निबध्नाति। तथा च व्रजवासिगोपीजनप्रणयरोषपरीवाहरूपविजल्पित-प्रकाशनरूपेण षष्ठदशकं प्रवर्तत इत्युक्तं भवति।

भो वासुदेव ! सुरभिकुसुममालाविभूषितचिकुरबन्धाभिः असंख्येयाभिः गोपाङ्गनाभिः आपूरितेऽस्मिन् व्रजे त्वदीयवक्षःस्थलसंश्लेषः सर्वथा सुदुर्लभ एव ममेति नैराश्यमधिवहन्ती सत्यपि अहं त्वदीये मृषावाक्ये अकाण्डबद्धया श्रद्धया, वृष्टिनिर्विशेषं स्पन्दमानया हि मान्याः भृशमिव कम्पितगात्रा सती यामुने सैकते त्वदागमनप्रतीक्षया आप्रभातं स्थितवती। गम्यतां प्रभो। गम्यताम्।

प्राच्ये वेश्मनि दधिमथनसक्तां शफरललितनयनां कामपि गोपकन्यकामावेक्ष्य सुभगे। एकाकिन्या त्वया मथनकार्यमिदं नैव सुसाधम्। अहमपि त्वया सह मिलित्वा मथ्नामि चेत् झटिति मथनमिदमवसायति इति अभिधाय तस्करदृशं च प्रदर्श्य, विस्रस्तकचबन्धं प्रस्विन्नमुखारविन्दं स्फुरितावरबिम्बं च यथा तथा यदकरोः त्वं दधिमथनम्, तद्यथायथम् अहं जाने। याहि महानुभाव याहि।

अयि यमलार्जुनभञ्जन ! नन्दनन्दन ! त्वदीयवयः अभिवृद्ध्या सह तव मायाचेष्टितविवृद्धिश्च भवति। सुरभिचिकुरबन्धां कामपि कन्यकामपाङ्गवीक्षालक्ष्यां कुरुषे। तस्मिन्नेवावसरे अन्यस्यां कस्याञ्चन बालिकायाम् अनुरागं निवेशयसि। अथ अपरस्याः सकाशे तव अहमस्मि दास इत्यात्थ। अथेतरस्याः सविधे कृत्रिमभाषितानि कथयसि। अथ च कुटिलकुन्तलाम् अन्यां कामपि गोपिकामाश्लिष्यसि। सोऽपि संश्लेषः छलात्मक एव।

कृष्ण ! जनन्यां यशोदायां स्तन्यभरितपयोधरायां सत्यां ताम् अपहाय पूतनायाः विषदिग्धं स्तन्यं पीत्वा उन्मत्तोऽयमिति परैः गर्हित ! भोः ! अतिशयितकामायां मयि प्रतीक्षमाणायां सत्याम् मत्प्रहितया दूतिकया सह रति चकर्थ सहर्षम्। तदपि तव कितवत्व अनुरूपमेव खलु।

अयि परिपूर्णकेशव। विद्युत्सन्निभवलग्नया कयाचनबालिकया सार्धं अन्धतमसावृते निशीथे मम वीथिकायां व्रजन्तं, पीताम्बरावकुण्ठितशिरस्कं त्वामवैक्षिषि। किञ्च पथि संदृष्टामन्यामपि कामपि कटाक्षवीक्षालक्ष्यभावं प्रापय्य सङ्केतस्थलविशेषमागन्तुमवोचः, तदपि कटाक्षवीक्षालक्ष्यभावं प्रापय्य सङ्केतस्थलविशेषमागन्तुमवोचः, तदपि अहमज्ञासिषं बत। किमिति तां विहाय अत्र समागतोऽसि। अधुनाऽपि कामं तत्सकाशमेव गच्छतात्।

भो मल्लप्रस्पर्धिभुजबलशालिन्। वासुदेव। मया सह कृतशयनः त्वं निद्रविवशां मामुत्सृज्य, निशीथे समुत्थाय, अन्यत्र गत्वा, तस्यां रजन्यां अथ अपरदिनरजन्यां च भूयसीः ललनाः संश्लिष्य समागतोऽसि। एतादृशस्त्वं किमिति सम्प्रति मत्सकाशमागमः ? स्वामिन् ! महाप्रभो ! तासामेव सनीडमुपसर्प।

भो भोगिभोगशयनीयंशायिन् कृष्ण ! न वयं पूर्ववत् त्वदीयकृत्रिमभाषित-विस्रम्भभरिताः। नापि त्वदीय स्पृहाविषयभूतनयनसौन्दर्यशालिन्यो ललनाश्च स्मः। अस्मदगारमतीव विलम्बेन समागतोऽसि। अलमेतादृशसमागमेन। तव दिव्यपीताम्बरे चारुमुखमण्डले दिव्याधरबिम्बे रमणीशिखाबन्धे च मुग्धाभिः अस्माभिः तव

अनृतवचसि श्रद्धया अनुभूतैः क्लेशैः अलम् । पुनरपि कृत्रिमभाषितानि भाषितुं मा स्म समागच्छ इह । याहि याहिं कितवाग्रगण्य । अपरस्याः गोपिकायाः रोषकषायितं भाषितमिदम् ।

भोः कितव ! कृष्ण ! स्थलविशेषं निर्दिश्य, तत्र मदागमनमादिश्य, तथैव तत्रागतायां मयि, मालतीलतावितानच्छायायां चिरात् निलीय स्थितामन्यां कामपि गोपकुमारिकां संश्लेष्टुं गत्वा, अथ मामपि वीक्ष्य, आविलहृदयस्सन्निव अन्यतोऽपासर्पः । पीतवसनं करेण गृहीत्वा मत्तश्चकित इव भावनां विधाय गतवानसि । अस्तु । पुनः कदाचित् मदेकगतिकस्सन् मत्सकाशमागमिष्यसि खलु । तदात्वे मम कोपप्रशान्ति सम्पादयेयम् । इदमन्यस्याः गोप्याः रोषभाषितम् ।

अयि गोपालकृष्ण ! माङ्गलिकावैजयन्तीविभूषितवक्षस्कः बर्हिबर्हावतंसः रमणीयपीताम्बरमण्डितकटितटः पुष्पगुच्छावतंसिकर्णशष्कुलीकश्च सन् मधुस्यन्दिकुसुमाञ्चितचिकुरप्रकराभिः ललनाभिः सह संश्लिष्य, तज्जनितानन्दिपरीवाहरूपं वेणुगानमारचयन् नागतोऽसि । एवमन्यासां गोपीनां भूरिभाग्यमसकृद्भवति । अस्माकं कृते एकस्मिन्नपि दिने वेणुगानं न करिष्यसि । काचन सनिर्वेदमाह ।

सरसिजवासिनी सहाये गोपालकृष्णे भृशमनुरक्तानां गोपालबालिकानां मुखात् नक्तमर्धयामे प्रणयरोषवशात् यद्यद्वाक्यजातमवातरत् तत् साम्राज्यधुरन्धरेण श्रीकुलशेखरसूरिणा परमभोग्यं प्रकाशितम् । तदिदं ये कीर्तयन्ति ते सांसारिकक्लेशवैदेशिकाः स्युः इति फलकीर्तनेन षष्ठं दशकं समापितम् ।

*एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः ।*
*नागापर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ।।*

इत्युक्तरीत्या क्षीरसागरात् मधुरामुपेत्य, तत्र वसुदेवदेवक्योः आत्मजतया प्रादुर्भूतः भगवान् । सद्य एव -

*यमुनां चातिगम्भीरां नानावर्तझषाकुलाम् ।*
*वसुदेवो वहन् कृष्णं जानुमात्रोदको ययौ ।।*

इत्युक्तरीत्या वसुदेव एव स्वयं कृष्णमादाय यमुनामतिलंघ्य निशीथे व्रजमुपेत्य, तत्र यशोदाभर्तुः नन्दगोपस्य सद्मनि तं शिशुं विसृज्य प्रतिनिवृत्तः । अथ कृष्णकिशोरस्य पूतनवध-शकटमर्दन- यमलार्जुनभञ्जन-गोवर्धनोद्धरण- रासक्रीडितादीनि अतिमानुष वृत्तानि अतिवृत्तामरविक्रमप्रतापांश्चानुक्षणमनुभोक्तुं नन्दगोपः यशोदा

चैव निरुपमं भाग्यमलभेताम् । वसुदेवदेवक्योः कालक्षेपस्तु सततं प्रलापविलापैरिव भवति । तयोः निर्वेदस्तु सत्यं वाचमभूमिः । अथ कृष्णः यदा कंसवधार्यं अक्रूरेण मधुरामानीतोऽभूत, तदा सः कंसं निहत्य, पित्रोः वसुदेवदेवक्योः अन्तिकमायासीत् । तदात्वे ततः पूर्वं च देवकीमुखतः यानि यानि प्रलापविलापवचांसि निर्गतानि तानि तद्भावभावनया सप्तमे दशके निबध्यन्ते । नन्दयशोदयोः असमाभ्यधिकभाग्यमहिमा, स्वात्मनोः वसुदेवदेवक्योः दौर्भाग्यभूमा च चारुतरोक्तिजालैः विव्रियते ।

रसघनेन इक्षुखण्डेन सदृश कृष्ण ! शेष्व ! अम्बुजायतविलोचन ! कृष्ण शेष्व ! सिन्धुसवर्णमुकुन्द ! शेष्व ! कलभसमान केशव शेष्व ! सुरभिकचबन्ध ! मदीयसूनो ! शेष्व ! इत्येवम् असकृदभिधाय कर्तव्ये परमानन्दसन्दोहमय-डोलाशयनगीतोपगाने भाग्यदरिद्रासु जननीषु जघन्या खल्वहं क्षोदीयसी माता । इति देवकी प्रलपति ।

कज्जलालंकृतेन तीक्ष्णेन सरसिजोपमेन च स्वकीयेन चक्षुषा डोलातल्पवितानावलम्वितेषु कृत्रिमशुकशाबादिषु वस्तुषु यत्किमपि अवेक्षमाणः अन्तः प्रदेशे शोणौ, बहिः प्रदेशे कृष्णौ स्वचरणावाकुञ्चितौ च कुर्वाणः आकण्ठवारिभरमन्थर मेघदेश्यस्सन्, अतिमृदुलपादाङ्गुलीवितरीराकोच्य पाणितले गृण्हन् कलभपोतवत् यदा त्वं डोलातल्पे शयनमकार्षीः, तदा अहं तद्रामणीयकमवलोक्यानन्दितुं भाग्यभागिनी नाभूवम् । केशव हन्त धिङ्मामा । धिङ् माम् ।

पारम्पर्यगतबन्धुत्वशालिन्यः प्रेमविवशाश्च ललनाः क्रमशः त्वाम् स्वस्वकटितटे निवेश्य, प्रभो ! अस्मत्कुलप्रदीप ! नीलजीमूतवत् स्पृहणीयमूर्ते ! गोपालपुङ्गव ! प्रदर्शय तावत् त्वदीयं जनकम् इति कथयेयुः । तदात्वे त्वमङ्गुलिनिर्देशतः कटाक्षपातनेन च नन्दगोपं प्रादर्शय । तथा नाम प्रदर्शनभाग्यं यशोदापतिः नन्दः अलभत गर्भदुर्भगायाः मम पतिः वसुदेवस्तु नैव लेभे हन्त !

हे श्रीकृष्ण ! विश्वप्रह्लादनप्रगल्भराकाशशाङ्कनिभं मुखमण्डलं चारुतरं पाणिवक्षो भुजं सौगन्ध्यसंभृतं केशपाशम्, अष्टमीन्दुनिभं निटिलं, पृथुलसरसीरुहोपमं लोचनं च विभ्रतः तव दिव्यमङ्गलविग्रहसुषमासम्पदम् अद्य लोचनाभ्यां पिबन्त्या मम त्वदीयशैशवबाल्यकेलीनाम् अनुभवानन्दप्रच्युतिः हा हन्त सन्ततनिर्वेदनिदानं भवति । जननी सत्यपि अहं जननीत्वसाफल्यमलभमाना हि दूये । वत्स सुदुस्सहोऽयं मम खेदः । कृष्णं युवदशायां साक्षात्कृतवत्याः देवक्याः वाक्यमिदमिति सुगमम् ।

वत्स वासुदेव ! त्वया समयेषु फालतलविलसत् ललन्तिकाचलनपूर्वकं क्रियमाणस्य अधरामृतप्रदानस्य स्वीकरणं, स्वतातविग्रहसनाभित्वदीयतनु-सौन्दर्यावलोकनजनितहर्षानुभवं, कराङ्गुलिं वदने विन्यस्य, सरोषमिव तदा तदा त्वया उच्चार्यमाणानां, मुग्धविजल्पितानां श्रवणं च हन्त । दुर्भगाऽहम् ईषदपि नालभे । हा हन्त सर्वविधमपि भागधेयं परमभाग्यवती दिव्या यशोदा लेभे ।

शिशिरसुभगसरसिजकुसुमोपमेयविलोचन ! कृष्ण ! मृन्मयीषु स्थलीषु जानुचङ्क्रमणखेलनमाकलय्य, सरभसमुपसृत्य मातुर्वक्षसि समाश्लेषणं तदात्वे तनुस्थितानां परागाणां जनन्या वपुषि निपातनं च यद्भवति, ततु दौर्भाग्योपहतायां मयि नाभूदहह । चारुभिः कराङ्गुलीभिः अखिलाभिरपि संगृह्य, त्वया अद्यमानस्य दिव्यान्नस्य शेषमशितुमपि भाग्यवती नाहमभूवम् । अहह महापापिनी खलु साऽहम् । हा बत मम माता किमर्थं मां प्रासूत । सर्वथा मम जन्म विफलमेव ।

सौशील्यनिधे । मम कोमलकुमार । त्वं ममैव सद्मनि स्थितो यदि स्यात् तदा मम पाणितलमधिशयानस्सन् परसुन्दरसुकुमारकिसलयोपमेयेन कराग्रेणैकेन ममैकस्य पयोधरस्य चूचुकमभिमृशन् अपरं च पयोधरमास्वादयन् मध्ये मध्ये मामवेक्ष्य स्मयमानश्च सन् स्तन्यं पिबेः खलु । हा हन्त । एतादृशात् परमभाग्यात् च्युता प्रच्युत्ताऽस्मि ।

भाण्डस्थं नवनीतमशेषमपि पाणितलेन परामृश्य, स्पर्शं स्पर्शम् ईषत् गृहीत्वा, अशनसमये स्थितं कराम्बुजसन्निवेशं, जातरोषायाः दामग्रहणचटुलायाः मातुः अवलोकनेन जातां चकितचकितावस्थितिं, दधिलिप्तमुखारविन्दस्थितिं, रोदनं, भीरुविलोकितं रोदितुमपि भिया क्रियमाणम् अभिरामम् अधरस्फुरणम्, अन्ततः अञ्जलिबन्धं च अनुभूतवती यशोदा नित्यानन्दस्य सीमाभूमिं दृष्टवती । अयि कुमार ! कृष्ण ! गोवर्धनाद्रेः छत्रीकरणम्, अतिरमणीयरासक्रीडाप्रवर्तनं, कुम्भनर्तनसंविधानं वत्सेन कपित्थोपमर्दनं, स्वचरणमर्दनेन कालियनागावलेपविलोपनं च इत्यादिषु त्वदीयजैत्रबालचेष्टितविशेषेषु एकमपि नाहमवैक्षिषि । तदवेक्षणजनितहर्ष-प्रकर्षानुभवभाग्यदवीयसी खलु अभूवम् । यदि तदवलोकनभाग्यम् अधुना घटेत तर्हि दयस्व भोः । भगवतः कृष्णस्य अतिमानुषशक्तिविशेषं सम्यगवगच्छन्त्याः देवक्याः एवम् अभ्यर्थना युज्यते ।

विप्रलम्भकदुष्टहृदयां पूतनां शुष्कशरीरां विनिर्गतरुधिरवसामांसादिकां

प्रशिथिलस्नायुसञ्चायां च कृत्वा तस्या विषदिग्धं स्तनम् आस्वाद्यापि मयि कृपया एव खलु कृष्ण त्वं जीवितवानसि। कंसजीवितहरकालमेघ ! स्वामिन् ! स्तन्यपानार्थं समीचीनां जननीं सम्पादितवानसि वृथैव खल्वहं स्तनभारभराक्रान्ता सती जघन्यजननी भवामि । त्वदृतेगतिहीनाऽस्मि । यदा कदाचिदपि वा त्वदनुभवभाग्यं घटेत नन्विति प्रत्याशया प्रसभं प्राणिमि ।

सुसमृद्धमथुरापुराधिनाथं कंसं वीरस्वर्गमधिगमय्य स्वसविधम् उपागतस्य श्रीकृष्णकिशोरस्य अप्रमेयाद्भुतबाल्यचेष्टितविशेषावलोकनविरहजनित-निर्वेदातिशयया दिव्यदेवक्या यथा विलपितं तथा स्वयं विलप्य प्रोचुषो भगवत्पादारविदावतंसि शिरसः सम्राजः श्रीकुलशेखरसूरेः मधुरगीतप्रचुरपाशुराः इमाः अधीयानाः सन्तः सत्यं संसारसरणिवैदेशिका भवितार इति फलकीर्तनेन सप्तमदशकं समापितम् ।

कृष्णप्रसवभाग्यशालिन्या अपि देवक्याः तदीयबाल्यलीलानुभवदारिद्र्य-प्रयुक्तनिर्वेदनिर्भरायाः विलपितं सप्तमदशके निबदद्धम् । ''एकसम्बन्धिज्ञानम् अपरसम्बन्धिस्मारकम्'' इति न्यायेन देवकीस्मरणं कौसल्यास्मरणमुपाजीजनत् । कौसल्या हि नैतादृशदौर्भाग्यशालिनी । श्रीरामचन्द्रं पुत्रत्वेन प्रसूतवती सा तस्य बाल्यलीलानुभवौपयिकभाग्यशालिन्येव विरराज ।

महर्षिः वाल्मीकिस्तु स्वकीये श्रीरामायणे तन्मात्रयापि नन्ववबध्नात् । यस्मिन् सर्गे श्रीरामावतारं निबबन्ध, तस्मिन्नेव सर्गे स्वयज्ञत्राणार्थं रामं निनीषतः विश्वामित्रस्य महर्षेः उपस्थितिमपि निबद्धवान् । बालकाण्डे अष्टादशसर्गे वीक्षतामेतत् । तदास्तां नाम। कौसल्यादेवी भगवन्तं रामचन्द्रं डोलिकातलिम् अधिशाय्य विविधानि गीतानि श्रुतिसुभगानि उपगीय धन्यजन्मा बभूव इत्ययमंशः निर्विवादः । सः एषः विषयः इतिहासपुराणादिषु कुत्रापि न निबद्धः । दिव्यसूरिभिः अन्यैः अपि स्वकीयेषु दिव्यप्रबन्धेषु नोपवर्णितः । तर्हि महती न्यूनता इति विभावयन् असौ दिव्यसूरिवरः कुलशेखरमहाकविः स्वानुभवभूम्ना न्यूनतां ताम् अष्टमदशके परिहरति । कौसल्या वर्ष्म स्वयं बिभ्राणः श्रीराचन्द्रं डोलातल्पमधिशयानं विभाव्य तस्य सुखनिद्रार्थं गीतानि गायति । सोऽयमनुभवः अस्य सूरेः तिरुक्कण्णपुरनामकदिव्यदेशाधीश-शौरिराजभगवद्विषयकः सम्पद्यते ।

श्रीरङ्गक्षेत्रप्रधानकचोलमण्डलान्तर्गतेषु चत्वारिंशद्दिव्यदेशेषु श्रीकृष्णक्षेत्रत्वेन

त्रयः दिव्यदेशाः प्रथिताः १. तिरुक्कण्णमङ्गै, २. तिरुक्कण्णपुरम्, ३. तिरुक्कण्णङ्गुडि। तेषु प्रथमतृतीयौ दिव्यदेशौ श्रीपरकालसूरिमात्रमङ्गलाशासन-गोचरभूतौ। मध्यमं तिरुक्कण्णपुरक्षेत्रं तावत् श्रीपराङ्कुशभट्टनाथगोदादेवी-प्रभृतिभिरपि परमभोग्यतया अनुभूतम्। श्रीविष्णुसहस्रनामस्तोत्रे शौरिः इत्येतन्नाम्नः भाष्यं विरचयन्तः भट्टपादाः महाचार्याः प्रकृतदिव्यदेशाधिपतिं भगवन्तं शौरिराजमेव विषयत्वेन अनुगृण्हन्ति।

*उत्पलावदके दिव्ये विमाने पुष्करे क्षणम्।*
*शौरिराजमहं वन्दे सदा सर्वाङ्गसुन्दरम्॥*

इत्यमुं ध्यानश्लोकमपि पूर्वाचार्याः उदाहरन्ति। एवं नाम सुप्रशस्तविभव-श्रीकृष्णक्षेत्रवराधीशं भगवन्तं श्रीरामशिशुत्वेन अनुसन्धाय, तस्यैव डोलातल्पे शयनं हृदि कलयन् एषः सूरिः सूक्तमिदमनुगृण्हातीति वेदितव्यम्।

यशस्विन्याः कौसल्यायाः सुभगजठरसमुद्भूत! लङ्काधीश्वरदशकन्धर-कन्धरानि पातननिपुण! हिरण्मयशाश्वतविपुलवप्रमालाञ्चितश्रीकृष्णपुरीविराजमान-नीलमणिनिभ! मम परमभोग्यामृतश्रीराघव! ममानेन गीतेन डोलातल्पे शयनसुखमनुभव तावत्।

निजनाभीनलिने निखिलभुवननिर्माणधरीण! सायकप्रयोगविदारितबलिष्ट-ताटकावक्षस्थल! द्रष्टृजनतासमर्पितनिजमानस! सकलजनमनोहरसौन्दर्यशालिन्! श्रीकृष्णपुरविराजमानास्मदीयनीलमणे! सर्वशेषिभूतराघव! डोलातल्पे मम गीतेन शयनसुखमनुभव!

सुगन्धिकुन्तलायाः कौसल्यायाः आत्मजरत्न! महायशस्विनः जनकप्रभोः जामातः! दाशरथे! गङ्गाजैत्रतीर्थविशेषभासुर श्रीकृष्णपुरालयशतमखमणिनील-स्वामिन्! राजवंशपरमभोग्यामृतराघव! ममानेन गीतेन शयनसुखमनुभव!

कमलपीठे समुत्पादितकलासन! चक्रवर्तिसत्पुत्र! मैथिलीवल्लभ! भ्रमरमुखरोद्यानपरिवृत श्रीकृष्णपुरावसथारमदीयनीलमणे सायकालङ्कृतशार्ङ्गपाणे! राघव! ममानेन गीतेन शयनसुखमनुभव।

कृत्स्नभूमीमण्डलसाम्राज्यरूपां विपुलां सम्पदं भरतसात्कृत्य प्रेमभूमिभरितेन अनुजेन सौमित्रिणा साकं गहनं काननमधिगतवान्। वीरनिकेतनवक्षःस्थल! श्रीकृष्णपुराधिनाथ! रक्षणदीक्षितत्वपिशुन-मालालङ्कृतमूर्धन्! दाशरथे! ममानेन गीतेन शयनसुखमनुभव।

सकलैरपि पौरजनैः अनुसरद्भिः सह कान्तारं प्रस्थितवान् । परमैकान्तिनां भक्तानां परमुखदायकहितैषिन् ! साकेतनगरसाम्राज्यधुरन्धर ! विबुधाग्रेसर-निकेतनभूत श्रीकृष्णपुरवि भ्राजमाननीलमणे ! कैकेयीवचसि कृतादर ! श्रीराम ! मम गीतनानेन शयनसुखमनुभव !

पुरा निखलमपि जगन्निगीर्य वटदलमधिशयितवन्नर्भक । वालिवधपूर्वकं तदनुजे कपीन्द्रे किष्किन्धाराज्याधिपत्यमनुगृहीतवन् । मणिनिवहोद्भासि वीचिमालासंकुलसरित्प्रवाह उदञ्चत्परिसर श्रीकृष्णपुरीविराजमानशतमखमणे ! श्रीमदालिश्रीनगरीनाथ ! अयोध्याधिपते ! ममानेन गीतेन शयनसुखमनुभव । चोलमण्डले तिरुवालितिरुनागरीति प्रसिद्धः दिव्यदेशः । अत्रैव श्रीपरकालदिव्यसूरेः अवतारस्थली विराजत इति वेदतिव्यम् ।

शिलोच्चयैः सेतुबन्धनपूर्वकं वप्रमालापरीतलङ्काध्वंसकारिन् । उत्तरङ्गजलधिमथनेन देवभोग्यामृतप्रदायक ! सकलकलावल्लभविद्वज्जनतासनाथ श्रीकृष्णपुरीविराजमाननीलमणे ! धानुष्कसार्वभौम ! महावीर श्रीराम सुखं शेष्व ।

सौगन्ध्यसम्भृतकुन्तलोल्लासिदशरथपुत्ररत्न ! अवनमितेन धनुषैकेन प्राकारपरिवृतलङ्कापुरीविध्वंसनं विरचितवन् ! श्रीकृष्णपुरेश ! नीलमणे दीनदयालो ! राघव ! सुखं शेष्व ।

देवानुसरान् दिगुपलक्षितसकलवस्तुजातं च समुत्पादितवन् । सर्वजनताविनतियोग्यतया श्रीरङ्गनागरीमधिशयान ! कावेरीपयःपूरपवित्र श्रीकृष्णपुरेश ! नीलमणे ! शरणसनाथसुन्दरभीषणशार्ङ्गपाणे ! राघव भगवन् । सुखं शेष्व ।

विलक्षणप्राकारपरिवेष्टित श्रीकृष्णपुराधीशकाकुत्स्थ भगवत्पादारविन्द-परिसरेसाम्राज्यलक्षणसम्पन्नेन श्रीकुलशेखरसूरिणा श्रीरामचन्द्रडोलागीत-विषयकत्वेन विज्ञापितमिदं सूक्तमधीयानास्सन्तः भगवदनुभवयोग्यभक्तमणयः भवितार इति फलकीर्तनेन अष्टमदशकं समापितम् ।

श्रीकुलशेखरसूरेः मनसि काचन महती व्यथा समजनि - रामचन्द्रं तमहं साक्षादनुभोक्तुम् अभाग्योपहतः अभूवम् खलु इति । सैषा व्यथा कथञ्चिदपि अन्तर्निगूहितुम् अशक्या अभूत् । तां व्यथां विलक्षणेन प्रकारविशेषेण प्रकाशयन् नवमं दशकमवतारयति कुलशेखरसूरिवरः । रामचन्द्रस्य साक्षाज्जनकत्वेन संजातोऽपि दशरथः सामग्र्येण तम् अनुभवितुम् अशक्तस्सन् अचिन्तितोपनतेन वनप्रस्थापनेन

वाचमभूमिं व्यथामनुभव खलु । तामेव तद्गिरा विपुलमिह प्रख्यापयन् स्वकीयामेव व्याथां प्रकाशितवान् भवतिं इह सूरिवरः । इदमेव अन्यापदेशेन कथनम् । श्रीरामचन्द्रस्य वनगमनेन दशरथः मूर्च्छितः । मध्ये मध्ये प्रबुद्धस्सन् प्रलपति विलपति च । तावेव प्रलापविलापौ नवमदशके निबध्येते । एवं निर्वेदघनमपि नवमदशकं रामे हार्दभक्तिभाजां परमभक्तानां चित्तं द्रवीकर्तुं प्रभवतीति तत्तदनुभवावसेयमेतत् ।

भो रामप्रभो साकेतनगरप्रजासु सर्वास्वपि शरणागतरक्षणबद्धश्रद्धौ तव चरणौ नमस्कृत्य स्तोतुमुत्कण्ठितासु सतीषु, त्वयि च सिंहासनाधिरोहणपूर्वकं साम्राज्याभिषेकसंमुखीने सति हा हन्त । पापिनी कैकेयी नगरं विहाय विपिनं व्रजेति कथितवती । आः पुत्ररत्न रामभद्र । त्वज्जनन्याः कैकेय्याः वचनबद्धोऽहं सम्यगेव खलु त्वां राज्यनिर्वाहधुरन्धरमकार्षम्, धिङ् मे जीवितम् ।

हा मत्पुत्ररत्न ! रामचन्द्र ! दारुणवाचो मम कठिनं वच आदृत्य सद्य एव साम्राज्यलक्ष्मीं च समुपेक्ष्य, मत्तमातङ्गस्यन्दनतुरङ्गमादिसम्पदमपि अवधीर्य, सद्यः विपिनमेव समुपेत्य, सुचारुदृशा वल्गुभूषणया सीतया सौमित्रिणा च अनुसृतस्सन् कथमिव त्वं हन्त । पादचारमकार्षीः । प्रभो पापी सोऽहं किं करवाणि ।

आः कमनीयदृशः कौसल्यायाः नन्दन । शार्ङ्गपाणे महावीरशूर महापापिनो मम हृदयं शिथिलयितुमेव समुत्पन्नकाकुत्स्थ ! कालमेघनिभ रामभद्र ! एतावता कालेन सुकुमारशय्यामधिशयितवांस्त्वमधुना विप्रोष्य महारण्यमधिगत्य महीरुहच्छायासु कर्कशशिलातलेषु खलु शयनमभ्यस्यसि हन्त ।

महापापिनो मम हृदयशिथिलीकरणविचक्षण ! आः पुत्ररत्न ! क्षणमत्र समायाहि । याहि तावत् । पुनरपि सकृदागत्य दर्शनं दत्वा प्रयाहि । कुसुमभरभरितचिकुरबन्धायाः अभिरामभुजायाः मैथिल्याः पाणिग्रहणार्थं रौद्रधनुर्भञ्जनमारचितवन् भो रामचन्द्र ! मृगसन्ततिसञ्चरणदन्तुरं महारण्यम् अद्य त्वयि गत वत्यपि मम हृदयं न विदीर्णं हन्त । दृढतरं हि अवतिष्ठते तत् ।

हा महापापिनो मम पुत्ररत्न । अरातिजनकरधृतशूलायुधाग्रसमशीलानाम् अतितीक्ष्णानाम् अश्मखण्डानां संमर्देन प्रसृतरुधिरपादतलस्सन् निदाघतप्तस्सन् क्षुद्बाधया च अभिभूतस्सन् कस्यापि जनस्य स्पृहायाः अगोचरं दारुणं काननम् अद्य व्रजसि हं हो । केकयराजदुहितुः महापापिन्याः वचनम् आदृतवान् । एष पापी हन्त किं करोतु ।

प्रियतातपादेति तदा तदा त्वया सप्रेमभरं क्रियमाणं सम्बोधनम् अनाकर्णयन्, आभरणालङ्कृतं तव वक्षः मम वक्षस्यनाश्लेषयन् मूर्ध्नि न जिघ्रन् मत्तमतङ्गगामिनः तव गतिसौकुमार्यं च अननुभवन् मुखारविन्ददर्शनं च मुहुः अनाकलयन् मत्प्रभुं मत्पुत्ररत्नं त्वां प्रच्युतवानयं दुष्टचेष्टितः पापी हन्त प्राणित्यद्यापि ।

नित्यनिरवद्यवेदधनाः भो ब्राह्मणाः राजधर्णविशारद ! भो सुमन्त्र पुरोहिताग्रेसर ! वशिष्ठमहर्षे ! युष्मानहं किमपि पृच्छामि । कुसुमसुरभिं केशपाशं जटाजूटमाकलय्य, कमनीयपीताम्बरधारणयोग्ये कटितटे कुशकाशवल्कलादि धृत्वा, दिव्याभरणानि च दूरीकृत्य, नैसर्गिकसौन्दर्यविरहिताङ्गस्सन् महाभुजो मम पुत्रः मया अधुना प्राप्तव्यं काननं स्वयं प्राप्नोति । तदिदं किमहो न्याय्यम् ? धर्मज्ञाः भवन्त एव विमृश्य कथयन्तु ।

आः पापिनि कैकेयि ! विद्याधनानां महात्मनां सकाशादधीतानन्दवेदं मम ज्यायांसं तनयं तत्सहजं सौमित्रिं कीरवाणीं कृशोदरीं मम स्नुषां वेदेहीं च विपिनं प्रापय्य, त्वत्पुत्रं भरतं च वृथापवादपात्रमारचय्य, हन्त । मामपि स्वर्गं गमयसि । एवंविधैः कृत्यैः हन्त । किं फलमवाप्तवती भवती ? त्वमेकाकिनी भुवि सुखं जीवसि । जीव जीव सुचिरं जीव ।

पुरा कदाचित् परशुधरमुनिकरलस्थितं चापं गृहीत्वा, तदीयतपः फलमशेषं विनाशितवन् । राम हन्त त्वं स्वकीयस्वरूपस्वभावादिकं न व्यजीगणः । तव जनन्याः खेदातिशयं च नापश्यः । पितृवाक्यपरिपालनमावश्यकम्, पितुः सत्यवादित्वप्रतिष्ठापनमावश्यकम् इत्येव हृदि कलयन् काननमयासीः त्वम् । अयि महाभुज बलाढ्य-महावीर ! एताद्दृग्गुणशालिनं त्वामेवाहं पुनः पुनरपि पुत्रतया लब्धुं भाग्यवान् भूयासम् ।

मनुकुलोपत्पन्नमहीपालतल्लज । मधुस्यन्दिपुष्पमालाञ्चितकुन्तलबन्धां कौसल्यां च सुमित्रां च शोकसागरे निपात्य, वपुषीव हृदयेऽपि वक्रतां वहन्त्या मन्थराया वचनमादृतवत्याः पापिन्याः कैकेय्याः वचनमुररीकृत्य वनवासमेव स्पृहाविषय-माकलितवता त्वयाद्य परित्यक्तं राज्यं परित्यज्य स्वर्गमेवाभिलष्य तत्र व्रजामि भोः ।

सुन्दरकालमेघनिभस्य श्रीरामतया अवतीर्णस्य श्रीमहाविष्णोः वनप्रवेशदुःखमसहमानेन महनीयविक्रमशालिना दशरथचक्रवर्तिना यद्यथा प्रलपितं तत्तथैव श्रीमता सम्राजा कुलशेखरसूरिणा तद्भावभावनया प्रकथितमित्थम् । तदिदं ये कीर्तयन्ति ते दुरध्ववैदेशिका भवितार इति फलकीर्तनेन नवमं दशकं समापितम् ।

श्रीरामचन्द्रावतारास्पदे पुनर्नवसुभे शुभे नक्षत्रे जातः कुलशेखरसूरिवरः ।

ततश्चास्य श्रीरामे परमभक्तिः, श्रीरामायणे महती श्रद्धा च आसीदिति प्रथितम्। नित्यं श्रीरामायणपारायणं तदर्थप्रवचनं, तदर्थश्रवणं च नियमेन कुर्वन्नासीत्। तत एव अस्य मनसि मनोरथोऽयमजनि यत् जगति सर्वेऽपि जनाः श्रीरामचन्द्रस्य पवित्रं चरित्रं संक्षेपतोऽपि वा विदित्वा पूता भूयासुः इति। तेनैव मनोरथेन दशमे दशके श्रीरामचन्द्रचरितं निबध्नाति। दशरथात्मजत्वेन भूतले कृतादवतारात्प्रभृति-दिव्यधामनिषेवणपर्यन्तं प्रवृत्तं श्रीरामचरितमतितरां संक्षिप्य दशमे दशके प्रतिपादयति। एवंविधम् अनुभवम् अर्चावतारस्थलविशेषे करोतीति विशेषः। चित्रकूटनाम्ना प्रथमानं स्थलमुत्तरभारते, दक्षिणभारते च विराजते।

*सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः।*
*यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने॥*

इति श्रीरामायणोपश्लोकितं स्थलमौत्तराहम्। दक्षिणात्यं चित्रकूटस्थलं तु चिदम्बरक्षेत्रविराजमानं श्रीगोविन्दराजभगवदावसथभूतम्। तदिदं क्षेत्रं तिल्लैत्तिरुच्चित्रकूटनाम्ना व्यपदिश्यते। श्रीपरकालसूरेरपि मङ्गलाशासनास्पदमिदं स्थलमिति ध्येयम्। प्रकृतक्षेत्राधीशं भगवन्तमेव श्रीरामायणकथया स्तौति दशमे दशके। उत्तरकाण्डपर्यन्तकथाया अत्र अनुसन्धानं भवतीति वेदितव्यम्।

विपुलरुचिरप्राकापरिवृतायां साकेतपुर्यां सकललोकप्रकाशनपटुस्वतेजोंशेन सूर्यकुलप्रदीपवदाविर्भूतं समुज्जीवितसकलदेवबृन्दं महावीरं पुण्डरीकाक्षं कालमेघो-पमेयदिव्यशुभविग्रहम् अस्मत्प्रभुं श्रीरामचन्द्रं दक्षिणचित्रकूटक्षेत्रमध्यासीनम् अद्वितीयजगन्निदानं स्वामिनं कदा नु हर्षप्रकर्षेण संसेवेय ?

कौशिकमहर्षियज्ञविघ्नचिकीर्षया अभ्युज्जिहानायाः ताटकायाः वक्षःस्थलं रुधिरस्रावजनकसायकविशेषप्रयोगेन विदार्य, वैदिकोत्तमस्य महर्षेः तस्याध्वरं निष्प्रत्यूहं निर्वर्तितवान्। बलिष्ठयातुधानगणप्राणापहरंणप्रवीणः महावीरः रामचन्द्रपल्लवप्रसूनपरिकर्मितशिशिरोपवनपरीतदक्षिणचित्रकूटस्थले त्रिसहस्रसंख्याकब्राह्मणाभिष्टुतस्सन् अतिमनोहररत्नसिंहासनम् अलङ्कुर्वाणः सर्वेश्वरः।

अतिरमणीयनीलोत्पलसच्छायलोचनशालिन्याः सीतादेव्याः पाणिग्रहणाय वृषभध्वजस्य धनुर्भङ्गमाकलितवन्तं परशुधरस्य जामदग्न्यस्य करे स्थितं वैष्णवं धनुर्गृहीत्वा, तत्पराभवसम्पादनेन क्षत्रियवैरिगर्वभञ्जनं कृतवन्तं महावीरं शार्ङ्गपाणिं श्रीराघवम् शत्रुव्रातथयावहसमुच्छ्रितप्राकारपरिवेष्टिते दक्षिणचित्रकूटदिव्यदेशे ये प्रणमन्ति भागवताः तेषामेव पाददृन्द्वं प्रणमामि।

कुसुमस्तबकालङ्कृतकबरीबन्धायाः ताटकायाः वक्षःस्थलं रुधिरस्त्रावजनकसायकविशेषप्रयोगेन विदार्य, वैदिकोत्तमस्य महर्षेः तस्याध्वरं निष्प्रत्यूहं निर्वर्तितवान्। बलिष्टयातुधानगणप्राणापहरणप्रवीणः महावीरः रामचन्द्रः- पल्लवप्रसूनपरिकर्मितशिशिरोपवनपरीतदक्षिणचित्रकूटस्थले त्रिसहस्रसंखअयाकब्राह्मणाभिष्टुतस्सन् अतिमनोहररत्नसिंहासनम् अलङ्कुर्वाणः सर्वेश्वरः।

अतिरमणीयनीलोत्पलसच्छायलोचनशालिन्याः सीतादेव्याः पाणिग्रहणाय वृषभध्वजस्य धनुर्भङ्गमाकलितवन्तं परशुधरस्य जामदग्न्यस्य करे स्थितं वैष्णवं धनुर्गृहीत्वा, तत्पराभवसम्पादनेन क्षत्रियवैरिगर्वभञ्जनं कृतवन्तं महावीरं शार्ङ्गपाणिं श्रीराघवम् शत्रव्रातथयावहसमुच्छ्रितप्राकारपरिवेष्टिते दक्षिणचित्रकूटदिव्यदेशे ये प्रणमन्ति भागवताः, तेषामेव पादद्वन्द्वं प्रणमामि।

कुसुमस्तबकालङ्कृतकबरीबन्धायाः कैकेय्या वचनमादृत्य, साम्राज्यमवधीर्य, काननमवागाह्य, गुहनामकभक्ततारितभागीरथीकं चित्रकूटगिरिमधिष्ठितवन्तं प्रणतभरतमकुटस्थापितपादुकाराज्यं च भगवन्तं जानकीजानिं सम्प्रति दक्षिणचित्रकूटदिव्यदेशे अत्याह्लादपूर्वकमवेक्षमाणाः भौमाः जनाः सत्यममरेभ्योऽपि अभ्यार्हिताः।

निरतिशयभुजबलशालिनं विराधं निहतवन्तं परमोदारेण द्राविडभाषा- प्रवर्तनधुरन्धरेण कुंभसंभवमुनिवरेण अर्पितमस्त्रग्रामं प्रतिगृहीतवन्तं, मृगीदृशः शूर्पणखायाः अङ्गभङ्गमाकलितवन्तं, खरदूषणादिप्राणानपहृतवन्तं चापमवनमय्य मारीचमायामृगमुपमर्दितवन्तं च राघवेन्द्रं दक्षिणचित्रकूटदिव्यदेशे सप्रणति साञ्जलिबन्धं च स्तुवतां सतां सञ्चरणेन सौभाग्यवती सैषा जगती।

स्वसर्वस्वभूतायाः वैदेह्याः विश्लेषेण विक्लबहृदयं, मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमानि''ति प्रोच्य, जटायुं नाम खगपतिं वैकुण्ठं प्रापितवन्तं, शाखामृगेन्द्रसुग्रीवसख्येन वालिवधमारचितवन्तं, राक्षसेश्वराधिष्ठितलङ्कापुरीं मारुतिद्वारा निर्दग्धवन्तं, दक्षिणचित्रकूटदिव्यदेशे परमभोग्यतया विराजमानं च रामचन्द्रप्रभुं स्तुवतां सतां पादद्वन्द्वमेव स्तवानि।

उत्तरङ्गमुदधिमाशीविषोपमैः शरैः भीषयित्वा, तत्र सेतुबन्धमारचय्य, ततस्तीर्त्वा, अरुन्तुदहेतिपाणीनाशरनिबहानाशराधीशेन सह समूलं निहत्य, विभीषणे लङ्कैश्वर्यं प्रतिष्ठाप्य, तदनु सीतासंश्लेषमनुभूतवतः दक्षिणचित्रकूटस्थले रघुपतेः चरणावतंसनादन्यत् राज्यभोगं नाहं अभिमन्ये।

स्पृहणीयसमुत्तुङ्गहिरण्मयप्राकारपरिवृताम् अयोध्यामधिगत्य सम्राज्यमासाद्य, स्वेन निहतपूर्वस्य दशकन्धरस्य महतीं पुरातनकथाम् अगस्त्यमहर्षिमुखादाकर्ण्य, अथ सकललोकसमुज्जीवनार्थं वैदेहीप्रसूतकुशलवमुखतः श्रीरामायणकथाम् अखिलामाकर्णितवतः दक्षिणचित्रकूटदिव्यधामाधिपतेः रघूद्वहस्य चरितामृतं श्रवसा चक्षुषा च आस्वादयेम। नान्यत् आमृतम् आद्रियेमहि।

दण्डकारण्ये तपश्चर्यानिष्णातं शंबूकं नाम वृषलं तत्र गत्वा निहत्य ब्राह्मणसुतं मृतं संजीवितवन्तं तापसप्रवरकुम्भसंभवमुनिप्रदत्तमनर्घमाभरणवरं प्रतिगृहीतवन्तं लवणासुरं शत्रुघ्नतः वीरस्वर्गमधिगमय्य, अथ दुर्वासो मुनिवरहृदयानुसारेण सौमित्रिवियोगमाप्तवन्तं दक्षिणचित्रकूटदिव्यधाम्नि स्थिरवासुजुषं च भगवन्तं सन्ततं ध्यायता चित्तेन सनाथास्स्मः। अतश्च वयमार्तिवैदेशिका विलसामः।

समयविशेषेषु गरुत्मन्तमधिरुह्य कृतेन सुरवैरिनिबर्हणेन जातां जयश्रियं बिभ्रतः चतुरोऽपि बाहून् प्रकाशयन् सन् वैकुण्ठं प्रति प्रस्थितः सकलचराचरैश्च सह गत्वा, नित्यमुक्तनिबहैः अभ्युद्गतस्सन् निजधाम निषेव्य यः सुखं व्यराजत, स एव भगवान् रामचन्द्रो दक्षिणाचित्रकूटदिव्यदेशमध्यास्त इति अनुसन्धाय स्तुत्वा च नित्यं तत्रैव प्रणम्य, समुज्जीवत भो भक्ता यूयम्।

दक्षिणचित्रकूटदिव्यधाम्नि बलीयसा मारुतिना सह विराजमानं रघुनन्दनम् अधिकृत्य, दशरथात्मजत्वेनावतरणमारभ्य, स्वकीयदिव्यधामप्रवेशावधि कथासन्दर्भं संगृह्य विज्ञापितवतः साम्राज्यलक्षणसम्पन्नस्य श्रीकुलशेखरसूरेः सल्लक्षणलक्ष्यवाग्विततिम् इमाम् अधीयानाः सन्तः भूरि श्रेयोनिदाननारायणचरणपरिसरमवगाहेरन्निति फलकीर्तनेन दशमं दशकं प्रबन्धं च समापितम्।

**मुकुन्दमाला**

जन्मान्तरसुकृतपरिपाकात् लब्धं मानवजन्म। भगवत्प्राप्तेः अत्यावश्यकी भक्तिः। मुक्तेः साधनं भक्तिरेव। प्रेम्णा निरन्तरकृष्णानुशीलनमेव भक्तिः। इति, मत्वा, 'भक्त्या मामभिजानाति', 'भक्त्या त्वनन्यया शक्यः' इति भगवद्गीतानुसारेण भगवद् भक्तिं प्रदर्शयन्तः कुलशेखरसूरिवर्याः ४० श्लेकेषु मुकुन्दमालां निर्मितवन्तः। अस्य स्तोत्रस्य तत्त्वार्थस्य अतिविस्तृतत्वात्, स्थूलतया श्लोकार्थं मात्रमुच्यते।

प्रतिदिनेऽपि रङ्गयात्रा यस्य नगरे घुष्यते तं राजानं कुलशेखरं अहं शिरसा वन्दे इति कुलशेखरस्तुतिः।

हे मुकुन्द । श्री वल्लभेति, वरदेति, दयापरेति, भक्तप्रियेति, भवलुण्ठन-कोविदेति, नाथेति, नागशयनेति, जगन्निवासेति मम आलापनं प्रतिपादं कुरु इति स्तोत्रारम्भे मुकुन्दं प्रार्थितवन्तः ।

हे देव । देवकीनन्दन । जयतु । वृष्णिवंशप्रदीप, कृष्ण जयतु । मेघश्यामल । कोमलाङ्ग जयतु, पृथ्वीभारनाश मुकुन्द जयतु जयतु इति अस्मिन् श्लोके जयवचनमुक्तवन्तः ।

हे मुकुन्द । शिरसा प्रणिपत्य भवन्तं याचे । प्रति जन्मन्यपि भवत्प्रसादात् त्वच्चरणारविन्दे अविस्मृतिः एव अहं वाञ्छामि इति प्रार्थयन्ति । भगवत्पादारविन्द -विनिस्मृतिरेव मोक्ष इति कुलशेखराणामभिप्रायः ।

हे कृष्ण । द्वन्द्वमद्वन्द्वहेतोः, कुम्भीपाकं नारकं अपनेतुं वा, रम्यारामा मृदुतनुलताः नन्दे रन्तुमपि वा, तव चरणयोः नाहं वन्दे । भावे भावे हृदयभवने भवन्तं भावयेयम् । तदर्थमेव वन्दे इति स्वाभिप्रायं प्रकटयन्ति ।

हे कृष्ण । धर्मार्थकामोपभोगेषु मम इच्छा नास्ति । पूर्वकर्मानुरूपं यद्यद्भव्यं तत् तत् भवतु । जन्मजन्मान्तरेऽपि त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिः अस्तु इत्येतत् प्रार्थनं मम अभिमतम् इति मोक्षादपि भक्तिमेव मुख्यतया वाञ्छन्ति । भगवति विद्यमाना प्रेमा एव परमपुरुषार्थः इति कुलशेखराणामभिप्रायः ।

हे नरकान्तक । कृष्ण । दिवि वा भुवि वा नरके वा मम वासः अस्तु । तथापि अवधीरितशारदारविन्दौ ते चरणौ मरणेऽपि चिन्तयामि इति एकान्तिकभक्तिमेव वाञ्छितवन्तः कुलशेखरसूरयः ।

हे कृष्ण । प्राणयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ तव स्मरणं कथम्? अतः अद्यैव त्वदीयपदपङ्कजपञ्जरान्तं मानसराजहंसः मे विशतु इति प्रार्थयन्ति ।

अननन्यप्रयोजनेन सर्वदेशसर्वकालसर्वावस्थासु अविच्छिन्नतया, हरिनामस्मरणं वाञ्छितवन्तः कुलशेखराः भगवदनुभवमेवं वदन्ति - नारदादिमुनिबृन्दवन्दितं, परात्परं, नन्दगोपतनयं, मन्दमन्दहसिताननाम्बुजं हरिमेव संततं चिन्तयामि इति ।

संसारमरुभूमौ संचारं कृत्वा, अद्य हरि सरसि प्रविष्टोऽहम् करचरणसरोजे, कान्तिमन्नेत्रमीने, भुजवीचिव्याकुले अगाधमार्गे हरिसरसि विगाह्य तेजोजलौघम् आपीय खेदं त्यजामि इति भगवदनुभववैशिष्ट्यं स्फष्टीकृतवन्तः ।

हे मनः सर्वेष्वपि कालेपु हरिचरणसंस्मरणं नामामृतमेव सुखप्रदम् । अपरं नास्ति । अतः सशङ्खचक्रं, सरसिजनयनं चित्तरन्तुं मा विरमस्व ।

हे मनः, यमयातना बहुधा विचिन्त्य मा भीः, यावत् श्रीधरकटाक्षः अस्माकमस्ति तावत् पापरिपवः अस्मान् किमपि कर्तुं न प्रभवन्ति । अतः शीघ्रं भक्तिसुलभं नारायणं ध्यायसस्व । परमात्मा लोकस्य व्यसनापनोदनकरः । दासस्य किं न क्षमः ?

भवजलधिगतानां, सुखदुःखद्वन्द्ववाताहतानां, सुतदुहितृकलत्रत्राण-भारार्थितानां, विषमविषयतोये मज्जतामप्लवानां, नाराणां विष्णुपोतुः एकः शरणं भवति ।

हे मनः । अगाधं, दुस्तुरं, निस्तरेयं, का तरत्वम्, कथमहमिति मा स्म गाः । सरसिजदृशि देवे तावकी भक्तिरेव निषण्णा अवश्यं तारयिष्याति ।

स्वयं प्रयोजनतया भगवति भक्तिः प्रथम दशके प्रार्थिता । अथ यमयातनाभीतानां भगवान् अभयप्रद इति एकादशे श्लोके उक्तम् । दयालुः अस्मत्स्वामी अस्मदीयं सर्व दुःखमपनेष्यति । एवमस्मत्परिपालने सः शक्तः तथा प्रमाणसिद्ध इति द्वादशे प्रत्यपादि । तूष्णीं स्थिताम् अस्मान् सः न पालयिष्यति तस्मिन् भक्तिः कर्तव्या । तया प्रीतः सः अस्मदपेक्षितं पूरयिष्यतीति त्रयोदशे अभिहितम् । एवमस्मिन् द्वितीयदशके उपायभूता भक्तिः प्रतिपाद्यत इति ज्ञेयम् । भक्ति नाम प्रीतिपूर्वकनिरन्तरध्यानम् । न च एतदस्माकं सुकरम् । मनसः स्वतन्त्रत्वात् । अस्मद्वशर्तित्वाभावात् । प्रबलदुष्कृतवशेन स्वभावतः क्षुद्रविषयैक-सङ्गित्वात् एवं सङ्कटायां स्थितौ कुलशेखरः पुनः कर्तव्यं चिन्तयामास । शास्त्राणि पर्यालोचयाामास । मनसः वशीकरणोपायः भगवच्छरणागतिरेवेति निश्चिनत् । स्वमनसे इदं ज्ञापयामास ततः तत् शरणमुपगम्य भगवन्तं प्रार्थयते चतुर्दशश्लोके हे वरद, हे त्रिधामन्, तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहज-ग्राहसङ्घाकुले च संसाराख्ये महति जलधौ मज्जतां भवतः पादाम्भोजे भक्तिनावं प्रयच्छ ।

एवं भूते संसाराख्ये महति भवदनुग्रहं विना दुस्तरे जलधौ मज्जतां नः तत्सन्तरणोपायभूतां भवत्पादाम्भोजभक्तिनावं अस्मदनुष्ठितप्रपत्तिप्रसन्नः त्वं अस्मदीयसकलदुष्कृतपरिहरणेन प्रयच्छ ।

भक्तिं प्रयच्छेति संप्रार्थ्य, भक्तिसिद्धेः प्रतिबन्धकानां पापानां

निर्मूलनायशमदमादिसंपत्तिं प्रार्थयते पञ्चदशश्लोके । हे भुवनपते । माधव । भवतः पदाब्जे भक्तिहीनान् क्षीणपुण्यान् क्षणमपि माद्राक्षम् । तव चरितमपास्य अन्यदाख्यानजातं श्राव्यबन्धं मा श्रौषम् । त्वां चेतसा अपह्नुवानान् असत्पुरुषान् मा स्मार्षम् । जन्मजन्मान्तरेऽपि त्वत्सपर्याव्यतिकररहितः मा भूवम् इति ।

भगवति भक्तिम् अभ्यसितुम् इच्छन् इन्द्रियाणां विपरीताचरण-प्रवृत्त्युन्मुखत्वस्य अत्यन्तपरिहाराय तानि सम्बोध्य भगवत्सेवाप्रवणता-मवलम्बनीयां प्रार्थयते षोढशश्लोके हे जिह्वे केशवं कीर्तय । चेतः मुररिपुं भज, पाणिद्वन्द्व श्रीधरं समर्चय, श्रोत्रद्वय अच्युतकथाः शृणु, लोचनद्वय कृष्णं लोकय, अङ्घ्रियुग्म । हरेः आलयं गच्छ, घ्राण, मुकुन्दपादतुलसीं जिघ्र । मूर्धन् । अधोक्षजं नम, इति ।

निसर्गतो हि लोकः विषयप्रवणः न भगवद्भक्तौ वृद्धिं करोति । सः प्रतिबोधनीयः । तत् कर्तव्यमिति मत्वा अनेन सप्तदशश्लोकेन करोति - हे लोकाः प्रसूतिमरणव्याधेः इमां चिकित्सां शृणुत । योगज्ञाः याज्ञवल्क्यादयः मुनयः यां समुदाहरन्ति सा इयं चिकित्सा । का सा चिकित्सा इत्युक्ते उच्यते - अन्तः ज्योतिः आमेयम् एकम् अमृतम् कृष्णाख्यम् अपीयताम् । तत् पीतं परमौषधम् आत्यन्तिकं निर्वाणं वितनुते । इति ।

कर्मज्ञानभक्तियोगानामाचरणस्य कष्टत्वात् संक्षेपेण उपयमेकं उपदिश्यते अष्टादशश्लोके- हे मर्त्यः । अल्पशक्तीनां युष्माकं परमं हितं संक्षेपतः वक्ष्यामि शृणुत । संसारार्णवम्, अपारम्, आपदूर्मिबहुलं, सम्यक् प्रविश्य स्थिताः, नानाज्ञानमपास्य चेतसि, नमो नारायणाय इत्युमुं मन्त्रं सप्रणवं प्रणामसहितं मुहुः प्रावर्तयध्वम् ।

परमात्मनः महिमानं विश्वरूपमनुभूय स्तौति एकोनविशतिश्लोके हे भगवान् पृथ्वीरेणुः अणुः, पयांसि फल्गुकणिकाः, तेजः स्फुलिङ्गः, निश्वसितं मरुत् तनुतरम् सुसूक्ष्मं नभः रुद्रपितामहप्रभृतयः समस्ताः सुराः क्षुद्राः कीटाः तावकः अवधूतावधिः भूमा दृष्टे विजयते इति ।

हे पुण्डरीकाक्ष । बद्धेन अञ्जलिना, नतेन शिरसा, गात्रैः सरोमोद्गमैः गद्गदेन स्वरकण्ठेन, उद्गीर्णबाष्पाम्बुना नयने, नित्यं त्वच्चरणारविन्दयुगल-ध्यानामृतास्वादिनाम् अस्माकं जीवितं सततं सम्पद्यताम् ।

हे गोपालक ! हे कृपाजलनिधे ! हे सिन्धुकन्यापते ! हे कंसान्तक ! हे

गजेन्द्रकरुणापरीण ! हे माधव ! हे रामानुज ! हे जगत्त्रयगुरो ! हे पुण्डरीकाक्ष ! हे गोपीजननाथ ! मां पालय ! त्वं विना परं न जानामि ।

संसारव्याधिग्रस्तानां तास्याः व्याध्याः निवारणाय मणिमन्त्रैषधानि उपदिशन्ति । सा मणिः गोपालचूडामणिः मन्त्रं श्रीकृष्णमन्त्रम् । औषधं श्रीकृष्णदिव्यौषधम् । गोपालचूडाामणिं विवृण्वन्ति -

भक्तापायभुजङ्गगारुडमणिः, त्रैलोक्यरक्षामणिः गोपीलोचनचातकाम्बुदमणिः, सौन्दर्यमुद्रामणिः, कान्तामणिरुक्मिणीघनकुच-द्वन्द्वैकभूषामणिः देवशिखामणिः यः सः गोपालचूडामणिः अस्माकं श्रेयः दिशतु ।

श्रीकृष्णमन्त्रं कीदृशमिति विवृण्वन्ति - हे जिह्वे, शत्रुच्छेदैकमन्त्रं, सकलमुपनिषद्वाक्यसम्पूज्यमंत्रं, संसारोत्तारमन्त्रं, समुपचिततमस्सङ्घनिर्याणमन्त्रं, सर्वैश्वर्यैकमन्त्रं, व्यसनभूजगसन्दष्टसन्त्राणमन्त्रं, जन्मसाफल्यमन्त्रं, श्रीकृष्णमन्त्रं सततं जप जप इति ।

श्रीकृष्णदिव्यौषधं कीदृशमिति विवृण्वन्ति - हे मन । व्यामोहप्रशमौषधं, मुनिमनोवृत्तिप्रवृत्त्यौषधं, दैत्येन्द्रार्तिकरौषधं, त्रिभुवनीसञ्जीवनैकौषधम्, भक्तात्यन्तहितौषधं, भवभयप्रध्वंसनैकौषधं, श्रेयः प्राप्तिकरौषधं, श्रीकृष्णदिव्यौषधं पिब इति ।

श्रीनारायणपदाम्भोरुहसंस्मृतिं विहाय, केवलाम्नायाभ्यसनानि अरण्यरुदितम् । वेदव्रतानि मेदच्छेदफलानि, यज्ञादीनि कर्माणि भस्मनि हुतम् । गङ्गादिपुण्यतीर्थस्नानं गजस्नानमिव निष्प्रयोजनम् । अतः नित्यं तं नारायणं स्मरन् सर्वकर्माणि आचरणीयानि ।

पापिनोऽपि श्रीमन्नारायणाख्यं नाम प्रोच्य, वाञ्छितं प्रापुः । हा मम वाक् पूर्वं तस्मिन् केन न प्रवृत्ता । तेनैव कारणेन गर्भवासांदिदुःखं प्राप्तम् ।

हे मधुकैटभारे । लोकनाथ । मत्प्रार्थनीय मदनुग्रह एष एव । त्वद्भृत्यभृत्य-परिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर ।

अस्माकं नाथे, पुरुषोत्तमे, त्रिजगतामेकाधिपे, चेतसा सेव्ये, स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति, यं कञ्चित्पुरुषाधमं, कतिपयग्रामेशम् अल्पार्थदं सेवायै मृगयामहे वयम् अहो वयं मूका वराकाः ।

हे मदन। मदीये मनसि मुकुन्दपदारविन्दधाम्नि स्थितिं परिहर। हरनयन-कृशानुना कृशोऽसि। मुरारेः चक्रपराक्रमं न स्मरसि। इति अन्तःशत्रुं कामदेवं दूरीकरोति।

हे जिह्वे ! प्राञ्जलिरस्मि। परस्मात् परं तत्त्वं ब्रुवाणानि सतां मधुक्षरंतीव फलानि नारायणगोचराणि नामानि प्रावर्तय।

हे मूढ ! दुर्मते ! इदं शरीरं परिणामपेशलं, श्लघसन्धिजर्झरं, अवश्यं पतति। औषधैः क्लिश्यसि किम् ? निरामयं कृष्णरसायनं पिब।

हे कृष्ण ! करवरसुता वारा ते दारा। विरिञ्चिः तव तनूजः वेदः तव स्तोता। सुरगणः तव भृत्यवर्गः। मुक्तिः भवत्प्रसादः। जगदिदं माया। तावकी देवकी ते माता। मित्रं बलरिपुसुतः अर्जुनः। त्वय्यतः अन्यन्न जाने।

सर्वासु विभक्तिषु कृष्णशब्दं निर्दिश्य स्तौति अस्मिन् श्लोके- जगत्रयगुरुः कृष्णः अस्मान् रक्षतु। हे कृष्ण ! मां रक्षस्व। कृष्णं नमस्याम्यहम्। कृष्णेन अमरशत्रवः विनिहताः। तस्मै कृष्णाय नमः। इदं जगत् कृष्णादेव समुत्थितम्। कृष्णस्य दासोऽस्म्यहम्। सर्वमेतदखिलं कृष्णे तिष्ठति। इति।

भगवन् ! अनाथे मयि तत्त्वं प्रसीद। विष्णो कृपां कुरु। त्वं परमकारुणिकः किल। हरे अनन्त संसारसागरनिमग्नमुद्धर्तुमर्हसि। पुरुषोत्तमोऽसि।

भगवद्गीतायां नवमे अध्याये, अष्टादशाध्याये च भगवत्प्राप्तिकामेन भक्तेन किं कर्तव्यमिति भगवता उक्तं तत्करोमीति उच्यते नारायणपादपङ्कजं नमामि। सदा नारायणपूजनं करोमि। निर्मलं नारायणनाम वदामि। अव्ययं नाराजणतत्त्वं स्मरामि। इति।

भगवद्विवमुखान् जनान् दृष्ट्वा बाधां प्रकटयन्ति कुलशेखराः - श्रीनाथ ! नारायण ! वासुदेव ! श्रीकृष्ण ! भक्तप्रिय ! चक्रपाणे ! श्रीपद्मनाभ ! अच्युत ! कैटभारे ! श्रीराम ! पद्माक्ष ! हरे ! मुरारे ! अनन्त ! वैकुण्ट ! मुकुन्द ! कृष्ण ! गोविन्द ! दामोदर ! माधव ! इति वक्तुं समर्थोऽपि कश्चिदपि न वक्ति। अहो जनानां व्यसनाभिमुख्यम्। इति।

सततं हृत्पद्ममध्ये व्यवस्थितं, समाहितानां सतताभयप्रदं, अनन्तम्, अव्ययं, विष्णुं ये ध्यायन्ति ते परमां वैष्णवीं सिद्धं यान्ति।

क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये, भोगिभोगशयनीयशायिने, मधुविद्विषे माधवाय नमः ।

श्रुतिधरौ, कविलोकवीरौ, मित्रौ द्विजन्मवरपद्मशरौं यस्य प्रियौ तेन अम्बुजाक्षचरणाम्बुजषट्पदेन राज्ञा कुलशेखरेण इयं कृतिः कृता ।

**पेरियाल्वार्चरितम् :**

*शुक्लपक्षे हरितिथौ सुलग्ने भानुवासरे ।*
*स्वातीतारे खगाधीशभागेन द्विजपुङ्गवात् ।।*

*पद्मार्यायां मुकुन्दार्याद्विष्णुचित्तस्ततोऽजनि ।*
*तस्यावतारश्लोकाश्च गीयन्ते प्रथिता भुवि ।।*

*श्री ज्येष्ठमासे पवमानतारे ज्येष्ठो गुणेनाजनि भट्टनाथः ।*
*कृताभिरूपस्सगरुत्मदंशः कटाक्षलक्ष्यः कमलापतेर्यः ।।*

*तादात्विकप्रतिभया भगवत्परत्वं*
*विस्तीर्य पाण्ड्यकटके विजयी गजेन ।*
*गच्छन्प्रियादुपगते गरुडेन नाथे*
*प्रेम्णाऽऽलिषं रचयति स्म नमोऽस्तु तस्मै ।।*

*ज्येष्ठस्वातीभवं विष्णुरथांशं धन्विनः पुरे ।*
*प्रपद्ये श्वशुरं विष्णोर्विष्णुचित्तं पुरश्शिखम् ।।*

केरलदेशस्य प्राग्भागे दक्षोणाम्भोनिधेस्तटे पाण्ड्यदेशः आसीत् । तत्र धन्विपुरं नाम पुण्यं महत् दिव्यस्थलमाशीत् । तत्र विष्णोः प्रीतिकरं, त्रैलोक्यविस्तुतं सप्तसागरनामकं पुण्यतीर्थं विराजते । भगवान्मुकुन्दः जगत्संरक्षणार्थं क्षीराब्धिवासं विहाय भूम्यां धन्विपुरे वटपत्रशायीति अवततार । सप्तमहार्णवाश्च तत्रागताः । ब्रह्मादयः सर्वदेवाधिदेवाः सरस्वत्यादयः देवतास्त्रियश्च नारदाद्याः देवर्षयः विष्णोः सेवार्थं तत्र निवसन्ति । सुपुण्यं, सकलस्थलेषु विख्यातं महाधन्विवनं विद्वज्जनैः विष्णुपदाब्जभृङ्गैः सकलैः सुरैश्च सम्पूर्णमासीत् । तत्र शालवृतगोत्रोद्भवः वैष्णवोत्तमः वेदविदां श्रेष्ठः श्रीबोधायनसूत्रः, यजुश्शाखी, पुरश्शिखः भगवत्प्रियः मुकुन्दार्य इति श्रीमान् बभूव । तस्य पत्नी परमसाध्वी पद्मावती । सन्तानकामः सः मुकुन्दार्यः भार्यया सह भूरिशः वटपत्रशायिनं प्रार्थयामास । मुकुन्दार्येण संप्रार्थितः श्रीमन्नारायणः तस्मै

भक्ताय सादरं सन्तानलाभं प्रददौ । क्रोधनवर्षे, ग्रीष्मर्तौ, ज्येष्ठमासे, शुक्लपक्षे, हरितिथौ, सुलग्ने, भानुवासरे स्वातीतारे खगाधीशस्यांशेन द्विजपुङ्गवात् मुकुन्दार्यात् पद्मावत्यां विष्णुचित्तः अजनि । तस्य विष्णुचित्तस्य भगवद्भक्तिसम्पन्नाः, सुमहोजसः चत्वारः भ्रातरः बभूवुः । तेषां मध्ये विष्णुचित्तः नक्षत्रमध्ये चन्द्र इव रराज । पिता मुकुन्दार्याः यथाकालं यथाविधिजातकर्मादि-संस्कारान् विष्णुचित्ताय अकरोत् । श्रीमन्नारायणस्य निर्हेतुककृपया विष्णुचित्तः प्रह्लादवत् जन्मवैष्णवः अभवत् । सः वैष्णवः सहजं वैष्णवं, नैजं दास्यं च प्राप्य अकिञ्चित्कुर्वतो नास्ति शेषत्वमिति निश्चितः, भगवतः नित्यकैंकर्यं कर्तुकामः सन् आदरात् किं कैंकर्यं कर्तव्यमिति हृदि सम्यगचिन्तयत् । दशावतारान् सग्यक् विचार्य, श्रीकृष्णावतारे महत्प्रावण्यं प्राप्तवन्तः । मालाकारेण सुदामेन समर्पिताः मालाः परमात्मना सन्तोषेन स्वीकृताः इति ज्ञात्वा भगवद्भक्ताः विष्णुचित्तार्याः श्रीबृन्दावनकैङ्कर्यं विधाय, श्रीधन्विपुरवाशिने बटपत्रशयानाय मनोहराः सुगन्धाश्च तुलसीपुष्पमालिकाः नित्यं विष्णवे समर्पयन्तः विष्णुकैङ्कर्यरताः विष्णुचित्तार्याः धन्विपुरे विरेजे ।

धन्विपुरस्य पञ्चयोजनमात्रतः कौबेरदिग्भागे मधुराख्या महापुरी आसीत् । तस्यां पुर्यां महातेजा, धार्मिकः, पण्डितः बुधजनप्रियः वल्लभदेवाख्यः पाण्ड्यभूपतिः आसीत् । राष्ट्रे बलवान् दुर्बलं जनं यथा न बाधते तथा राज्यं धर्मेण प्रशशास । एकस्मिन् दिने धार्मिकः धरणीधरः वल्लभदेवः नगरशोधनार्थाय निशीथे निर्ययौ । एकस्यां वीथ्यां बहिः वितर्यां एकाकिनं शयानं पुरुषं विलोक्य, समीपं गत्वा, को भवान् ? कस्मादत्र सम्प्राप्तः । उच्यतामिति पृष्टवान् । राज्ञः बचनं श्रुत्वा सः ब्राह्मणः हे राजन् । ब्राह्मणोऽहं तैर्थिकः, गङ्गास्नानं कृत्वा, सेतुस्नानेच्छया गच्छन्, अत्र समुपागतः इत्युक्तवान् । तद्वचनं श्रुत्वा प्रहृष्टेनान्तरात्मना द्विजश्रेष्ठं प्रणिपत्य, राजा एवमुक्तवान् - द्विजश्रेष्ठ भवत्सन्दर्शनादेव कृतार्थोऽस्मि, न संशयः । तथाऽपि आत्मोज्जीवनकरं पद्यमेकं वद इति । तद्विचः श्रुत्वा ब्राह्मणः समीचीनतरं श्लोकं सादरं जगाद -

***वर्षार्थमष्टौ प्रयतेत मासान् निशार्थमर्थं दिवसं यतेत ।***
***वार्धक्यहेतोः वयसा नवेन परत्र हेतोरिह जन्मना च ॥*** इति ।

तं श्लोकमाकर्ण्य व्युत्पन्नः राजा श्लोकार्थं ज्ञात्वा एवमचिन्तयत् -

ऐहिकामुष्मिकफळे उभे यत्नतः सम्पाद्ये । महीतले मम ऐहिकफलविषये

विचारः नास्ति । इदानीं पारलौकिकविषययत्नः मया कर्तव्यः । देवाः बहवः सन्ति । तेषु मोक्षप्रदाता कः ? इति ज्ञातव्यः इत्यालोच्य पर्याकुलान्तःकरणः महीपतिः तं ब्राह्मणं समाराध्य अन्तःपुरं विवेश । प्रभातायां स राजा सम्पत्पूर्णः नाम पुरोहितं समाहूय पुरुषार्थप्रदं वस्तु शास्त्रनिणीयपूर्वकं, जगज्जन्मादिकारणं मोक्षसिद्ध्यर्थं मे ब्रूहीत्यपृच्छत् । तद्वाक्यं श्रुत्वा पुरोहितः सन्तुष्टः सन् राजानमुद्दिश्य शुभं वाक्यमवोचत नृपोत्तम । वेदाः शिष्टाचाराश्च प्रमाणभूताः । अतः सर्वान् पण्डितान् शास्त्रज्ञान् समाहूय वेदान्तसिद्धान्तैः वाक्यैः परतत्त्वस्य निर्णयं, कारयित्वा, बुधजनसम्मतं महत् परतत्त्वं ज्ञातव्यमिति । तच्छ्रुत्वा राजा वल्लभः सन्तुष्टः सन्, विश्रुतान् विबुधान् आनिनाय । विद्याशुल्कं महत् धनं तोरणस्तंभे बबन्ध । तत्त्वार्थनिर्णयं कृत्वा धनं गृहाणेत्यवोचत् । राजाज्ञया दशभ्यः दिग्भ्यः बहवः पण्डिताः सहसा समागताः । तदानीं धन्विपुरमङ्गलनायकः श्रीमन्नारायणः एवमचिन्तयत्सर्वे संसारिचेतनाः परतत्त्वमजानानाः अज्ञानतमसाच्छन्नाः कर्ममार्गे भ्रमन्ति । इदानीं भट्टनाथेन तत्त्वनिर्णयं कारयित्वा लोकाः रक्षितव्याः संशयः नास्ति इति । तदानीं भगवान् भट्टनाथस्य स्वप्नप्रसन्नो भूत्वा, हे भट्टनाथ ! भवन्तः मधुरानगरं गत्वा, पाण्ड्यराजसभास्थले बुधानां मध्ये परतत्त्वं विष्णुरेवेति उक्त्वा, तोरणस्तम्भबन्धितं तद्द्रव्यं स्वीकृत्य समागच्चेत्युक्तवान् । श्रीमन्नारायणस्य वचनं, श्रुत्वा भट्टनाथः देवेश । तद्द्रव्यं कथं हरामि इत्युक्तवान् । तद्वचनं श्रुत्वा शौरिः भवान् विद्वन्मण्डलं प्रति याहि, अहमेव वेदार्थप्रतिपादनं करिष्यामि इति प्रत्यभाषत । एवं निर्बन्धितः भट्टनाथः जगत्पतेः वचनमङ्गीचकार । ततः स्वप्नात् समुत्थाय परमं विस्मयं ययौ । भगवद्भक्तिपारगः भट्टनाथः ब्राह्मे मुहूर्ते चोत्थाय नित्यकृत्यानां सम्पूर्णानन्तरं स्वप्नविषयं सत्यमितिहृदि निश्चित्य, विद्वद्गोष्ठीं व्रतस्थे ।

राजा वल्लभः, पुरोहितः सम्पत्पूर्णश्च द्विजोत्तमं भट्टनाथं संवीक्ष्य, अभ्यागतः स्वयं विष्णुः इति मत्वा, भक्तितः प्रत्युत्थानप्रणामादिपूर्वकं विधिपूर्वकं श्रीवैष्मवोत्तमं भट्टानाथं अर्चयामास । विद्वद्गोष्ठ्यां स्थिताः सर्वे विबुधर्षभाः सर्वविद्वतसभामध्ये सर्वराजस्य मण्डले हेमनिर्मिते सिंहासने समासीनं भट्टार्यं पूजां च दृष्ट्वा न सेहिरे । भट्टनाथं तृणीकृत्य, राजपुरोहितं वीक्ष्य, विष्णुचित्तविषयं परुषं वाक्यं राजानमूचुः । अनेन एकं वेदाक्षरमपि न श्रुतम् अनेन कृता सन्ध्यावन्दनादिक्रिया अपि अस्माभिः न विलोकिता । अयं द्विजः निरक्षरः, गायत्रीमपि वेत्ति वा न वा ? भो राजन् । अस्य वृत्तिं प्रवक्ष्यामः शृणु । दासवृत्तिं समास्थाय, आरामपोषणं कुर्वन्, मनोहराः

श्रीपुष्पतुलसीमालाः विधास्यति। मालाकारवत् नित्यं शौरिणे सम्यगर्पयन्, अनया वृत्त्या अनुदिवसं कालक्षेपं करोति। वेदं वा शास्त्रवाक्यं वा न वेत्ति। ब्राह्मणानां विद्वद्गोष्ठ्यां राजसभास्थाने राजासने अयं त्वया पूजितः इति। तद्वाक्यं श्रुत्वा राजपुरोहितः सम्पत्पूर्णः असहिष्णुः सन् भट्टनाथमुखं वीक्ष्य, भक्त्या तं प्रणिपत्य, सर्वेषां शृण्वतां वचः अब्रवीत् पण्डितोत्तम। वेदान्तप्रतिपादितं परतत्त्वं विनिर्णीय, पण्डितसमक्षे शिष्याय मे विशदं ब्रूहि इति।

दृढव्रतः भट्टनाथः पुरोहितवचः श्रुत्वा, श्रीमन्नारायणेन स्वप्ने प्रोक्तं विषय मनसा स्मरन् शौरिकटाक्षेण संप्रकाशितान् सर्वार्थान् सर्वविद्वत्सभामध्ये तत्त्वनिर्णयं विदधे। साक्षात् लोकरक्षार्थं वेदात्मा विहगेश्वरः भट्टनाथरूपेण भूतले सञ्जातः किल। विष्णोः पूर्णकटाक्षश्च लब्धः। गङ्गाप्रवाहवत् विष्णुचित्तमुखात् वेदान्तवाक्यानि समागतानि। सभासदः सर्वेऽपि चित्रार्पिताः इव स्थिताः। श्रुतिस्मृतीतिहासपुराणैः निखिलैरपि रचनैः ऐककण्ठं विधाय बालबोधार्हं विशदं उपन्यस्य श्रीमन्नारायण एव परतत्त्वमिति संस्थापितवन्तः विष्णुचित्तार्याः। कथमित्युक्ते संक्षेपेणोच्यते - सर्वाणि शास्त्राणि वेदे एव अन्तर्गतानि। वेदश्चाष्टाक्षरे स्थितः। अष्टाक्षराणि प्रणवे स्थितः। प्रणवः अकारे स्थितः। वेदाध्ययनस्यारम्भे अन्ते च अनुसंधीयमानस्य ओंकारस्य मूलभूतेन अकारेण परमात्मैव उच्यते। ‘‘अक्षराणामकारोऽस्मि’’ इति भगवता स्वयमुक्तं खलु। समस्तशब्दमूलत्वात् समस्तवाच्यमूलत्वात् स्वभावतः अकारस्य कारणभूतः परमात्मैव। तयोः वाच्यवाचकसम्बन्धः प्रतीयते। ‘‘अकार एव सर्वात्मा’’, ‘‘अकारो विष्णुवाचकः’’,

*अकारवाच्यस्तत्रैवं विष्णुरेवेति गीयते*
*अकारवाच्यो भगवान् विष्णुः नारायणः परः।*
*सर्ववेदान्तवाक्यैश्च सर्वस्मात् पर उच्यते*
*जगज्जन्मस्थितिलयाः परतत्त्वस्य सूचकाः॥*

अतः अवधारणाद्यैः धात्वर्थैश्च श्रीमन्नारायण एव परतत्त्वमिति स्फष्टं भवति। ‘‘यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रत्ययन्त्यभिसंविशन्ति तद्ब्रह्म’’ इत्यादि नारायणानुवाकादिभिः निश्रेयसप्रदातृत्वं, मुमुक्षूपास्यता, च अकारवाच्यस्य तस्य श्रीहरेः प्रतिपादिताः।

*विष्णोः सकाशादुद्भूतं जगत्तत्रैव चत स्थितम्।*
*स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः॥*

एतद्रहस्यं वेदानां पुराणानां च सम्मतम् ।

*सत्यं सत्यं पुनः सत्यं उद्धृत्य भुजमुच्यते ।*
*वेदशास्त्रात्परं नास्ति, नदैवं केशवात्परम् ।।*

इत्येवं प्रमाणवाक्यानि भट्टनाथेन उक्तानि । तदानीमेव स्थूणाग्रे दृढं बद्धं विद्याशुल्कं धनं महता रवेण स्वयं भूमौ अपतत् । पतमानं विद्याशुल्कं दृष्ट्वा भट्टनाथः जग्राह । राजा पुरोहितः, विदूषकाः विधाश्च तदा विस्मयाविष्टाः तं द्विजश्रेष्ठं प्रणेमुः ।

महौजसं विष्णुचित्तं गजस्कंधे प्रतिष्ठाप्य, राजा भक्तितः पुरप्रदक्षिणं कारयामास । पण्डिताः सर्वेऽपि छत्रचामरवृन्तादीन् समादाय वेदपाठैः सहादरात् धीरं विष्णुचित्तम् अनुययुः । भेरीमृदङ्गवाद्यैः चतुरङ्गबलैस्संह अमात्यसहितः श्रीमान् स राजा भट्टानाथम् अनुययौ । तस्य राज्ञः पुरोहितः सम्पत्पूर्णः महाभक्त्या स्वर्णमयं छत्रं दधार । विचित्रतोरणवती, पताकध्वजमालिनी रम्या मधुरा श्रीरामचन्द्रोत्सव वैभवशोभिता अयोध्या इव प्रकाशिता ।

ब्रह्मरथारूढम् अप्रतिमौजसं पुत्रं द्रष्टुकामौ पितरौ इव सर्वेश्वरः श्रीमन्नारायणः जगन्मात्रा महालक्ष्म्या सहितः, दिव्यपञ्चायुधधरः, ब्रह्मरुद्रादिभिः सेवितः, नीलाम्बुदनिभाकारः, पीताम्बरधरः, अनेकदिव्याभरणदिव्यमङ्गलविग्रहः वैनतेयं समारुह्य व्योममार्गे विष्णुचित्तस्य प्रत्यक्षमगमत् । सर्वेऽपि भट्टनाथस्य कृपया जगदीश्वरं भगवन्तं लोचनाभ्यां समुद्वीक्ष्य भक्त्या प्रणम्य, कृतार्थाः अभवन् । भट्टनाथः भगवतः परम् अप्राकृतं तेजः विलोक्य, विस्मयेन हर्षमवाप्तवान् । सम्प्राप्तानवधिकज्ञानभक्तिमहार्णवः भट्टनाथः भगवतः निर्हेतुककटाक्षतः सर्वज्ञत्वादिकान् अनुपमानान् बहून् विष्णोः गुणान् दिव्यज्ञानेन विशदं ज्ञात्वा, परमपदे नित्सूरयः सदा यद्रूपं पश्यन्ति तत् सौन्दर्यं, सौकुमार्यं, लावण्यं, परिणामादिरहितं, सर्वदैकस्वरूपकं, नित्यसिद्धं, पञ्चोपनिषणमयं दिव्यमङ्गलविग्रहं दृष्ट्वा, क्षणक्षरस्वभावे, कालात्मपरिणामके कलिसाम्राज्यभूयिष्ठे, अज्ञानतमसाच्छन्ने, अर्थकामपरायणे अस्मिन् भूलोके नित्यमुक्तैकभोग्यम्, अप्राकृतं, दिव्यरूपम् अचक्षुर्विषय अलभ्यमानं श्रीमन्नारायणस्य दिव्यमङ्गलविग्रहं दृष्टं चेत् अनिष्टं स्यादिति मत्वा हानिशङ्कां समासाद्य, अनिष्टपरिहाराय प्रेमावेशवशात् गजकण्ठगतां घण्टां तालवाद्यं विधाय, लोकजिष्णवे विष्णवे मङ्गलाशासनं चक्रे । तावन्मात्रेण अतृप्तः सन् विष्णोः दिव्यविभूतीः उद्दिश्य, मङ्गलाशासनं चक्रे । एवं द्वादशपाशुरात्मकं

दिव्यप्रबन्धं लोकोपकाराय प्रसादितवन्तः विष्णुचित्तार्याः। श्रीहरिः भगवान् विष्णुः विष्णुचित्तेन भूयसा कृताशीः कृतार्थः सन् परमं पदं ययौ । ततः स राजा अमात्यपुरोहितादिभिः सह विष्णुचित्तस्य शिष्यत्वं प्राप्तवान् ।

एवं राज्ञा संम्पूजितः विष्णुचित्तः महता वैभवेन सुवर्णशिबिकारूढः सन् सुवाद्यैः छत्रचामरैः दक्षिणमधुरानगरात् श्रीविल्लिपुत्तूरु नाम धन्विमङ्गलपुरं प्रतस्थे । धन्विनव्यपुराधीशेन शौरिणा प्रेषिताः जनाः भेरीमृदङ्गवाद्यैः छत्रचामरैश्च नगरस्य क्रोशमात्रदूरेण महात्मानं विष्णुचित्तं प्रत्युद्गम्य, अभिपूज्य, पुरमानीय, तत्र वीथीचतुष्टयेषु प्रदक्षिणं कारयित्वा, स्वामिसन्निधौ अर्चकैः तीर्थः प्रसादं मालां च दापयित्वा, विष्णुचित्ताय सन्मानमकरोत्। विष्णुचित्तस्तु तत्सर्वं भक्त्या सादरं संगृह्य, राजार्पितं सर्वं धनं विष्णवे समर्प्य, पूर्ववत् तुलसीवनं संपोषयन्, सुगन्धतुलसीमालाः, पुष्पमालाश्च श्रीमालाकारवत् नित्यं भक्त्या शौरिणे समर्पयन्, तत्रैव स्थितः । श्रीकृष्णभक्तत्वात् श्रीभागवतस्थितं कृष्णावतारचरितं सम्यक् ज्ञात्वा, कृष्णस्य गोपवेषं, तस्य अतिमानुषचेष्टितं नवनीतादिहरणं, गोपीजनविहाराणं सौन्दर्यं सौकुमार्यं सौलभ्याद्यखिलान् गुणान् च भक्तिपारवश्येन गोपिकाजनवत् कृष्णलीलामहोत्सवं सम्यक् अनुभूय, नित्यं कृष्णतन्मयत्वेन कृष्णादन्यं न वेद कृष्मानुभवसञ्जातमहानन्दात् तमेवार्थं समुद्धृत्य महाकारुणिकः भट्टानाथः ''पेरियाल्वार् तिरुमोलि'' नाम भट्टनाथगीताख्यं दिव्यप्रबन्धमनुगृहीतवन्तः। तस्मिन् दिव्यप्रबन्धे चतुश्शतपाशुराणि सन्ति । त्रयोदशदिव्यदेशाः भट्टनाथेन स्तुताः अस्मिन्नर्थे एकः श्लेकः श्रूयते -

*रङ्गं धन्विवपुरं च पाण्ड्यमधुरा गोष्ठी कुरङ्गस्थले*
*श्रीम्त्कृष्णपुरं वनाचलपरः श्वेताचलः श्रीपुरी ।*
*शेषाद्रिः पुरुषोत्तमञ्च मधुरा नन्दव्रजश्चैव ते*
*देशा भट्टमहामुनीन्द्रकृतिना षट्सप्त चाभिष्टताः ।।* इति ।

स्वस्वाभीष्टसिद्धेः अन्ये दिव्यसूरयः भगवन्तं विष्णुं नमस्कारं प्रचक्रिरे । विष्णुचित्तस्तु भगवत्प्रेमपारवश्येन भघवतः दृष्टिदोषपरिहाराय महत्यै विभूत्यै मङ्गलाशासनमकरोत् । विष्णुचित्तः यस्मात् परकार्यपरो बभूव तस्मात् महार्य (पेरियाल्वार) नामास्य विश्रुतं बभूव । मङ्गलाशासनात्मकः स दिव्यप्रबन्धः वेदादौ प्रणव इव सर्वप्रबन्धाध्ययने प्रप्रथयं पठ्यते । श्रीवैष्णवत्वसिद्ध्यर्थं तिरुप्पल्लाण्डुं

नाम दिव्यप्रबन्ध एव पठितव्यः । भट्टनाथस्य द्वितीय प्रबन्धः पेरियाल्वार्‌तिरुमोळि । तस्मिन् प्रबन्धे त्रिसप्तति चतुश्शतपाशुराणि सन्ति । महार्थप्रतिपादकं विष्णुचित्तस्य प्रबन्धं ये पठन्ति ते सर्वपापविनिर्मुक्ताः भवेयुः । ये भट्टनाथचरितं शृण्वन्ति ते सर्वकामान् सम्प्राप्य, विष्णुलोके महीयते ।

**तिरुप्पल्लाण्डु**

*गुरुमुखमनधीत्य प्राह वेदानशेषान्*
*नरपति परिक्लुप्तं शुल्कमादातुकामः ।*
*श्वशुरममरश्वन्द्यं रङ्गनाथस्य साक्षात्*
*द्विजकुलतिलकं तं विष्णुचित्तं नमामि ।।*

श्रीविष्णुचित्तार्यैः परमात्मनः भुवनमोहनदिव्यमङ्गलविग्रहलावण्यश्रियः प्राकृतजनदृष्टिदोषपरिहाराय कृतं मङ्गलाशासनमेव तिरुप्पल्लाण्डु इत्युच्यते । अस्मिन् मङ्गलाशासनप्रबन्धे द्वादशपाशुराणि सन्ति । संस्कृतवेदे प्रणवस्य यत्प्राधान्यमस्ति तत्प्राधान्यं द्राविडवेदे अस्य मङ्गलाशासनप्रबन्धस्य विद्यते ।

चाणुरादिमल्लजित् दृढभुजस्कन्ध इन्द्रनीलमणिसदृशकान्तिमन् ! भवतः बहव संवत्सराः, अनेकसहस्रसंवत्सराः अनन्तसंवत्सराः मङ्गलं भवतु । भवतः पादपद्मयोः सौन्दर्यस्य रक्ष ।

स्वामिन् । दासभूतानामस्माकं सर्वशेषिण भवता वियोगाभावेन अनेकसहस्रसंवत्सराः नित्यसंयोगः भवतु । भवतः वक्षःस्थले नित्यवासिनी श्रीमहालक्ष्मी नित्यं वसतु । सौन्दर्यसमृद्धज्योत्या भवतः वामहस्ते प्रकाशमानं शत्रुनाशकं सुदर्शनचक्रं नित्यं वसतु । सेनयोर्मध्ये युद्धभूमौ ध्वनिकरं पाञ्चजन्यं नित्यं वसतु ।

हे जनाः भगवत्कैङ्कर्यसम्पदां अभिवृद्धिकामाश्चेत् आगत्य, अङ्कुरार्पण - मृत्तिकाकैङ्कर्ये. कल्याणे भागं स्वीकुर्वन्तु । स्वोदरपोषणार्थं दास्यं कुर्वन्तः स्थितानां मङ्गलशासनपराणां अस्माकं गोष्ठ्यां प्रवेशः नास्ति । सप्ततरकालात् अस्माकं प्रयोजनान्तरं नास्ति । राक्षसनिलयं लङ्कापट्टणं समूलं नाशं कृतवतः श्रीरामचन्द्रस्य मङ्गलाशासनं कुर्मः ।

चिकीर्षितार्थप्राप्तेः पूर्वमेव, देहत्यागात्पूर्वमेव अस्माकं गोष्ठ्यां प्रविशन्तु ।

स्वानुभवं त्यजन्तु। ओं नमो नारायणाय इति गातुं संसिद्धाश्चेत् अत्रागत्य मङ्गलाशासनं कुर्वन्तु।

अनेकब्रह्माण्डनिर्वाहकस्य, रावणादिराक्षससंहारकस्य हृषीकेशस्य दासुकुलान्तर्भूताः भवन्तः सर्वेऽपि अत्रागत्य श्रियःपतेः श्रीपादयोः प्रणम्य, सहस्रनामानि उक्त्वा, पूर्वस्वरूपं त्यकत्वा, सहस्रमानं भवतु इति मङ्गलाशासनं कुर्वन्तु।

अहं, मम पिता, पितामहः, प्रपितामहः प्रप्रथितामहः सप्तकालादारभ्य वयं सर्वेऽपि प्रयोजनान्तरराहित्येन श्रीमन्नारायणस्य दास्यं कुर्मः। श्रवणातिरुनक्षत्रे प्रलयभीकरनरसिंहरूपेण सायं संध्याकाले स्तम्भादवतीर्य, हिरण्यकाशिपुं हतवान् अस्माकं देवाधिदेवः। तस्योपशमनाय शतसहस्रमानं भव, सुखीभवेति मङ्गलाशासनं करिष्यामः। आगच्छन्तु ।

सूर्यचन्द्राग्निभ्यः अधिककान्त्या प्रकाशमानस्य सुदर्शनचक्रस्य वर्तुलाकारचिह्नं भुजे धृत्वा अस्मद्वंशीयाः सर्वेऽपि श्रीमन्नारायणस्य सेवों कुर्मः। मायायुद्धकारस्य बाणासुरस्य सहस्रभुजछेदकस्य सर्वसमर्थस्य परमात्मनः मङ्गलाशासनं कुर्मः।

स्वच्छघृतेन श्रेष्ठं प्रसादं, नित्यिकैङ्कर्यं, कर्णयोः मकरकुण्डले, शरीरस्य चन्दनं च दत्वा मां परिशुद्धस्वभावेन पवित्रीकृतवतः गरुडध्वजस्य श्रीमहाविष्णोः मङ्गलाशासनं करोमि।

अस्माकं स्वामिना घृत्वा विहितं पीतांबरं धृत्वा, तद्भुक्तशेषं मात्रं भुङ्क्त्वा, तेन धृताः तुलसीपुष्चमालाः धृत्वा जीवामः वयं तस्याज्ञानुसारेण तस्य कैङ्कर्यं कृत्वा तदीयतिरुनक्षत्रमहोत्सवे शेषशायिने मङ्गलशासनं कुर्मः।

अस्माकं स्वामिन् त्वच्छेषभूताः वयं पुत्रपौत्रादयस्सर्वेऽपि अहङ्कार ममकारादीनि ऐश्वर्यादीनि विहाय उज्जीविताः। मनोज्ञे रोहिणीनक्षत्रे मथुरानगरे अवतीर्य, कंसादीन् असुरान् हत्वा, कालीयस्य पञ्चफणेषु ताण्डवं कृतवते स्वामिने मङ्गलाशासनं करोमि ।

श्रियःपते ! देहात्मभ्रान्तिः इत्यादिदुर्विवादरहितौनां गोष्ठीनिर्वाहकानामधिपतिः श्रीवैष्णवाभिमानेनोन्नतः शेल्वनंबिः इव अहमपि भवतः अनादिदासः।

उपाय उपेय प्रकरेण ओं नमो नारायणाय इति अष्टाक्षरीमंत्रम् अनुसन्धानं कृत्वा सर्वविधैः भवतः सहस्रनामानि अनुसन्धानं कृत्वा भवते मङ्गलाशासनं कुर्मः।

*पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।*
*दैवतं देवतानां च भूतानां योऽव्ययः पिता ।।*

इति व्यासोक्तिरीत्या पवित्रमूर्तये श्रीमन्नारायणाय शार्ङ्धन्विने परमपदवासिने समस्तसन्मङ्गलानि भवन्तु इति श्रीविल्लिपुत्तूरुवासिनः विष्णुचित्तार्याः तिरुप्पल्लाण्डु इति मङ्गलाशासनप्रबन्धं द्राविडवेदनिगूढार्थरूपेण अनुगृहीतवन्तः। अस्य प्रबन्धस्य अनुसन्धानसमय एव शुभसमय इति मत्वा, ये अनुसन्धानं कुर्वन्ति ते ओं नमो नारायणाय'' इति परमात्मानं समीप्य मङ्गलाशासनं करिष्यन्ति मङ्गलं मङ्गलाशासनस्य कर्त्रे । विष्णुचित्ताय मङ्गलं एकषष्ठ्युत्तरचतुःशतपाशुरप्रबन्धे भट्टानाथाय । मङ्गलं मिथुनमासे स्वातीनक्षत्रे अवतीर्णस्य विष्णुचित्ताय । विष्णुपरत्वमुपस्थाप्य परतत्त्वशुल्कं प्राप्तवते विष्णुचित्तायमङ्गलम् ।

**पेरियाल्वार् तिरुमोलि :**

श्रीविष्णुचित्तसूरिभिः प्रसादितः द्वितीयप्रबन्धः पेरियाल्वार् तिरुमोलि इति श्रीभट्टनाथसूक्तम् । अस्मिन् दिव्यप्रबन्धे ४७३ पाशुराणि सन्ति । शतकचतुष्टयम् । अनन्तरं दशकचतुष्टयं च वर्तते । प्रथमतः कृष्णावतारचेष्टानुभवाः अधिकतया वर्णिताः । ततः नानाविधाः भगवद्गुणानुभवाः उक्ताः श्रीकृष्णावतारकाले यशोदा, गोपिकाः कीदृशानुभवं प्राप्तवत्यः ततः अतिशयितश्रीकृष्णभावानुभवं प्राप्तवन्तः भट्टनाथाः ।

प्रथमशतके प्रथमदशके द्वितीयदशके च गोकुले श्रीकृष्णस्य कोलाहल उपलालनविशेषाः, दिव्यविग्रहवैलक्षण्यं चोक्ताः । तृतीय दशकें चतुर्थदशके च यशोदया बालकृष्णस्य लालनमुक्तम् । पञ्चमदशके गृहप्राङ्गणे सञ्चरन् चन्द्रमाह्वयति । षष्ठदशके सप्तमदशके च बालकृष्णस्य क्रीडां दृष्ट्वा यशोदा आनन्दमनुभवति । अष्टमदशके बालकृष्णस्य नटनं यशोदा वर्णयति । नवमदशके दशमदशके च बालकृष्णस्य शिशुचेष्टान् वर्णयति यशोदा ।

द्वितीयशतके प्रथमदशके बालानां रहस्यक्रीडाः वर्णिताः । द्वितीयदशके क्रीडायासेन सुप्तं कृष्णमुत्थाप्य स्तन्यं दत्वा आनन्दमनुभवति । तृतीयदशके श्रीकृष्णस्य चौलोत्सवे यशोदा आनन्दमनुभवति। चतुर्थदशके यशोदा बालकृष्णस्य

तिरुमज्जनं कुर्वन् आनन्दरसमनुभवति। पञ्चमदशके यशोदा बालकृष्णस्य शिरोजानलङ्कुर्वन् रसानन्दमनुभवति। षष्ठदशके नटनाक्रीडया, सप्तमदशके विविधपुष्पालङ्करणेन, अष्टमदशके दृष्टिदोषनिवाराणार्थं तिरुवेल्लरैस्वामिनं स्तुवन् यशोदा आनन्दरसमनुभवति। नवमदशके बालकृष्णेन विविधक्रीडाकोलाहलैः इतरगृहेषु नवनीतचौर्यं, तैः आरोपणं, यशोदया निवारणं च विविधरीतिभिः वर्णिताः। दशमदशके युवतीभिः स्वेच्छया संचरमाणं कृष्णं, तस्य क्रीडाचौर्यविशेषान् चोद्दिश्य श्रुत्वा यशोदा लीलाव्यापाररसमनुभवति।

तृतीयशतके प्रथमदशके यशोदावस्थामनुभवन्ति विष्णुचित्तसूरयः। सुबहूनि अतिमानुपचेष्टितानि कृतवन्तं च त्वामहं साक्षान्नारायणमभिजाने। अतः तुभ्यमितः परं स्वपुत्रधिया स्तन्यं दातुं भीतास्मि भृशमिति असकृदाह। तदिदं निबध्यते।

प्रभाते पुत्रं कृष्णं जात्युचिततया गोचरणार्थमरण्यं प्रति प्रेषितवती यशोदा तद्विश्लेषमसहमाना भृशं दूयमाना व्रजवासकाले तेन तदा तदा क्रियमाणानि स्थितानि धूर्तचेष्टितानि स्मृत्वा कथयित्वा च हा हन्त व्रजे एवं नाम धूर्तकृत्यकरणेन विहर्तुमर्हं मम कुमारम् अतिकर्कशहृदयाहम् अतितीक्ष्णकण्टकसञ्चयपाषाणखण्ड- दन्तुरं काननं प्रापयम्। बत बत पापिनी खल्वहम् इति स्वात्मानमतिमात्र मधिक्षिप्तवती। तदिदं निबध्यते द्वितीयदशके।

गोचरणार्थं वनं गतवान् कृष्णः। तदात्वे मातुः यशोदया यानि अद्भुतभाषितानि बभूवुः तानि तृतीयदशके अतिरमणीयप्रक्रियया तद्भावभावनाजुषा विष्णुचित्तसूरिवरेण निबध्यन्ते।

प्रियपुत्ररत्न। गोविन्द। त्वं श्वः प्रभृति काननं प्रति मा स्म गच्छः। सर्वथा विधेयस्सन् इहैव वर्तेथाः इति यशोदायाः आज्ञामनुसृत्य कृष्णः सप्त दिनानि स्वगृहे एव स्थितवान्। अथ यथापूर्वं गोसंचरणाय काननं प्रति गत्वा तत्र गोसंचारणजनित- हर्षप्रकर्षेण स्वात्मानं विविधैः अतिरमणीयैः अलङ्कारैः अलङ्कृतं कृत्वा परममधुर- मुरलीनिनदसनाथं विविधानिगीतानि च कुर्वन् स्वकीयैः अपरिमितैः वयस्यैः सह बृन्दशः व्रजं प्रति निवर्तते। तदात्वे तस्य अस्पष्टचिन्तापदमाभिरुप्यमवेक्ष्य, गोपाङ्गना अतिमात्रं व्यामोहमवापुः इत्यमुं विषयं विष्णुचित्तमुनिवरः तासां भावनया भाषते चतुर्थदशके।

व्रजे प्रतिसंवत्सरं महेन्द्रपूजां निर्वर्तयन्तः गोपालाः तदर्थं पुरस्तादेव बहुशकटपरिमितशाकसूपादिसमेतबृहदन्नकूटसज्जीकरणे प्रवर्तन्ते। एवं बहोः कालात्

प्रचलति । एकस्मिन् वत्सरे तु कृष्णः तदिदम् अन्नाकूटसज्जीकरणमवलोक्य किमप्यजानन्निव तान् गोपानप्राक्षीत्-किमर्थमेवमपरिमितान्नसन्नाहः क्रियत इति । पृष्टाश्च ते प्रत्यूचुः। वत्स कृष्ण किं न जानासि त्वम्। प्रतिसंवत्सरं खल्वेवं सम्भ्रियते देवेन्द्रसमाराधनाय । अस्मत्कुलधनभूतानां गवां वत्सानां च सलिलमवसादि-वस्तुप्रदानेन महोपकारकः महेन्द्रः खलु । स च अवश्यम् अस्माभिः सन्तर्पणीय इति चिरात् एवमनुष्ठानं सम्पद्यते इति। तडाकर्ण्य भगवान् कृष्णः परडेवभूतस्य मम पुरतः देवतान्तरसमाराधनमिदं कथमिव सह्यम्। यथाकथञ्चित् भञ्जनीयमेवैतत् इति मनसि कृत्वा प्रोवाच तान् प्रति - ''अयि भो गोपवृद्धाः। असौ गोवर्धनाद्रिरेव तु अस्माकं गवां वत्सानां च धारकपोषकभोग्यवस्तुप्रदानेन परिपालकः । प्रत्यक्षदेवं परित्यज्य अनुपकारकस्य परोक्षस्य च इन्द्रस्य समाराधनं न खलु न्याय्यम् । यो वै स्वां देवतामतिजयते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति'' इति भगवती श्रुतिश्च प्राह । तत्सर्वथाऽपि अनुचितं देवेन्द्राराधनमिहं इति । तदिदमाकर्णितवन्तः गोपाः सर्वेऽपि युक्ततरमेव इदं वच इति प्रतिपाद्यमानाः उरहारराशिः सर्वोऽपि गोवर्धनाचलतल्लजायैव समर्पणीय इति अवधारयन्तः तथैव समार्पिपन् । भगवान् कृष्ण एव अहं गोवर्धनोऽस्मीति तत्सर्वं स्वयमाश्नात् । अथ कृद्धो वासवः पुष्कलावर्तकादि पर्जन्यगणान् नियुज्य सुमहत्तरवृष्टिबाधामुदपादयत् । अथ गोगोपगोपीजनसंचये सुदुस्सहवृष्टिबाधया अनया भृशं व्याकुले विह्वले च सति भगवान् भक्तवत्सलः नन्दनन्दनः स्वयं यमचलं रक्षकमाचचक्षे पुरा, तेनैवाचलेन रक्षां विधित्सुः तमेव गोवर्धनाद्रिं छत्रमिवोद्धृत्य सप्तरात्रं बिभर्ति स्म । अथ भृशमपत्रपयाऽभिभृतः बिडौजा अपचारक्षमापणेन पूतो बभूवेति सुप्रथित इतिहासः । एतत्कथाप्रपञ्चनपूर्वकं भगवन्तं कृष्णं गोवर्धनाद्रिं च परमभोग्यसूक्ति-निकरेण विष्णुचित्तमुनिवरः स्तौति पञ्चमदशके ।

षष्ठदशके मुकुन्दस्य मुरलीगानवैदग्ध्यमतिमात्रमुपवर्ण्यते। बृन्दावनान्ते तस्य वेणुनिनदमाकर्ण्य रम्भोर्वशीमेनकाद्यप्सरस्समुदाया दिवि लज्जाभिभूतः निजगान-गर्तनादिकृत्यवर्गं विमोहात् मुमोच । घासग्रहणतत्परतया स्थितः हरिणवर्गोऽपि विस्मृतस्वकृत्यो भित्तिलिखितचित्रसधर्मा बभासे। वृक्षाश्च चैतन्यभाजः कृष्णपार्श्वे समुपसर्पन्तः मधूनि कुसुमानि चावाकिरन्। एवं नाम कृष्णस्य अप्रमेयम् अत्यद्भुतम् अद्वितीयम् अतिमधुरमुरलीगानं जम्बूद्वीपवासिजनतानां विलक्षणश्रोत्रभाग्यमिति अस्मादृशामतिकठोरतरं, हृदयमपि जडीकुर्वतीभिः दिव्यसूक्तिभिः अनुगृण्हाति विष्णुचित्तमुनिवरः षष्ठदशके ।

सप्तमदशके अवशिष्टेषु अष्टादशसु दशकेषु च उच्चावचा भगवदनुभवाः सम्पद्यन्ते । तत्र च एतस्मिन् दशके विष्णुचित्तमुनिवरः भगवति स्वकीयम् अभिनिवेशातिशयं स्त्रीभावनया प्रथयति । श्रीशठकोपसूरि-कलिवैरियोगि-कुलशेखर- सूत्राणामपि दिव्यप्रबन्धेषु मध्ये मध्ये स्त्रीभावनयाऽपि श्रीसूक्तयो अवतरन्ति । तत्रापि सन्ति तस्त्रो विधाः दुहितृवाक्यं मातृवाक्यं सखीवाक्यमिति । अत्र तु मातृवाक्यापदेशेन श्रीविष्णुचित्तनायिका भगवति स्वानुरागभ्रमप्रमेय-माविष्करोति । विष्णुचित्तसूरिः अधुना कन्यकास्थानमधितिष्ठतीति यावत् । जननी स्वदुहितृवृत्तं वक्तीति अनया प्रक्रियया निबध्यते ।

अष्टमदशके जननीवचसा कथनमनुवर्तते । पुनरपि माता कथयति हन्त । मदीयां दुहितरं कृष्णः मुष्णाति स्म : अतश्च हिमहतनलिनं सर इव मम गृहं नष्टशोभमभवत् । कृष्णेन गूढं नीता सैषा यशोदायाः स्नुषा समजनि । हन्त । न जाने सा श्वश्रूर्यशोदा अलभ्यलाभात्मिकामिमां स्नुषां किमु सानन्दमुपलालयिष्यति ? अस्याः मत्पुत्र्याः श्वश्रूगृहे तु गव्यसमृद्धेः अभ्यधिकत्वात् तन्मथनं नक्तं दिवं च कर्तव्यं भवेत् । अबला कृशाङ्गी मम सुता सौकुमार्यनिधिः कथमहो कठोरतरं तत्कर्म कर्तुं क्षमा इत्येवमुच्चावचं मातृवाचा वदन् स्वात्मनः कृष्णपत्नीत्वं स्थापयति विष्णुचित्तमुनिवरः अष्टमदशके ।

सूरिः उभयोः गोपकन्ययोः भूमिकां परिगृह्य, एकस्या वाचा कृष्णगुणान् अन्यया वाचा रामगुणांश्च सङ्कीर्तयन् अनवधिकमानन्दमनुभवति अस्मिन् नवमदशके । तत्र प्रथम, तृतीय, पञ्चम सप्तम, नवमपाशुरेषु कृष्णगुणानुभवनिष्णाताया गोपकन्यकायाः वाचा निबद्धाः । द्वितीय, चतुर्य, षष्ठ, अष्टम, दशमपाशुरेषु रामगुणोपभोगनिरताया ललनाया वाचा निबद्धाः । नृत्तविशेषकलनेन सह नन्दनन्दनदशरथनन्दनयोः गुणानुभवः प्रचलति नवमदशके ।

भगवतो दशरथात्मजस्य परं गुणाननुबुभूषुः रावणेनापहृताम् अशोकवने स्थितां भगवतीं जानकीमभिवीक्ष्य अभिज्ञानानि विज्ञापितवतो हनुमतो वाचा रामचरितानि प्रथयन् दशमदशकं निबध्नाति । सीतापाणिग्रहणसमनन्तरं परशुरामभङ्गतः प्रभृति मारीचमायामृगाक्रन्दितश्रवणेन लक्ष्मणप्रस्थानपर्यन्तं कथाजातमभिज्ञानत्वेन विज्ञाप्य, रामनामाङ्कितमङ्गुलीयकं च ददौ वायुसूनुः । तच्च सीता सादरं स्वीकृत्य, शिरसि निधाय निरवधिकमानन्दमन्वविन्दतेति कथनम् अस्मिन् दशमदशके रामचन्द्रदिव्यगुणानुभवात्मकमवसेयम् । मध्ये काकासुरनिग्रहानुग्रहकथाऽपि हनुमता विज्ञाप्यते ।

चतुर्थशतके प्रथमदशके विलक्षणप्रक्रिया दृश्यते । एक एव सर्वेश्वरः मत्स्य, कूर्म, वराह, नरहरि, वामन, राम, कृष्णादिनानात्मना अवतरति, धर्मी तु एक एवेति तादात्म्यप्रथनेन विलक्षणमनुभवं विरचयितुकामः विष्णुचित्तसूरिवरः युगपन्मूर्तिद्वयं बिभ्राणः एकया मूर्त्या भगवदन्वेषणरसमनुभवन् अपरया च मूर्त्या अमुत्र भगवानेवं विधः दृष्ट इति तद्दर्शनानन्दरसानुभवं प्रथयन् प्रथमदशकं विलक्षणवैखर्या निबध्नाति ।

द्वितीयदशके श्रीवनाद्रितिरुमालिरुंशोलैनामक श्रीसुन्दरबाहुभगवदभिव्यक्तिस्थालप्रशंसा क्रियते । अयं श्रीवनाद्रिः सुन्दरभुजस्य भगवतः अतिशयितविभवां स्थितिं बिभर्ति । भगवान् कीदृशः ? सकलजगत्प्रध्वंसनैकप्रवणखरदूषणदशवदनकुम्भकर्णादियातुधानबृन्दनिर्मूलनविचक्षणः व्रजे चिरात्प्रवृत्तामिन्द्रपूजां निरुध्य तां गोवर्धनमहीधरे प्रवर्तितवान्, ग्राहग्रस्तगजेन्द्रातिहारी, कंसप्रचोदितकुवलयापीडाख्यमातङ्गमदमर्दननिर्दयाः वारुणास्त्रप्रयोगतः कान्तारेऽपि कर्कशे जलवार्तादरिद्रे सलिलमुद्भाव्य पिपासितपाण्डवाश्वपिपासाशमनं कृतवान् इत्येवमेवं प्रशंसा क्रियते ।

तृतीयदशकेऽपि श्रीवनाद्रिदिव्यदेशस्य प्रशंसनं कृतम् । सूरिवरः अस्मिन् दिव्यदेशे विशिष्य प्रावण्यशाली । अत एव उपरिष्टादपि पुनरपि स्तौति दिव्यदेशमिमम् । वस्तुतः परमभोग्यः परमरमणीयश्च खलु अयं सुप्रसिद्धवैभवनिधिः दिव्यदेशः । गिरिवरेऽस्मिन् विराजमानः भगवान् श्रीमत्यां रुक्मिणीदेव्यां गाढानुरागभरितहृदयः । कालिययमलार्जुनधेनुकादिहनन-विख्यातविक्रमः नरकासुराभिधानस्य क्षेणी-पुत्रस्य विध्वसने विशारदः बाणासुरबाहुवनच्छेदनचतुरः शिशुपालनिहन्ता द्रौपदीमङ्गलसूत्ररक्षणदक्षिणः दशवदनमदमर्दनश्चेत्युच्चावचैः प्रकारैः तृतीयदशके अभिष्टूयते ।

पाण्ड्यमण्डले तिरुक्कोट्टियूर नाम्ना प्रसिद्धः श्रीगोष्ठीपुराभिधानः दिव्यदेशः विराजते । तमिमामधिवसतां भागवतानां प्रशंसनमुखतः स एष दिव्यदेशः अनुभूयते सूरिवरेण चतुर्थदशके । अत्रत्याः श्रीवैष्णवाः भक्ताग्रेसराः कीदृशाः ? क्षुद्रपुरुषार्थलिप्सया क्षुद्रनरप्रशसनम् अनृतभाषणम् इतरजनदूषणं च इत्येवंविधानां वाग्दुरितानां वैदेशिकाः, दुर्भिक्षकालेऽपि अतिथिसत्कारे अतीव समुत्सुकाः, किं बहुना ? सर्वथाऽपि निरवद्या नित्यनैमित्तिकादिकर्मानुष्ठानबद्धश्रद्धाः । एवंविधप्रभावभासुरैः भार्गवतैराद्यमिदं क्षेत्रं तेषां भगवतानां भवनेषु दिव्येषु भासमानानां

मणीनां प्रभया प्रोज्ज्वलं च। एवंविधे दिव्यगोष्ठीपुरे विराजमानं भगवन्तं ये नामकैङ्कर्यत आह्लादयन्ति, तेषां प्रशंसनम्, अतथाविधानां विनिन्दनं च चतुर्थदशके निबध्नाति।

पञ्चमदशके मुमुक्षूणां प्रशंसनं, तदितरेषां मोक्षरुचिविरहितानां भगवद्विमुखानां उपालम्भश्च प्रचलतः। ये खलु पामरा यावज्जीवं पुत्रकलत्रादिष्वेव ममकारम् अतिमात्रं वहन्तः सन्तः दुर्वासनामूलतृष्णाः सन्ततं संवर्धयन्तः कदाचन म्रियन्ते। अथ ते नानाविधा यातनाः प्राप्य भृशमवसीदन्ति इत्यभागवतनिन्दनम्, ये तु हृदयाभिधाने दिव्यदेशे ते तावदत्रामुत्र च शाश्वतसुखशालिनो भवन्तीति भागवतानां प्रशंसनं च कलयति भट्टनाथसूरिवरः।

जगति जातानां शिशूनां नामकरणसंस्कारं कुर्वन्तः पितरः धनपालनरपाल चन्द्रेन्द्रादिनामानि कुर्वन्तीति प्रसिद्धम्। तादृशेभ्यः असमञ्जसकारिभ्यः मधुरतरः उपदेशः षष्ठदशके दीयते। क्षुद्रफलकामनया क्षुद्राणि नामानि कुर्वन्तः यदिद भगवतो अच्युतस्य केशवस्य श्रीधरस्य पुण्डरीकाक्षस्य माधवस्य गोविन्दस्य दामोदरस्य नीलमेघनिभस्य नारायणस्य श्रीपतेः नामानि दिव्यानि स्वस्वापत्येषु समाद्रियध्वे तर्हि नूनमत्रामुत्र च श्रेयः भूयः भवेत्। भगवन्नामधृत्या अत्र दारिद्र्यमेव फलति, न पुनरन्यदित्यपि कामं भवतु। भिक्षाचर्ययाऽपि कुक्षिपूरणं कामं युक्तम्। सर्वथाऽपि स्वरूपविरुद्धनामकरणं तु हेयं विगेयमेव। नरकनाशकभगवन्नामकरणमेव नरकबाधानिवारणक्षमं पित्रोः इति स्वादिष्ठमुपदिशति सूरिवरः षष्ठदशके।

श्रीबदरिकाश्रममार्गे विराजमानं देवप्रयागक्षेत्रमेव कण्डमेन्नुम् कडिनगरमिति द्राविड्या व्यपदिश्यत इत्याहुः आर्यवृद्धा। श्रीखण्डक्षेत्रमिति वा श्रीगण्डक्षेत्रमिति वा संस्कृतनाम भवितुमर्हति। क्षेत्रेऽस्मिन् पुरुषोत्तम नाम्ना भगवान् भागीरथीतीरे दिव्यदर्शनप्रदानेन भक्तान् प्रहर्षयति। अत्र अलकनन्दाभागीरथ्योः सङ्गमः भवति। तदेतत् दिव्यक्षेत्रं सप्तमदशके स्तूयते।

अष्टमनवमदशमदशकेषु श्रीरङ्गक्षेत्रमभिष्टूयते। सान्दीपनिपुत्रानयनवैदिक-पुत्रानयनाद्यतिमानुषचेष्टितानि संधानेन भगवान् श्रीरङ्गनाथः अनुभूयते अष्टमदशके।

पुरा रामावतारकाले भरतविभीषणादिभक्तवर्गे यो वात्सल्यभरः पक्षपातातिशयश्च प्रदर्शितः तमद्यापि अर्चावतारेऽपि अत्र सन्दर्शयन् दुष्टवर्गनिर्मूलनमतितरां कुर्वन् गजेन्द्रापिन्नवारणविचक्षणहेतिराजधारी संसारव्याधिहारी च स भगवान् देवदेवः श्रीरङ्गधाम्नि संसेवनीय इत्यभिधीयते नवमदशके।

जगति सर्वेषामपि संसारिणां शरीरवियोगसमये यमकिङ्करबाधा बलवती भवतीति प्रसिद्धम् । तदनुचिन्त्य दूयमानः सूरिवरः पटुतरकरणत्वावस्थायामस्यामेव श्रीरङ्गनाथ भगवन् । ते सर्वविधं कैङ्कर्यं करवाणि । एतत्सर्वं भवान् स्वकीयचित्ते निदधानस्सन् यथाऽहं न परितापभाग्भवेयं तथा नाम करोत्विति, प्रार्थयते दशमदशके ।

पञ्चमं शतकमिति व्यपदेशमात्रम् । चत्वार्योवदशकान्यवतीर्णानि । पञ्चमशतके प्रथमदशकम् अतिविलक्षणमवतीर्णम् । विष्णुचित्तसूरिवरस्य आर्तिरेव दशकात्मना परिणतेति सुवचम् । भो अप्रमेयगुणगणमहोदधे भगवन् । विधिशिवसनकादीनामपि ध्यातुमत्यन्तदूरं त्वाम् अतिमलिनवचनस्सोऽहं नैव स्तोतुं प्रभवामि । तथापि मदीया रसना त्वदन्यं न कमपि वेदेति हेतुना प्रणतपरतन्त्रो भवानेव अगत्या स्तोतव्यतां भजति । वाचिकदोषाणां क्षन्तव्यता ते किमु वक्तव्या ? अन्नवसनादिक्षुद्रफललिप्सया भवन्तमुपसर्पन्तो भक्ता अपि बहवः स्युः । नाहं तेष्वन्यतमोमन्तव्यः । भगवन् । नाहं क्षुद्रफलप्रेप्सुः । यद्यपि प्रकृतिमण्डलेऽस्मिन् निवासपर्यन्तं क्षुद्राणाम् अन्नवस्त्रादीनामपि अपेक्षणीयता काममस्ति नाम । तथापि एतदर्थं भवत्सकाशे प्रार्थनमनावश्यकं भगो । अयं किङ्करो जन इति गौरवेण तत्र ते ते प्रदद्युर्नाम तानि तानि भृशमशनवसनादीनि । अतः तदपेक्षणमप्रसक्तम् । केवलमनन्यप्रयोजनकैङ्कर्यमेव कामये । तत् परमकृपयां वितरेति विविधभगवद्वैभवप्रशंसनपूर्वकं प्रार्थयते विष्णुचित्तसूरिवरः प्रथमदशके ।

दि्वतीयदशके अस्य मुनेः विष्णुचित्त इति यन्नाम प्रथते तत् स्वस्यैव समुचितमिति प्रख्यापयति । भगवान् वैकुण्ठनाथः स्वीया महीन्द्रशय्यां क्षीराब्धिं स्वप्रेयसीमिन्द्रिरां च अविजहदेव स्थावरजङ्गमरूपसर्वपरिवारसमेतस्सन् शङ्खचक्रगदासिशार्ङ्गवैनतेयादिभिः स्थानरक्षाव्यसनिभिः अभिरक्ष्यमाणः समागत्य ममैव हृदये स्थावरप्रतिष्ठामवाप । इतः पूर्वं मम वपुषि सानन्दं स्थितवतां पापव्याधिदुःखराशीनाम् इतः परमत्र क्षणमपि अवस्थातुम् अवकाशः नैव मनागपि । हे पापव्याधिदुःखबृन्दानि । क्षिप्रमयसरत । युष्माकमिह स्थलं क्षीणमभूत् । मम हृदयस्य स्थितिः अधुना पूर्ववन्नैव । अपि तु प्रबलतमं रक्षणं प्राप्य, अखिलहेयप्रतिभटमभवन् मम हृदयमिदम् । तस्मात् युष्माकम् इतस्सरभसं पलायनमेव शरणमिति सानन्दमुदीरयति सूरिवरः द्वितीयदशके ।

तृतीयदशके श्रीवनाद्रिनाथसन्निधौ स्वकैङ्कर्याभिनिवेशविज्ञापनं क्रियते । श्रीसुन्दरभुजस्य भगवत्सविधे विलक्षणः शास्त्रार्थश्च प्रकटीक्रियते । स्वामिन्

सर्वशेषिन् श्रीकाननाद्रीश भगवन् । त्वत्पादारविन्दैकप्रवणहृदयोऽहं भवता न रक्षितोऽस्मीति यदि कुत्रचिदन्यत्र दास्यं कर्तुं मनसाऽपि वा विचिन्तयेयम्, तच्चिन्तनमात्रमपि हि ते महत्तरमवद्यं साधयेत त्वमेव मे शेषी कैङ्कर्यप्रतिसम्बन्धी नान्यः कोऽपि। अविरतं त्वया ममैव चित्तमधिष्ठेयम् इति प्रार्थयते सूरिवरः तृतीयदशके।

चतुर्थदशके श्रीविष्णुचित्तसूरिः स्वाभिलषितब्रह्मानन्दावाप्तिं प्रथयन् स्वकीयमिमं दिव्यप्रबन्धं च निगमयति। स्वात्मनः स्वात्मीयसमस्तवस्तुजातानां च भगवद्दिव्यदेह इत्यङ्कितत्वसम्पादनेन निर्दग्धाशेषपापराशिकत्वं समुन्मिषितसुमहत्तरज्ञानसम्पत्तिकत्वं च कथयित्वा दिव्यानन्दामृतजलधि निमग्नहृदयो भूत्वा स्वप्रबन्धं च समापितवान्।

**आण्डाल्चरितम् :**

*कर्कटे पूर्वफल्गुण्यां तुलसीकाननोद्भवाम्।*
*पाण्ड्ये विश्वंभरां गोदां वन्दे श्रीरङ्गनायकीम्।।*

*आषाढे पूर्वपक्षे च चतुर्थ्यां भौमवासरे।*
*मध्याह्ने पूर्वफल्गुण्यां तुलालग्ने शुभे दिने।*
*लक्ष्म्यंशाल्लोकरक्षार्थं गोदा भूम्यां ततोऽजनि।।*

*''नीलातुङ्गस्तनगिरितटीसुप्तमुद्बोध्य कृष्णं*
*पारार्थ्यं स्वं श्रुतिशतशिरस्सिद्धमध्यापयन्ती।*
*स्वोच्छिष्टायां स्रजिनिगलितं या बलात्कृत्य भुङ्क्ते*
*गोदा तस्यै नम इदमिदं भूय एवास्तु भूयः।।*

शूडिक्कोडुत्तनाच्चियार्, गोदादेवी, विष्णुचित्तकन्या,श्रीरङ्गराजमहिषी, भूदेव्यंशदेवी, कान्तमणी, रमासपत्नी, दिव्यमहिषी, नवमाता, तुलसीमालजाता, आमुक्तमाल्यदा इत्यादीनि नामान्तराणि।

पूर्वं त्रेतायुगे विदेहदेशे मिथिलापुर्यां जनकचक्रवर्तिनः यज्ञशालाक्षेत्रे यथा वैदेहीवपुषा श्रीः उदियाय, तथैव कलियुगे पाण्ड्यमण्डलान्तर्गते श्रीधन्विनव्यनगरे श्रीविष्णुचित्तमुनेः तुलसीवनभूमौ अजनि। आषाडमासे शुक्लपक्षे चतुर्थ्यां भौमवासरे मध्याह्ने पूर्वफल्गुनीनक्षत्रे तुलालग्ने लक्ष्म्यंशात् लोकरक्षार्थं भूम्यां गोदा अजनि। तां बालां वीक्ष्य आश्चर्येण सन्तुष्टाः विष्णुचित्ताः अनपत्याय स्वस्मै परमकारुणिकेन भगवता प्रदत्तां तां दुहितरं भावयन् गोदेति नाम तस्याः निर्णीतवन्तः। राजर्षिः जनकः पूर्वं

सीतां यथा पुपोष तथा पुत्रिकावात्सल्येन विष्णुचित्तः गोदा पुपोष। प्रेमपूर्वकं पित्रा लालिता पोषिता आनन्ददायिनी बालिका गोदा ववृधे। गोदाजननमारभ्य धन्विनव्यपूरं अधिकश्रिया रराज। बाल्यात्प्रभृति सुस्निग्धा सदाचारसमाश्रया गोदा वैराग्यज्ञानभक्तीनां सीमाभूमिः बभूव। पित्रा पञ्चसंस्काराः अवाप्य, भगवत्परा पञ्चमोपायनिष्ठैका बभूव। दुहितुः ज्ञानभक्त्यादिसद्गुणान् वीक्ष्य, सन्तुष्टः विस्मयंगतः विष्णुचित्तः।

पित्रोः परमानन्दसन्दोहदायिनी गोदा आ शैशवात् अच्युते अप्रच्युतभक्तिभूमा तस्यैव पत्नीभावं स्वस्मिन्नध्यवस्यन्ती, तस्य विष्णोः वैभवमेव विपुलं विचिन्तयन्ती व्याहरन्ती विलिखन्ती च विवर्धते स्म। जनकः श्रीमान् विष्णुचित्तः प्रत्यहं वटपत्रशायिभगवते समर्पयितुं पुष्पमालां सज्जीकृत्य, कण्डोले निधाय कार्यान्तरपरः स्यात्। तदात्वे सा गोदा दिव्याम्बरदिव्याभरणभूषिता सती तामेव पुष्पमालां स्वकीयचिकुरप्रकरे रहसि बिभ्रतः भगवतोऽहमनुरूपा मनोहरा च किमुवर्ते इति स्वात्मानं परीक्षमाणा, पुनः पितुः उपस्थानादर्वागेव तां पुष्पमालिकां चिकुरबन्धात् उद्वास्य तस्मिन्नेव कण्डोले यथायथं विनिदधति नित्यम् एवमाचरन्ती, अविदितैः तत्समाचारेण पित्रा समर्पितया तयैव स्रजा भगवन्तम् अमन्दानन्दकन्दलित-स्वान्तमाकलयन्ती चावर्तत।

एवमपगच्छति बहुतिथे काले एकस्मिन् दिने यथावत् पुष्पमालां सन्नाह्य, कार्यवशात् बहिर्गतः विष्णुचित्तः सहसा प्रतिनिवर्तमानः दुहितुः चिकुरप्रकरे विन्यस्तां तां स्रजम् अवलोक्य, आः। कीदृशमिदमपचरितम् ? इति अवसीदन्, अमर्षपरवशश्च सन्, साध्वि, नैवंविधं कर्म कर्तुमर्हति भवती। मनसाऽपि चिन्तयितुमयोग्यमिदं कर्म भवती कथं कर्मणाऽपि कलयति। एवं नित्यशः कलयन्ती वर्तसे किम् ? हा बत। मामपि अपचारगर्ते निपातितवत्यसि खलु, दुःसहमिदं मे दुःखं त्वया कृतम् इत्यादिकमभिधाय मा स्म तावदितः परमेवं कार्षीः इति च शिक्षयित्वा, तस्मिन् दिने भगवत्सन्निधौ पुष्पसमर्पणमकुर्वाणः कैङ्कर्यविच्छेदविषादाभिभूतः तूष्णीकः आसीत्।

तस्यां रात्र्यां वटपत्रशयो हरिः भट्टनाथस्य स्वप्ने प्रसन्नः सन्, भट्टनाथमुद्दिश्य एवमब्रवीत् - भट्टनाथ अद्य किमर्थं पुष्पमालिकाः न दत्ताः मद्भक्तिशालिना भवता मह्यं नित्यं प्रदात्र्या इति। तद्वचनं श्रुत्वा विष्णुचित्तार्याः अस्मिन् दिने मम पुत्र्या

पुष्पमालिकाः धृताः । अतः मया भवते न प्रदत्ताः इत्युक्तवन्तः । तद्वचः निशम्य भगवान् तया धृताः सुगन्धाः मालाः एव मम अतिप्रियाः, तया धृतपूर्वाः मालिकाः एव मम सम्यगर्पय इत्यब्रवीत् । ततः स्वप्नात् समुत्थाय विस्मयः विष्णुचित्तः गोदां भूमिजां वैदेहीमिव महालक्ष्मीति मत्वा, भक्तितः गोदायां सुमहत्प्रावण्यं चक्रे । आमुक्तमालिकाः विष्णवे गोदया अर्पिताः । अतः आमुक्तमाल्यदा इति नाम तस्याः सिद्धम् ।

गोदादेवी विष्णुकैंकर्यनिरता, विमलज्ञानसम्पदा, असदृशलावण्या साक्षाल्लक्ष्मीरिव ज्ञानभक्त्यादिसद्गुणैः दिव्यगन्धयुत श्रीतुलसीव आसीत् । तस्याः ज्ञानभकत्यादयः गुणाः दशभ्यः दिव्यसूरिभ्यः अधिकं ववृधिरे । पुसः पुरुषप्रेम, योषितः स्त्रीप्रीतिः या सा महायत्नसाधिता अधिरोहेन निम्नोन्नता । योषितः पुरुषप्रेम, पुरुषस्य स्त्रीप्रीतिः उन्नतात् निम्नपतनं सुकरम् । अत एव गोदायाः भगवत्प्रीतिः परमाधिका । गोपिकानां कृष्णप्रीतिः नन्दादिभ्यः अधिका खलु । विष्णोः पुरुषेभ्यः स्त्रीणां प्रीतिः भविष्यति इति वेदव्यासेन उक्तं खलु । श्रीकृष्णविरहात् गोपिकाः सन्ततं यथा तप्यन्ति, तथा भगवत्परा गोदा अतप्यत । हेमन्तऋतौ मार्गशिरमासे नन्दव्रजकुमारिकाः भगवन्निवेदितप्रसादं मात्रमेव भुञ्जानाः कात्यायन्र्चनव्रतम् आचरितवत्यः । एवं गोदा भगवत्प्रेमपारगा श्रीमद्भागवतस्थितं तत्त्वार्थं सम्यगनुभूय, तमेवार्थं समुद्धृत्य लोकसंरक्षणाय सर्वलोकामृतप्रदं प्रबन्धद्वितयं चक्रे । द्वयोः दिव्यप्रबन्धयोः त्रिसप्तत्यधिकं शतम् पाशुराणि सन्ति । लक्ष्मीगीतिः नाम नाच्चियार्तिरुमोलि दिव्यप्रबन्धे त्रिचत्वारिशदधिकं शतं पाशुराणि सन्ति । द्वितीये श्रीगीतिः नाम तिरुप्पावैदिव्यप्रबन्धे त्रिशतिपाशुराणि सन्ति । सः प्रबन्धः धनुर्मासोत्सवपरः ।

सद्गुणोपेतां, यौवनारंभपेशलां, अनिर्देश्यवयोरूपां अतुल्यहरिभक्तिकां साध्वीं दुहितरं दृष्ट्वा, महामतिः विष्णुचित्तः पुत्रीं गोदां कस्मै देयम् इत्यचिन्तयत् । पतिसंयोगसुलभं वयो दृष्ट्वैव मे पिता "चिन्तार्णवगतः पारं नाससादाप्लवो यथा ।" इति सीतया उक्तरीत्या जनकमहाराजः यथा चिन्तितवान् तथा विष्णुचित्तोऽपि अचिन्तयत् । व्यकुलान्तःकरणं पितरं विलोक्य, हरिप्रिया गोदादेवी भगवन्तं विना अन्यं पतिरूपेण नाङ्गीकरिष्यामि, मा शोकं कुरु, हरिः एव मम रक्षकः इति शुभं वाक्यं व्याजहार । तस्याः वचनं श्रुत्वा सन्तुष्टः विष्णुचित्तः गोदादेवीं स्नेहभरितहष्ट्या विलोक्य, जगतीतले अष्टोत्तरशतं विष्णोः स्थानानि सन्ति । तेषु स्थितं हरिं वीक्ष्य,

वाञ्छितप्रदं भवदभिमतं विष्णुं वृणीष्व । भूम्यां पुराणप्रसिद्धानि विष्णुस्थानानि प्रवक्ष्यामि सादरं शृणु । योगीन्द्रैः प्रबन्धे, प्रतिपादितानि मुख्यानि अष्टोत्तरशतम् । पाण्ड्यदेशे अष्टादशास्थलानि । केरलदेशे चतुर्दशदिव्यदेशाः । चोलदेशस्थलानि द्विचत्वारिंशत् । तुण्डीरमण्डले त्रयोविंशति दिव्यदेशाः । उदीच्यां दिशि एकादशदिव्यस्थलानि । एतेषु अष्टोत्तरशतस्थानेषु भक्तानुग्रहकारणात् आस्थितानां भगवतां सौन्दर्यसौकुमार्यादीन् अनुपमान् बहून् गुणान्, अद्भुतान् दिव्यान् प्रभावान् वक्ष्यामि शृणु । इत्येवं पितृवात्सल्यात् भट्टनाथः अष्टोत्तरशतस्थानेषु स्थितस्य परमात्मनः प्रभावं क्रमशः विस्तारेण गोदायै सम्यक् न्यवेदयत् । एतेषु अष्टोत्तरशतदिव्यदेशेषु अर्चारूपिणो हरेः भूलोकवैभवं ये शृण्वन्ति, जानन्ति, स्मरन्ति तेषां मुक्तिः करे स्थिता । विष्णोः दिव्यस्थालानां माहात्म्यं विष्णुचित्ते विवृण्वति, मधुराधीशस्य कृष्णस्य चरितं शृण्वती गोदादेव्याः शरीरे उदारपुलकाङ्कुरमुवाह । वेङ्कटाधिपतेः विष्णोः कथाश्रवणसमये तस्याः मुखे विकासोऽभूत् । श्रीमतो श्रीरङ्गराजस्य महिमोदयं शृण्वती अरविन्ददळेक्षणा गोदादेवी अमन्दमानन्दमधत्ता एवं सर्वत्र हरेः वैभवं भट्टनाथमुखात् निशम्य, गोदा अमितानन्दमवाप्तवती ।

अनन्तरं श्रीरङ्गेशादयः देवाः अष्टोत्तरशतस्थानस्थिताः अर्चारूपिणः विष्णुमूर्तयः सर्वोऽपि भट्टनाथेन संस्तुताः स्वकीयदिव्यलावण्ययौवनागद्यभिसंयुताः धन्विमङ्गलमागताः । ततः तान् सर्वान् विलोक्य गोदादेवी तन्मध्ये महौजसं सुमहात्मानं सुन्दरवरं श्रीरङ्गराजं वरयामास । ततः भट्टनाथेन भगवन्मूर्तयः सर्वेऽपि सम्पूजिताः सम्प्रेषिताः स्वं स्वं स्थानं प्रपेदिरे । पुरुषाणामपि दृष्टिचित्तापहारकैः अनिर्देश्यवयोरूपविभ्रमौदार्यसुस्मितैः गोदां मोहयित्वा श्रीरङ्गेशः श्रीरङ्गमभ्यगात् । रङ्गेशागमनाभावत् विरहातुरा सा गोदा रङ्गेशलग्नहृदया दिवानिशं अतप्यत ।

गोपिकाः श्रीकृष्णविरहात् भूरिशः यथा अतप्यन्त तथा श्रीरङ्गेशबद्धहृदया गोदा नियतमानसा जितनिद्रा जिताहारा राधिका इव समास्थिता । रङ्गेशविरहेणैव अहर्निशं संतप्तां दुहितरं वीक्ष्य पिता विष्णुचित्तोऽपि अतप्यत । भगवान् रङ्गेशः गोदायाः सदृशः पतिः । इदं महत्कार्यं श्रीरङ्गेशगोदयोः कल्याणं कार्यं कथं घटते ? ब्रह्मेशसनकादीनां योगिनामपि अगोचरः, वेदान्तवेद्यः परात्परः श्रीमन्नरायाणः अनन्तकोटिब्रह्मण्डनायकः श्रियःपतिः कुत्र ? क्षुद्रः दरिद्रः दुर्मानी आरामकारकः अत्यन्तपापिष्ठः अहं कुत्र ? एतत् महत्कार्यं कथं वा घटते ? मम सुता गोदा समीचीनतरं वरं अकामयत । तयोः गोदाश्रीरङ्गेश्वरयोः वैवाहिकं कार्यं कथं साध्यमिति चिन्तापरः

प्रव्याकुलान्तःकरणः भट्टनाथः तमेव शरणं गत्वा अकृतभोजनः सुष्वाप। भट्टनाथस्य स्वप्ने प्रसन्नः रङ्गराजः श्वशुर, सर्वज्ञः त्वं किमर्थं परितप्यसि ? भवत्पुत्रीं गोदां समादाय अद्य महता वैभवेन श्रीरङ्गं समायाहि। सर्वेषां पश्यतां भवत्पुत्रीं गोदां शीघ्रं अहमेव पाणिग्रहणमङ्गलं करिष्यामि इति शुभं वाक्यं व्याजहार। ततः स्वप्नात् समुत्थाय सविस्मयः भट्टनाथः दुहित्रे स्वप्नवृत्तान्तं सर्वं सम्यक् निवेद्य, सुतां लालयन् निर्भरः स्थितः अतिप्रियतमं सत्यं पितुर्वचनं श्रुत्वा गोददेवी भगवत्प्रीत्यै उत्तमं धनुर्मासव्रतम् अकरोत्। हेमन्तऋतौ प्रथमे मार्गशिरमासे नन्दव्रजकुमारिकाः हविः भुंजानाः कात्ययनीव्रतमाचरितवत्यः। तथैव भगवत्परा गोदा धनुर्मासव्रतं चकार। सुन्दरवरं हरिं स्वगृहे प्रतिष्ठाप्य सा रङ्गेशं पूजयामास ब्राह्मे मुहूर्ते चोत्थाय रङ्ग रङ्गेति भाषिणी स्नात्वा, शुक्लाम्बरधरा, ऊर्ध्वपुण्डधरा गोदा पीताम्बरेण भूषणैः रङ्गेशं समलङ्कृत्य गन्धैः पुष्पैः धूपैः दीपैः नीराजनेश्च सम्यक् सम्पूज्य अत्यन्तभक्तितः नैवेद्यं विष्णवे समर्प्य, कर्पूरताम्बूलं अनन्तरं नीराजन च दत्वा, मनोहरं अत्यन्तभक्तितः पाशुरमेकं द्राविडभाषायां विरच्य, पूजाते, समर्प्य नीराजनं ददौ। ततः प्रदक्षिणं कृत्वा, तं रङ्गेशं प्रणिपत्य, कृताञ्जलिपुटा निश्चला भक्त्या श्रीरङ्गनाथ। त्वां विना अन्यं न जानामि। सत्यं वच्मि नमोऽस्तु ते इति उत्तमं स्वमनोभीष्टं प्रार्थयामास। भगवत्प्रीतये अनिशं तदीयाराधनं चक्रे। नियतव्रता गोदा नैवेद्यं हविष्यं एकवारं भुक्त्वा, दृढभक्तियुता, भुवि शयाना, ब्रह्मचारिणी रङ्गेशलग्नहृदया राधिकेव समास्थिता। एतत् उत्तमं व्रतं मासमेकं चरितवा त्रिशंत् गाथायुतं दिव्यप्रबन्धं विदधे।

व्रतसमाप्तिदिने श्रीरङ्गनायकः गोदादेव्याः स्वप्ने प्रसन्नः मन्दस्मितमुखः गोदे अनेन स्तोत्रेण परितुष्टोऽस्मि। शुभमस्तु। धनुर्मासि कृतेन विशेषेण अर्चनेन सन्तुष्टोऽस्मि। त्वत्पाणिग्रहणं शीघ्रं करिष्यामि। न संशयः इत्युक्त्वा गोदायै सर्वभोगांश्च प्रददौ। यस्मिन् दिने श्रीगोदा सर्वभोगान् बुभुजे ततः तस्य दिवसस्य भोगीति नाम सिद्धम्। तं दिनं गोदाकल्याणदिनमिति आहुः। बन्धुभिः सह सादरं मङ्गलस्नानं विधाय सर्वभोगसमृद्धये गोदाकल्याणमहोत्सवं कारयेत्। भोगिदिवसम् अभोगं यः करोति सः मूढधीः। सः नरः भुवि नित्यं अभोगवान् स्यात्। गोदारङ्गेशकल्याणं स्वगृहे ये कुर्वन्ति तेषां नित्यकल्याणं भविष्यति। निश्चयमेतत्। गोदाकल्याणवासरे ये कल्याणं प्रकुर्वन्ति ते सर्वदा कल्याणसहिताः भवेयुः श्रीभोगिदिवसे ये गोदारङ्गेशयोः सम्यक्विवाहं कुर्वन्ति ते अनिशं भुवि संपन्नः भवेयुः। ये महात्मनः सेवन्ते ते भुवि सदा श्रीमन्तः एव।

गोदादेव्या समारधितः श्रीरङ्गेशः स्वप्ने गोदां प्रति शुभं वाक्यं यदुक्तवान् तत् सर्वं विष्णुचित्ताय निवेदितवती। महत्कर्णामृतं तद्वचनं श्रुत्वा विस्मितः सः अतिप्रहृष्टः कृतत्वरः श्रीधन्विपुरनाथाय विष्णवे सर्वं विज्ञाप्य, ततः सर्वेभ्यः श्रीवैष्णवेभ्यः न्यवेदयत् । ''अनन्या राघवेणाहं भास्करेण प्रभा यथा'' इति सीतेव रङ्गेश्वरं विना नान्यमकामयत मे सुतेति भट्टनाथः सकलैः मङ्गलैः वाद्यैः छत्रचामरैः नवरत्नखचितश्रेष्ठां शिबिकां गोदां समारोप्य पीताम्बरेण संछाद्य महता वैभवेन, राज्ञा वल्लभेन, तत्रत्यैः सकलैः जनैः भेरीमृदङ्गनादैः जयशब्दैश्च सादरं श्रीरङ्गं प्रतस्थे । धन्विमङ्गलमारभ्य श्रीरङ्गं समन्ततः सुपुष्पकायमानैः निवासस्थानमण्टपैः तन्मार्गे अलङ्कारं प्रचक्रिरे। तेन रङ्गमार्गः वैकुण्ठमार्गवदभवत्। श्रीरङ्गनाथः विष्णुचित्तसुतां गोदां कथं करोतीति द्रष्टुकामाः विस्मयाविष्टमानसाः चोलपाण्ड्यादिजनाः सर्वेऽपि श्रीरङ्गं जग्मुः । गोदाविवाहदिदृक्षुभिः जनैः आपूरितं श्रीरङ्गनगरं नित्यमुक्तसमाकीर्णं वैकुण्ठनगरमिवं रराज ।

पित्रा, नृपतिना, चतुरङ्गबलेन सार्थं गोदादेवी निचुलानगरं प्राप । गोदायाः आगमनवृत्तान्तं श्रीरङ्गाधिकारिणः सर्वे रङ्गेशाय विज्ञापनं चक्रुः । तेन वाक्येन सन्तुष्टः श्रीरङ्गराजः श्रीरङ्गमलंकृत्य, विष्णुचित्तसुतां गोदां विष्णुचित्तादिभिः सह महता वैभवेन मदन्तिकमानयध्वमित्यवोचत् । श्रीरङ्गराजस्य आज्ञया प्राकारसप्तकमलङ्कृतम् ।

शुभे मुहूर्ते सुदिने सुनक्षत्रे सुलग्ने मङ्गलस्नानं विधाय, सर्वाभूषणभूषिता श्रीहरिप्रिया रङ्गेशपाणिग्रहणत्वरया कृताञ्जलिपुटा भक्त्या श्रीरङ्गनाथमेव चिन्तयन् शिबिकारूढा श्रीगोदा (वैष्णवैः कृतमङ्गला) महता वैभवेन निचुलानगरात् श्रीरङ्गं प्रतस्थे । गोदागमनसूचकः सुमहान् काहलरवः तद्यशस्सूचकः अग्रे अश्रावि । भगवत्परान् दिव्यप्रबन्धान् पठन्तः अन्योऽन्यबद्धहस्ताः श्रीवैष्णवाः अग्रे निर्ययुः । सर्वालङ्कारसहितं रत्नकम्बलरञ्जितम् अनेकधण्टासहितं भद्रगयद्वयं सर्वालङ्कारसंयुतम् अश्वयुगं, निर्जितामरसुन्दर्यः, वाराङ्गनाः निर्मलाः चित्रवसनाः सर्वालङ्कारशोभिताः गायन्त्यः, प्रनृत्यन्तः, सम्यक् शैलूषशिक्षिताः जनान् मोहयन्त्यः गोदायाः पुरतः ययुः । गोदादेव्याः पार्श्वद्वये भट्टनाथवल्लभौ विरेजतुः । शतशोऽथ सहस्रशः वेत्रहस्ताः प्रदृश्यन्ते । शिबिकायाः चतुर्दिक्षु वेदाध्ययनपराः स्वस्तिवाचनं कुर्वन्तः, सङ्कीर्तनपराः मधुरस्वराः ब्राह्मणाः, गाननिर्जितगन्धर्वाः भगवताः ययौ। ततः वाचामगोचरेण वैभवेन गोदादेवी सप्तप्राकारशोभितं श्रीरङ्गनगरं विवेश। विचित्रतोरणवती विचित्रध्वजमालिनी विचित्राचित्रदीपाली चित्रवीधी विराजते। गोदादेवी सप्तप्राकाराणां प्रदक्षिणमकरोत् । गोदादर्शनकौतुकाः उन्नतसौधारूढाः स्त्रियः

गोदायाः शिबिकोपरि पुष्पवर्षाणि ववर्षुः तदुत्सवादिदृक्षवः जनाः सौधानि गोपुराणि प्राकारान् मण्डपान् आरुह्य स्थिताः। जनसंपूर्ण तत्सर्व महाद्भुतमदृश्यत।

एवं आवरणसप्तकं प्रदक्षिणं कृत्वा गोदादेवी श्रीमच्छन्तनुमण्टपं आससाद, तस्मिन् मण्टपे उत्सवमूर्तिः सुन्दरवरः श्रीरङ्गनाथः मङ्गलस्नानं विधाय सर्वालङ्कारशोभितः पुण्याहवाचनम् , अङ्कुरार्पणं च कृत्वा, वेदवेदान्तपारगैः विधिज्ञैः ब्राह्मणैः साकं त्रयस्त्रिंशत्कोटिसुरैः ब्रह्मरुद्रादिभिः सह गोदायाः आगमनमाकाङ्क्षन् शन्तनुमण्डपे तस्थौ। आगतां गोदां वीक्ष्य हर्षितः श्रीरङ्गेशः सुमुहूर्ते सुलग्ने द्विजदेवाग्नि त्रिधौ गोदादेव्याः पाणिग्रहणं चकार। विधिज्ञैः विप्रसत्तमैः शेषहोमान्त विवाहं यथाशास्त्रं निर्वर्त्य, विप्राशीः कृतमङ्गलः श्रीसुन्दरवरः अतुलं प्रहर्षं प्राप। श्रीरङ्गेशपाणिग्रहणात् परमहर्षिता गोदा शेषतल्पे शयानं रङ्गेशं सेवितुं शन्तनुमण्टपात् सुमुहूर्ते विनिर्गत्य अन्तःपुरं प्रविश्य प्राञ्जलिभूत्वा, श्रीरङ्गशायिनः प्रदक्षिणं विधाय, सहसा शेषतल्पे शयानं श्रीरङ्गशायिनः लावण्यं दृष्ट्वा, दृष्ट्वा, सम्यक् अनुभूय अनुभूय , शेषतल्पं समारुह्य, तत्पादाब्जसमीपगा सर्वेषां पश्यतां आदृश्यत । तत् दृष्ट्वा विष्णुचित्तः, वल्लभश्च सर्वेऽपि आश्चर्यम् अतुलं विस्मयं ययुः। भगवान् श्रीरङ्गनाथः गोदादेवीमङ्गीकृत्य, विष्णुचित्तं समाहूत्य सर्वेषां शृण्वतां एवमुवाच - भट्टनाथ। समुद्रराजवत् भवान् अद्य मे श्वशुररोऽसि इति ततः तीर्थं, प्रसादं, मालां, शठकोपं च सादरमर्चकैः श्वसुराय दाचायित्वा, हाटकमयं द्विपटं आच्छाद्य यथापूर्वं धन्विमङ्गले वटपत्रयानाय प्रतिवासरं पुष्पश्रीतुलसीमालाकैङ्कर्य कुर्वन् सुखमास्वेत्युक्त्वा भट्टनाथार्य प्रास्थापयत्। भट्टनाथः नित्यं श्रीमन्नारायणपादाग्विन्दलग्नमनस्कः, भक्त्या सुनन्दरतुलसी-पुष्पमालाः विष्णवे अर्पयन् श्रीधन्विनव्ये पुरे आसीत्। ततः गोदायाः श्रीरङ्गनाथालये अष्टमावरणे आलयःनिर्मितः । प्राकारगोपुरयुतं मण्टपैः उपशोभितं नित्योत्सवादिसहितं वर्धयामास। तदारभ्य अष्टोत्तरस्थानेषु शिलालोहादिरूपेण गोदादेव्याः मूर्तयः पृथिवीतले आविर्बभूवुः। स्वावतारस्थलत्वेन धन्विनगरं महद्भवति। समस्तसन्मङ्गलपूर्णपात्रं गोदाचरितं भक्तियुताः ये शृण्वन्ति ते सततं सन्मङ्गलाः भवेयुः।

**तिरुप्पावै**

हंसविभूषितकेदाराढ्यश्रीधन्विनव्यनगरावतीर्णा श्रीमती गोदा श्रीरङ्गनाथाय सुप्रशस्तानि श्रीव्रतप्रबन्धपद्यानि अतिमधुरं गेयानि समार्पिपत्। पुष्पमालिकां च स्वचिकुरबन्ध धृतां प्रददौ। भो हृदय। तां सङ्कीर्तय।

भगवते स्वचिकुरविधृतमाल्यसमर्पणसञ्जातौज्वल्यशालिनि । कनकलतिके । श्रीव्रतप्रबन्धप्रणयनप्रकाशितकारुण्यवैभवे । गोदे । श्रीवेङ्कटपतेः माधवस्य अनन्यार्हशेषत्वं प्रार्थितवत्या भवत्याः श्रीसूक्तिषु निष्ठा मम संविधेहि ।

मार्गशीर्षमासोऽयम् । पक्षश्च चन्द्रमसा परिपूर्णः भो भो दिव्यभूषणाद्याः समृद्धिसमेतव्रजवासिन्यः । सम्पन्नबालिकाः । स्नातुमाजिगमिषवः कामागच्छत । तीक्ष्णशूलायुधेन कठोरकर्मकर्तुः नन्दगोपस्य सूनुः सुभगदृशो यशोदायाः बालसिंहः कालमेघनिभतनुः पुण्डरीकाक्षः सूर्यचन्द्रोपममुखशाली नारायण एव अस्माकमेव पुरुषार्थं प्रदास्यति । भूमण्डलस्थाः सर्वेऽपि यथा श्लाघेरन् तथा नाम मार्गशीर्षव्रतेऽस्मिन् अवगाढा भवेम ।

अयि भो भूमण्डले समुज्जीवन्त्यो जनताः । अस्माभिः अस्मदीयव्रतसाद्गुण्यार्थमनुष्टेयाः क्रियाः शृणुत । क्षीराब्धौ सावधानं शयानस्य परमपुरुषस्य पादौ सङ्कीर्तयेम । घृतं दुग्धं च न पिबेम । प्रत्यूषे स्नानमाचरेम । दृशोरञ्जनाञ्चनं शिरसि पुष्पधारणं च वर्जयेम । पूर्वैः अनाचरितानि कृत्यानि नाचरेम । अवाच्यानि कटुवचनानि न वदेम । सत्पात्रेषु दीनेषु च देयां भिक्षां यथाशक्ति वितरेम । उज्जीवनोपायविचिन्तनेन सन्तृप्येम ।

आकाशसीमान्तमभिव्याप्य लोकान् विक्रान्तवतः उत्तमपुरुषस्य दिव्यनामानि वयं सङ्कीर्त्य, अस्मदीयव्रतापदेशेन यदि स्नानमाचरेम, तर्हि सर्वेष्वपि देशेषु ईतिबाधागन्धमन्तरेण प्रतिमासं त्रिःवृष्टिः स्यन्देत । आकाशान्तमभिव्याप्य, वर्धमानानां शालिसख्यानामन्तराले शफराः सोल्लासं विहरेयुः । विकसितेषु कुवलयकुसुमेषु रमणीयाः द्विरेफा निद्रासुखमनुभवेयुः । गोष्ठं प्रविश्य तत्र सधैर्यमुपविश्य, धेनूनां पीनस्तनाकर्षणमात्रेण परमौदार्यशालिन्यः ता महत्यो गावो दुग्धपूरेण कुम्भान् पूरयेयुः । एवं नाम सततमविच्छिन्नसम्पदुल्लासो भवेत् ।

अयि भो गम्भीर ! वृष्टिनिर्वाहकपर्जन्यदेव ! स्वकीयमौदार्य मनागपि मा स्म वितथं कार्षीः । त्वया कर्तव्यं कृत्यं किमिति चेत् ? अर्णवान्तरवगाह्य तत्रत्यं तोयमुपादाय गर्जनमाकलय्य, व्योमाङ्गणमधिरुह्य, कालोपलक्षितसकलपदार्थ-कारणभूतसर्वेश्वरविग्रहसावर्ण्यमवाप्य, मथुरमणीयभुजशालिनः तस्यैव भगवतः पद्मनाभस्य बाह्यग्रस्थितसुदर्शनवत् विभासुरो भूत्वा, पाञ्चजन्यवत् विपुलं घोषमुद्भाव्य, शार्ङ्प्रसूतशरवर्षवत् सलिलधारा अविलम्बं समुत्पादय जगति सर्वोज्जीवनकृते अस्माकं सानन्दं मार्गशीर्षावगाहनकृते च ।

अत्याश्चर्यैकनिलयम् अविच्छिन्नभगवत्सम्बन्धास्पदमधुरापुराधिनाथम् परमपवित्रमहापयः पूरभरितयमुनानदीविहाररसिकं गोकुलसमुद्भूतमङ्गलदीपं जननी-जठरप्रख्यापनपटीयासं च दामोदरं यदि वयं परिशुद्धास्सत्यः समीचीनानि पुष्पाणि समर्प्य प्रणम्य वाचा सङ्कीर्त्य मनसा विचिन्तयेम। तर्हि पूर्वाघान्युत्तराघानि च वाह्निक्षिप्ततूलवत् क्षणेन प्रणस्थेयुः। अतः तमेव सङ्कीर्तयेम।

अयि बालिके पक्षिणोऽपि कललं वितेनुः। पक्षिराजमन्दिरादुद्गतं शुद्धशङ्खस्य महान्तं ध्वनिमपि किं न शृणोषि ? समुत्तिष्ठभोः पूतनायाः विषदिग्धं स्तनं पीतवन्तं, कृत्रिमशक्टं चरणाघातेन शिथिलीकृतवन्तं, पूतन्तं पयोनिधौ भोगिभोगशयनीय-मधिशयानं च बीजभूतं भगवन्तं हृदि निदधाना मुनयः योगिनश्च शनैः उत्थाय हरिर्हरिरिति यत्कीर्तयन्ति तद्ध्वनिविशेषोऽपि हृदयकुहरं प्रविश्य शिशिरयति।

अयि भो मुग्धबालिके अस्मद्गोष्ठीनायकरत्नभूते सर्वत्र संमिलितानां भरद्वाजपक्षिणां कीशुकीशु इति वासितं कुर्वतां भाषणध्वनिं किं न शृणोषि ? सुरभिचिकुरप्रकाराणां जात्युचितभूषणालङ्कृतहस्तानां दधिमथनप्रवृत्तानां गोपीनां घलघलात्कारयुक्तमथनध्वनिं च किं नु नाकर्णयसि ? भगवतो नारायणस्य केशवस्य कीर्तनेन प्रवर्तमाने सत्यपि तदाकर्णनपरवशा सती किं ननु निद्रां कलयसि ? अयि तेजस्विनि गोपिके समुद्घाटय।

प्राच्यां दिशि सूर्यप्रकाशतः शौक्ल्यादर्शनात् प्रभातसमय उदित इत्यवगम्यते। तुहिनशिशिरघासजग्धिनिमित्तं महिष्यो विनिर्गताः व्रतस्नानार्थं प्रस्थितानां वल्लवीनां गच्छन्तीनां भूयसीनां गमनं प्रतिषिध्य त्वामाकारयितुम् आगताः स्मः वयम्, केशिहन्तारं चणूरमुष्टिकाख्यमल्लवधविशारदं च देवाधिदेवं यदि वयं गत्वा सेवेमहि तर्हि सः भगवान् हा हेति स्वनिर्वेदं प्रकाश्य कुशलप्रश्नादि कुर्यात्। तद्वयं गच्छेम। आयातुमुत्तिष्ट हे कुतूहलवति गोपिके।

अत्यन्तदीप्तियुक्तमणिगणप्रचुरे रम्ये हर्म्ये समन्ततश्च दीपाज्वालाभिरामे दिव्यागरुसौगन्ध्यसम्भृते दिव्यशयनीये शयाने हे मातुलपुत्रि। दिव्यकवाटिका-मुद्घाटयेथाः इत्युक्त्वा प्रतिवचनालाभेन अथ तस्या मातरमुद्दिश्याह - भगवति मातुलानि तां ते दुहितरं प्रतिबोधयेथाः। किं नु ते तनया वाग्व्यवहारयोग्यता विकला। किमाहो बाधिर्यभरिता ? उताहो तन्द्रासमृद्धा ? किं हेममयदिव्यशय्यायां मन्त्रबद्धाभूत्। महामायो माधवो वैकुण्ठ इत्यादीनि भगवद्दिव्यनामानि बहूनि सङ्कीर्त्य समुद्बोधयैनाम्।

व्रतानुष्ठानं परिसमाप्य परमानन्दानुभवं कुर्वाणे ! कृतकृत्ये भो सखि ! माभून्नामकवाटोद्घाटनम्, किमहो वाचा उद्घाटनमपि दुष्करम् ? सुरभितुलसी-स्रगलङ्कृतमकुटेन, अस्मादृशामपि जनानां स्तुत्या प्रसन्नतामवाप्य काङ्क्षितं प्रयच्छता परमपुण्यात्मना च भगवता नारायणेन पुरा कदाचित् मृत्युमुखं प्रापितः कुंभकर्णोऽपि पराजितो भूत्वा स्वकीयामपि महानिद्रां किं तुभ्यमेव प्रायच्छत् ? अत्यन्तं तन्द्रापरवशे। उत्तमाभरणभूते भो गोपिके । सुप्रसन्नतया समागत्य कवाटमुद्घाटय ।

सवत्सगोगणानां बहूनां दोहनं कुर्वताम्, शत्रुविक्रमविनाशनार्थं रणभूमिं प्रविश्य युद्धं निर्वहतां निरवद्यगन्धानां च गोपालानां कुले सौवर्णलतानिर्विशेषं समुत्पन्ने ! वल्मीकान्तःप्रविष्टफणिनिभकृशताभासुरमध्यप्रदेशशलिनि ! स्वस्थानविहार-रसिकमयूरीसदृशि सम्पत्समृद्धे हे गोपके ! समायाहि । बान्धवजनेषु सखीजनेषु च सर्वेषु सङ्घीभूय त्वद्गृहाङ्गणे नीलमेघनिभस्य भगवतो नामान गायत्सु सत्स्वपि हन्त त्वं शरीरस्पन्दमपि अकुर्वती वाचमपि अनुद्घाटयन्ती कुतो नु निद्रामनुभवसि ?

बालवत्सवती महिषी वत्समनुचिन्त्य दयमानहृदया वत्सस्सन्निहित इति भावनाप्रकर्षेण ध्यायन्ती सती स्तनमार्गेण प्रसूतपयस्का यस्य भवनमखिलं जम्बाल-सङ्कुलमाकलयति तस्य महत्तरसम्पदाढ्यस्य अनुजे हिमधारासिक्तमस्तका वयं त्वदीयगृहद्वारवर्तिपटलदण्डिकामवलम्ब्य क्रोधवैभवेन विध्वस्तलङ्केश्वरं मनोऽभिरामं गायन्त्यो वर्तामहे । अथापि त्वं किमपि प्रतिवचनमपि न ददासि हन्त । इतः परमपि वा समुत्तिष्ठभोः हन्त । केयं महती निद्रा त्वद्भवनद्वारि वयमवसीदाम इत्ययमंशः सर्वजनविदितो ह्यभूत् ।

अयि कमलकुसुमनिषण्णभ्रमरोपमेयलोचने ! प्रतिमोपमेये ! बकासुरवक्त्र-विदारणकारिणः दुष्टराक्षसेश्वरमवलीलया विनाशितवतश्च भगवतः कीर्तिं गायन्त्यो गत्वा सर्वा अपि गोपालाबालिकाः व्रतानुष्ठानस्थलीं प्रविशन् । शुक्र उदैत् गुरुस्तमैत् । पक्षिणश्च प्रणेदुः । प्रत्यूषे सुशिशिरजलाशयविगाहनमकृत्वा हन्त कुतश्शयाननासि ? परमसात्त्विकः खलु कालोऽयम् । प्रत्येकानुभवरूपं चौर्यमुत्सृज्य अस्माभिः सर्वाभिः सह मिलित्वा अनुभवितुमागाच्छ भोः ।

पुरस्तादेवाहमुत्थाय युष्मान् प्रबोधयेयमिति कृतप्रतिज्ञे देवि । युष्मदीय-निष्कुटोद्यानस्थवापिकायां कल्हाराणि विकसितान्यभूवन् । काषायाम्बरधारिणः शुभ्रदन्तपङ्क्तयस्तापसाः स्वकीयदेवालयसमुद्घाटनाय कुञ्चिका हस्ताः प्रयान्ति ।

अयि निर्लज्जे । हे वाग्वैभवशालिनि । शङ्खचक्रधरदिव्यपाणितलं पङ्कजविलोचनं भगवन्तं कीर्तयितुमुत्तिष्ठ तावत् ।

अयि शुकशाबोपमेये गोपिके । किमद्यापि निद्रासि ? हन्त किमेतत् (इति बहिः गोप्यः कथयन्ति) अयि भो पूर्णा गोप्यः । मा नाम कोपहेतुशब्दप्रयोगं कुरुत इयमहमागच्छामि (इति अन्तर्गोपी कथयति) त्वं तावदतीव कठिना । त्वदुक्तिकाठिन्यं चिरादेव वयं विद्मः (इति अन्तर्गोपी) क्षिप्रं समायाहि । त्वं पार्थक्येन किमनुभवसि ? (इति बहिर्गोप्यः) कठिना नाहम्, यूयमेव (अथवा) अहमेव भवानि (इति अन्तर्गोपी) सर्वाश्च गोप्यः किं ननु सङ्गता (इति अन्तर्गोपी) सङ्गाता एव सर्वाः । त्वं बहिरागत्य ताः परिगणय । कंसं प्रेरितपरुषवेतण्डदण्डनपण्डितं वैरिव्रातसमूलोन्मूलनविचक्षणम् आश्चर्यचर्यानिरतं च कृष्णं गायेम । (इति बहि र्गोप्यः)

नायकतया स्थितस्य नन्दगोपस्य भवनद्वारपालक भोः । पताकालङ्कृत-तोरणद्वारपालक भोः रत्नमयकवाटबन्धुमुन्मोचयेथाः । गोपालबालिकानामस्माकं आश्चर्यचेष्टितो मणिनिभगात्रो भगवान् पूर्वेद्युरेवास्मदपेक्षितपुरुषार्थप्रदानं प्रतिश्रुतवान् । तस्य शयनादुत्थापनगाथानां कीर्तनार्थम् इह वयं परमपावन्यः समागताः स्मः । स्वामिन् । परोपकारार्थया वाचा प्रप्रथममस्माकं प्रतिरोधं मा स्म कार्षीः । भगवति प्रेमबन्धबन्धुरं कवाटं कृपया समुद्घाटयतु भवान् ।

वासस एव पानीयस्यैव ओदनस्यैव दानं धर्मबुद्ध्या कुर्वाण भो नन्दगोपालप्रभो समुत्तिष्ठ । कृशोदरीणां ललनानां मध्ये समुत्तुङ्गे कुलदीपिके स्वामिनि यशोदे ! जागृहि नभोरन्ध्रनिर्यत्समुत्तुङ्गपादाब्जविक्रान्तभुवनदेवाधिदेव ! निद्रां विसृज्य समुत्तिष्ठ सकलसम्पत्कन्दभूतदिव्यभूषाढ्यपादारविन्द भगवन् बलभद्र स्वानुजेन सह भवान् जागर्तु ।

मदजलस्रुतियुक्तमातङ्गसम्पन्नस्य (अथवा) मत्तमातङ्गजैत्रस्य (यद्वा) मत्तमातङ्गोपमेयस्य सुमहित भुजबलशालिनश्च नन्दगोपस्य स्नुषे । नीलादेवि सौगन्ध्यसम्भृतचिकुरबन्धे । कवाटबन्धमुन्मोचयेथाः । कुक्कुटास्तावत् सर्वत्र प्रसृमराः कूजन्ति । माधवीततिनिषण्णाः कोकिलगणाश्च असकृत् निजकण्ठनादं प्रदर्शयन्ति । अयि कन्दुकाञ्चितपाणितले नीले । युष्मद्वल्लभवैभवसङ्कीर्तनार्थमस्मानन्तः प्रवशयितुं सौवर्णकरवलयततिनिनदेन सह समागत्य, सरसिजोपमेयपाणितलेन सानन्दं समुद्घाट्य कवाटिकाम् ।

पञ्चमुखप्रदीपज्वालायां ज्वलन्त्याम् दन्तिदन्तनिर्मितचरणविशिष्टखट्वायां सुकुमारतरं पञ्चशयनमधिरुह्य समुत्फुल्लकसुमस्तबकालङ्कृतकेशपाशाञ्चित-नीलादेवीस्तनतटीसंश्लेषविकस्वरवक्षस्स्थल भोः कृष्ण वाचमपि न ददासि हन्त अयि अञ्जनाञ्चितपथुनयने नीले। त्वं तावदात्मनो वल्लभं क्षणमात्रमपि शयनादुत्थितं न सहसे। न कथञ्चिदपि तद्विश्लेषं च सहसे। सत्यं बलवती तव निर्घृणता।

त्रयस्त्रिंशदमराणां पुरस्तादुपेत्य पदीयविविधविपदपोहनप्रगल्भ ! भगवन् ! शयनादुत्तिष्ठ आर्जवगुणनिधे महाबलाढ्य रिपूणां भयज्वरप्रदायक ! विमल ! स्वामिन् ! जागृहि ! सौवर्णकलशसच्छायपयोधरे ! बिम्बाफलप्रतिमाधरे तनुमध्ये ! हे श्रीः ! नीलादेवि ! तल्पादुत्तिष्ठ। उत्थाय व्यजनमुकुरादिव्रतोपकरणप्रदानपूर्वकम् अस्मान् त्वद्वल्लभेन सह संयोज्य अस्मदीयं स्नानव्रतं समापयेथाः।

दोहनकाले दुग्धधारणार्थं गृहीतेषु भाण्डेषु क्षणमात्रे प्रपूर्णं पयः यथा हि ऊर्ध्वमुज्जृम्भेत तथा निरन्तरपयः प्रवाहप्रसवित्रीणामौदार्यशालिनीनां भूयसीनां गवां स्वामिनो नन्दगोपस्य नन्दन भोः प्रबुध्यस्व। दृढप्रमाणभूतनित्यापौरुषेय वेदप्रतिपाद्य (अथवा) आश्रितजनसंरक्षणश्रद्धालो परब्रह्मभूत ! जगति प्रादुर्भूततेजःपुञ्जमय शयनादुत्तिष्ठ। अरातयः पराजिताः भूत्वा यथा स्वात्मधारणान्यथानुपपत्त्या भवदीयभवनाङ्गणं प्राप्य, भवत्पादारविन्दसेवानिरता भवन्ति तथा वयमपि भवद्गुणपराजितास्सत्य इह समागताः त्वां स्तुमः।

विपुले पृथिवीमण्डले विरचितसाम्राज्यनिर्वाहा भूमिपाला भग्नाभिमानाः सन्तः समागत्य भवदीयसिंहासनपरिसरे यथा सङ्घशः अवतिष्ठन्ते, तथा वयमपि स्त्रीत्वाभिमानं विहाय त्वत्परिसरं प्राप्तवत्यः स्मः। अर्धविकसितसरसीरुहवत् तव नयने किमहो अस्मासु मन्दं मन्दं प्रसरं न करिष्यतः ? चन्द्रसूर्ययोः युगपदुदयवत् विलोचने उभे अपि विष्फार्य यद्यस्मान् कटाक्षयेथाः तर्हि वयं विहतशापा भवेम।

हे अतसीकुसुमसवर्ण ! वर्षासु गिरिगह्वरे गाढनिद्रावैवश्येन शयानः प्रकृत्या समुत्तुङ्गः कण्ठीरवः प्रबुध्य, वह्निकणान् विकिरन्निव चक्षुर्द्वन्द्वं विष्फार्य सुरभिसटापटलं विकसितमाकल्य्य, अवयवांश्च सर्वथा परिस्पन्द्य तन्द्राविसर्जनं च विरचय्य, गभीरतरगर्जनोपबृम्हणपूर्वकं यथा हि गह्वरात् निस्सरति, भगवान् ! तथा नाम त्वं गर्भगुहात् बहिः निष्क्रम्य, आस्थानमण्डपमागत्य रमणीयसन्निवेशं लोकोत्तरं सिंहासनमधिष्ठाय अथ विचारय तावदस्मदागमनप्रयोजनम्।

पुरा जगतीतलमिदं विक्रान्तवन् भगवन् ! तव चरणारविन्दयोः मङ्गलम् आशास्महे ! तत्र गत्वा लङ्कां विध्वस्तवन् ! तव विक्रमो जयतु विजयताम् शकटं पादघातेन धूलिसात्कृतवन् । तव कीर्तिः जयत् विजयताम् । कपित्थासुरहन-नसाधनीकृतं वत्सासुरमुच्चैः क्षिप्तवान् । तव पादो जयतु विजयताम् । गोवर्धनाद्रिं छत्रतया समुद्धृतवन् तव गुणप्रथा जयतु विजयताम् । वैरिव्रातविमर्दनक्षमः तव करस्थः जैत्रो हेतिराजो जयतु विजयताम् - इत्येवमेवं तवैव यशांसि सङ्कीर्त्य पुरुषार्थं लब्धुम् अद्य वयमत्रागताः स्मः । भगवन् दयेथाः ।

कस्याश्चन भाग्यशालिन्याः पुत्रत्वेन निशि जनित्वा, तस्यामेव निशि अपरस्याः भाग्यशालिन्याः पुत्रत्वेन निगूढं विवर्धमाने स्वस्मिन् असहिष्णुता भूम्नादुरितं हृदि चिन्तितवतः कंसस्य अभिसन्धिं विपर्यस्तमारचय्य तस्य जठरे जातवेदः समानतया स्थित सर्वेश्वर महाप्रेमशालिन् । अस्मदपेक्षितंपुरुषार्थ-प्रदानसमुत्सुको यदि त्वमसि, शृणु तावत् । वयं त्वामेव काङ्क्षन्त्यः समागताः स्मः । त्वदीयं लक्ष्म्यानुरुपात्कं प्रभावं विक्रमं च वयं गायन्त्यः सत्यो वीतविषादा महानन्दभरिताश्च भवामः ।

अयि भो व्यामुग्ध । मणिसवर्ण भगवन् मार्गशीर्षावगाहनमिति उत्तमपुरुषैः आचर्यमाणः कृत्यविशेषोऽस्ति । तदर्थम् उपयुक्तान् अंशान् विज्ञापयामः शृणु तावत् । कृत्स्नभूमण्डलकम्पप्रदनिनदशालिदुग्धसवर्णत्वत्पञ्चजन्यसदृशान् शङ्खान्, अतिबृहत्तमाश्च भेरीः, मङ्गलाशासननिरतान् माङ्गलिकप्रदीपं पताकां वितानं च स्वामिन् वटदलशयन भगवन् अनुगृहाण ।

विमुखजनवशीकरणविचक्षणगुणशालिन् ! गोविन्द ! भवत्सङ्कीर्तनात्मकं परमपुरुषार्थमुपलभ्य, अथ च भवत्सकाशादस्माभिः लब्धव्यं पारितोषिकं चाद्य पार्थयामहे । कृत्स्नजगतीतलप्रशंसनार्हया समीच्या पद्धत्या पारितोषिकप्राप्तिरस्तु नः । करवलयकेयूरकर्णभूषणकर्णपुष्पपादकटकप्रभृतीनि भूयांसि आभरणानि लभेमहि । पीताम्बराणि च परिदधीमहि । तदनुघृतसमृद्धिभरितं दुग्धान्नं कपोणिस्त्रुतियोग्यं भुञ्जीमहि । त्वया सहसमवेतानामस्माकमेवं नाम परमशिशिरो भोगः सम्पद्यताम् ।

सर्वदा परिपूर्णभगवन् गोविन्द । वयं तावत् गवां पृष्ठतो गत्वा काननमासाद्य भोजनशीलाः । ज्ञानगन्धवैदेशिके गोकुले अस्मत्सजातीयतया त्वं यदजनिष्ठाः, एवं विधं परमसुकृतं हि वयं प्राप्तवत्यः । भो स्वामिन् । त्वया साकमस्माकं वर्तमानं

बान्धवम् इह त्वया च अस्माभिश्च न विनाशयितुं शक्यम् । ज्ञानदरिद्राभिः बालिशाभिः अस्माभिः प्रेमवशात् यदसि त्वं लघिष्ठेन नाम्ना आहूतः, तत्र भोः कोपं मा कुरु । प्रदेहि नः पुरुषार्थं कृपया ।

भगवन् गोविन्द ! प्रत्यूषे अत्र समागत्य, त्वां संसेव्य, त्वदीयहैमपादारविन्द-मङ्गलाशासनं यद्वयं कुर्मः तत्प्रयोजनमाकर्णय भोः । गोचारणेन जीवतां कुले सञ्जातस्त्वम् अस्मत्सकाशात् कैङ्कर्यम् अवश्यमेव स्वीकर्तुमर्हसि । पुरुषार्थलाभो अस्माकम् अस्मिन्नेव दिने न पर्यवसितो भवति । यावदात्मभावि सर्वेष्वपि च जन्मसु त्वया साकमविनाभूता वर्तेमही । तवैव ऐकान्तिकनित्यकिङ्कर्यो भूयास्म । अन्यथा अभिसन्धीन् नः प्रशमय ॥

नौकापरीतम् अथवा वीचिमालासङ्कुलं पयोनिधिं मथितवन्तं माधवं केशवं भगवन्तं तुहिनकिरणसदृशवदनाः सकलाभरणसमलङ्कृता गोप्यः प्रणिपत्य पुरा पुरुषार्थमलभन्त इत्यमुं विषयमधिकृत्य, जगदाभरणभूतश्रीधन्विनव्यपुराधीशस्य नलिनाक्षमालाविभूषितवक्षसश्च श्रीभट्टनाथमुनेः अभिमानपात्रभूतया गोदया कीर्तिता भागवतैः बृन्दशः अनुभाव्या द्राविडवाङ्मयी त्रिशतमिमा गाथा अस्खालित्येन क्षितितल इह भावबन्धेन सह ये वा तदधीयते पृथुतरशिखरिनिभद्वियुगभुजशालिनः पद्माक्षस्य सौम्यमुखस्य लक्ष्मीपतेः दिव्यकरुणाम् अत्रामुत्र च समासाद्य ब्रह्मानन्दशालिनो विराजेरन् इति फलकीर्तनेन समापितः अयं दिव्यप्रबन्धः औपनिषदसकलार्थसम्भृतः ।

**नाच्चियार् तिरुमोलि :**

श्रीविष्णुचित्तदिव्यसूर्यात्मजा गोदादेवी स्वकीयानुभवपरीवाहरूपं भक्तजन-भागधेयपरीपाकात्मकं च दिव्यप्रबन्धद्वितयं प्रणिनाय । तत्र द्वितीये प्रबन्धे नाच्चियार् तिरुमोळि इति ग्रन्थे त्रिचत्वारिंशदुत्तरशतपाशुराणि सन्ति । चतुर्दशदशकानि सन्ति । एकैकमपि दशकं एकैकमपि पाशुरं च सर्वथाऽपि रसघनतां बिभर्ति । पुरुषोत्तमं भगवन्तं स्त्रीरत्नान्येव सम्यगनुभोक्तुं प्रभवन्ति । श्रीपराङ्कुशपरकालादयोऽपि दिव्यसूरय मध्ये मध्ये स्त्रीभावनामधिगत्य स्त्रीवाचैव भगवदनुभवं परमविलक्षणं प्रचक्रिरे । स्वयं स्त्रीरत्नत्वेन समुत्पन्नायाः अस्याः गोदादेव्याः तादृगारोपिताकार-धारणमनपेक्षितं खलु । अत एव एतस्याः अनुभवः स्वतः परमशोभनः प्रथते ।

अत्र च दिव्यप्रबन्धे प्रथमदशके गोदादिवी नन्दनन्दनादितरस्य कस्यापि

मानुषस्य पतित्वेन प्रस्तावमपि असहमानां श्रीरङ्गनाथात्मना अवतीर्णः स एव स्वस्य पतिर्भवितुमर्हतीति आशंसमाना तादृशं स्वकीयं सिद्धान्तं सम्यक् आविष्कृत्य, मन्मथदेवे प्रपत्तिं प्रयुङ्क्ते । न केवलं मन्मथमेव प्रपद्यते, सपरिकरस्य तस्य प्रपदनमविलम्बेन कार्यसाधकं भवितुमलमिति मन्वानाः तस्युनुजमपि प्रपद्यते । आशायाः उत्पादकः मन्मथ एवेति लौकिकी प्रसिद्धिः । भगवद्विषयिण्याः आशायाः अपि स एव उत्पादको भवितुमर्हतीति गोदादेव्याः प्रतिपत्तिः । उत्पादकः स एव तस्याः आशायाः फलेग्रहित्वमपि प्रजनयितुं प्रभवतीति तत्प्रदनम् अत्र निबध्यते । पुरा गोपीभिः कृतस्य व्रताचरणस्यैव अनुकारः यथा तिरुप्पावै नाम्नि पूर्वप्रबन्धे अभूत् तथा ताभिः कृतस्यैव कामप्रपदनस्यापि अत्रानुकरणमिति सुवचम् । अनुकारमात्रमिति न । स्वानुष्ठानरूपं च भवतीति विशेषः ।

द्वितीये दशके गोपीकृष्णसंवादविशेषमेकं निबध्नाति गोदा । गोपीतादात्म्य भावनया दशकमिदं निबन्ध्यत । कृष्णसंश्लेषैकरसिकाः गोप्यः कदाचित् तत्संश्लेष-सुखमलभमानाः प्रणयरोषभूम्ना अन्यपरतां प्रदर्शयितुम् इच्छन्त्यः सिकतासु कृत्रिमसद्मनिर्माणात्मके विहरणविशेषे प्रावर्तन्त । ताभिः प्रदर्शितं वैमुख्यं सैकतसद्मनिर्माणप्रवृत्तिरूपत्वेन कीर्तितम् । स्वयमागते कृष्णे आभिमुख्यमप्रकाश्य, कार्यान्तरपरताविष्करणेन वैमुख्यं प्रकाशितवत्यः गोप्यः । तडिडमसहमानः कृष्णकिशोरः कथमिमाः कन्यकाः मया सह विहरणे अभिरुचिं विहाय 116 आन्यपर्यमभिनयन्ति ? इति रुषित इव सहसा सन्द कृष्टो भूत्वा, ताभिः निर्मीयमाणानि सैकतसद्मानि स्वावघातेन शिथिलयितुमुपचक्रमे । वाक्यविन्यासैः शृङ्गारचेष्टिताचरणैश्च तासामन्यपरतां निवर्तयितुं प्रायतत । येन केनापि प्रकारेण मिथो. वाग्विवादप्रपञ्चनं कृष्णस्य गोपीनां च भृशमभिसंहितम् । गोप्यः सविनयं सानुनयं च प्रार्थयन्ते स्म । तदिदं तद्भावभावनया अस्मिन् दशके प्रतिपादयति गोदादेवी ।

तृतीये दशके गोपुीवस्त्रापहरणकथाविशेषः चारुतरं निबध्यते । गोप्यः कृष्णवियोगतापशान्त्यै शिशिरे सलिले विगाहनं कामयमानाः प्रत्यूषे समुत्थाय यामुनं कमपि ह्रदं प्रति जग्मुः कृष्णोऽपि तासां प्रवृत्तीः तदा तदा सद्वारकमद्वारकं च अवगच्छत्येव खलु । अधुनैवं प्रययुः इमाः स्ननानार्थमिति जानन् सः गृहे अवस्थातुमशक्नुवन् निगूढमनुव्रजन् तस्यैव ह्रदस्य तीरं प्राप्य, तरुमूले आसीत् । गोप्यश्च यथा समुदाचारं वसननानि आभरणानि च उद्वास्य, कूले निधाय स्नानक्रीडातत्परा आसन् । तदात्वे कृष्णः तानि वासांसि भूषणानि च गूढं हृत्वा,

कूलस्थकुन्दशाखिनः शीर्षमधिरुह्य विटपे निषसाद तैस्स्वयं भूषितदिव्यगात्रः । अथ समापितस्नाना वल्लव्यः स्थानेषु वस्त्रादिकमनवेक्षमाणाः कथमिदं गतम् ? केन वा हृतमिति संभ्रान्तचित्ताः दिक्षु विदिक्षु च दृशं दिशन्त्यः अन्ततः ददृशुः अनोकहे नन्दनन्दनं परमानन्दसनन्दीहसन्दायकदिव्यमङ्गलविग्रहं वासोभिः भूषाभिश्च विलक्षणं शोभां दधानम् ।

प्रयासशतैरपि वा चेलानामार्जनमत्यावश्यकम् । अतः वृक्षस्थितः स भगवान् कृष्णकिशोर एव प्रार्थनीय इति निश्चयन्वन्ति स्म । सदुपायज्ञाः ताः एवमूचुः भगवन् ! मानधना हि वयं वनिताः । सर्वा वयं सखीहस्तसंवलितहस्ताः सत्यो रचिताञ्जलयो भवेम । प्रसीद भगवन् ! प्रदेहि नो वासांसि इति । अथ करुणावरुणालयः सः भगवान् कृष्णः प्रसन्नहृदयः वासांसि वितिताार । ईदृशं क्रीडितविशेषमाचष्टे गोदादेवी अनेन मधुरललितदशकेन ।

विरहिजनानां दैवप्रश्नविधानेन कालयापनमिति, काचित्प्रक्रिया अस्ति । दैवप्रश्नविधानं नाम त्रैकालिक ज्ञानयुक्तं देवताविशेषम् अथवा दैवाविष्टं व्यक्तिविशेषं सम्बोध्य मदीयः पतिः क्षिप्रमागच्छेद्वा ? इत्यनुयोगकरणम् । दैवतस्य दैवाविष्टव्यक्तिविशेषस्य वा अलाभे तु धरातले स्वयमेव सुबहूनि रेखाङ्कनविन्यसनानि कृत्वा, अथ तासां रेखाणां युग्मशः संख्याने कृते यदि एकानवशेषेण युग्ममेव समाप्नोति तर्हि पत्या सह स्वस्य युग्मभावः सिद्ध इति मत्वा संतोषानुभवः । यदि तु पूर्वोक्तसंख्याने एकमेवावशिष्यते, तर्हि, संयोगो न स्यादावयोः एकाकितयैव अवस्थानमवर्जनीयम् इति मत्वा शोकानुभवः इति काचन पद्धतिरस्ति । इयं तु प्रक्रिया द्राविड्यां कूडलिळैत्तलं इति नाम्ना व्यपदिश्यते । मनोविनोदनार्थम् ईदृशं व्यापारविशेषं पुरा गोप्यः चक्रुः इति तदनुकारः अस्मिन् चतुर्थे दशके गोदादेव्या क्रियते । अनुकारमात्रं न, स्वनुभवरूपता च अत्र सुममृद्धत । श्रीरङ्गक्षेत्राधीशः, श्रीवनाद्रिनाथः, श्रीवेङ्कटाचलपतिः, श्रीकृष्णपुराधिनाथः, कालियदर्पहन्ता, कुवलयापीडाख्यमत्त-वारणमदनिवारणः, यमलार्जुनभञ्जनः, कंसहन्ता, शिशुपालशिरच्छेत्ता, द्वारकापतिः वसुदेवसूनुः, यशोदात्मजः यदि अधुना मदन्तिकमागच्छेत् तर्हि तत्सूचनं कलय भो समागमपिशुनदैवत इति कथनेन तत्सङ्गमकुतूहलं स्वकीयम् अतिमात्रम् आविष्कृतवती गोपीजनतादात्म्यापत्तिधन्या गोदादेवी अस्मिन् चतुर्थे दशके ।

पञ्चमं दशकं कोकिलप्रार्थनात्मकं निबध्यते । गोदादेवी स्वकीयोद्याने कोकिलादिपक्षिगणानभिवर्धयति भगवद्गुणाद्युपदेशतः । तथा अभिवर्धितेषु पक्षिषु

अन्यतमं मधुरवाचं रमणीयतनुं परभृतशाबं सम्बोध्य यथा सरभसमत्र समागच्छेत् मन्नाथः श्रीवेङ्कटाद्रीशः श्रीरामचन्द्रः गरुडध्वजः लोकविक्रान्तचरणः श्रीधन्विनव्यनगराधीशः शङ्खचक्रपाणिः क्षीरसागरशायी शीर्ङ्गधन्वा नारायणः तथा त्वं कुरु मधुरं कूजितम् । एवं तर्हि त्वयि भृशमहं कृतज्ञा स्याम् । मया वर्धमानेन शुकशाबेन सह ते सख्यं च संविदध्याम् । यद्येवं मत्प्रार्थनानुसारेण न करोषि तर्हि त्वामुद्यानादुद्वासयेयम् । त्वदीयकूजितेन भगवानत्रागतश्चेत् अथ तस्मिन् यद्यदहं कुर्यां तदवलोकनं च ते परमप्रयोजनं भविष्यति, परमधार्मिकत्वं च ते सेत्स्यति इत्यादिकम् अतिमधुररमणीयमुक्तवती गोदा ।

षष्ठदशके पाणिग्रहणसिन्नाहतः प्रभृतिशेषहोमावसानमङ्गलस्नानपर्यन्तां चर्यां स्वुप्नतः अनुभूतवती गोदा प्रभाते स्वसखी सविधे सर्वं तत् सुविशदमभिदधे इति निबद्धम् । सप्तमे दशके स्वप्नमात्रविश्रान्तः सः समभूदिति जागरणानन्तरं महतः मनःखेदस्य सम्भावितत्वेन तथा नाम खेदमतिशयितमापद्यमाना गोदां हा हन्त दैवेनाहं सुबहु विप्रलब्धा ह्यभूवम् । स्वप्नानुभवमात्रं हि सर्वं व्यतीतम् । एतादृशे विप्रलम्भे वा विदग्धः स भगवान् । अस्तु तावत् । किमेवमेव स सर्वानपि वञ्चयति ? उत यं कमपि वा जनं पारमार्थिकानुभवप्रदानेन प्रहर्षयति इति हृदि पर्यालोचयन्ती तस्य वामपाणितले नित्यनिवासी परमभाग्यसन्दोहमयः पाञ्चजन्यः निरन्तरं तदीयदिव्याधरामृतास्वादनेन निर्विशतीति निध्यायन्ती, तदीयम् अप्रतिम-भाग्यपरिपाकमधिकृत्य, एकतः सम्प्रहृष्यन्ती, अन्यतश्च अभ्यसूयन्ती भूशं तमेव शङ्खम् अनारतमचिन्तयत् । भावनाप्रकर्षस्तु तमिमं पाञ्चजन्यं पुरतः प्रत्यभासयत् । तथा प्रतित्रासमानं तं सबोध्य उच्चावचभाषितैः आत्मीयामसूयां च प्रख्यापयति गोदादेवी ।

गोदादेव्याः भगवद्विरहव्यथा क्रमशः अभिववृधे । (विरहिजनानामरुन्तुदो) वर्षाकालश्च समुपनतः । मेघास्तु विद्युद्विलसितस्तनितोपबृंहणादिसनाथा अतिकोमलदर्शना दृष्टिपथातिथी बभवुः । पुरा संश्लिष्य अथ विश्लिष्य गतवता भगवता वर्षासु पुनस्समागमिष्यामि इति यदुक्तमासीत् तद धुना स्मृतिपथमुपयातं गोदायाः । नीलमेघनिभः सोऽपि तैः मेधैः सह समागतस्स्यादिति गोदा समभावयत् । भो मेघाः ! अस्मत्स्वामी च, समागतः कच्चिदिति अप्राक्षीच्च । ते तु न किञ्चिदुत्तरमुदैरिरन् । नापि स भगवान् ददृशे मुकुन्दः । अथ च तेषामेव तोयदानां दूततया प्रेषणं युज्यत इति अध्यवस्यन्ती भोः कथयत मदृशां श्रीवेङ्कटाद्रीशसविधे इति प्रार्थयितुमुपचक्रमे । तदिदमभिधीयते अष्टमे दशके ।

अग्रतः दृष्टिगोचरतां गतान् कालमेघान् संबोध्य यूयं श्रीवेङ्कटाद्रीश भगवदन्तिकं प्राप्य, मामिकां दशां तत्सन्निधौ विज्ञाप्य, तेन सह मां घटयत भो। इति बुहुधा प्रार्थयते स्म गोदा प्राक्तनदशके। एवं नाम प्रार्थितास्ते तु मेधा अस्याः कामनामनिवर्त्य स्वकीयमेव कार्यं सुष्ठु चक्रिरे। सलिलवर्षणं हि स्वकीयं कार्यं मेघनाम्, तदेव ते सम्यगकार्षुः। सद्य एव सुबहूनि पुष्पाणि वर्षाकालोचितानि मुखं दर्शयितुमुपचक्रमिरे। साक्षाद्भागवन्तमेव दिदृक्षमाणायाः तस्याः तददर्शनं तद्दिव्यावयवस्मारकवन्य-कुसुमसन्दर्शनं च महत्यै वेदनायै कल्पते स्म। न केवलं कुसुमानामेव दर्शनमभूत्। वर्षासु ये ये जन्तवः इन्द्रकोपकोकिलकेकिप्रभृतयः इतस्ततः उद्गन्तुमर्हन्ति तेऽपिबहुश उद्गताः। तेषां दर्शनेनापि व्यथा अस्याः ववृधे। तादृशीम् असह्याम् व्यथाम् अस्मिन् नवमे दशके व्याहरति।

नवमे दशके गोदायाः यः निर्वेदः समजनि, सः दशमे दशकेऽपि अनुवर्तते, भृशम् अभिवर्धते च। पुरा दृष्टाश्च सन्दिष्टाश्च ये मेधाः ते घनघनवृष्टिमुत्पाद्य स्वकालोचितानि पुष्पाणि अतिशयेन विकसितानि अकार्षुः। तेषां मध्ये श्रीकृष्णदिव्यमङ्गलविग्रहसच्छायानि अतसीप्रभृतीनि कुसुमानि सान्द्राण्यभूवन्। तदवलोकनं कृष्णविरहव्यथायाः अतिमात्रम् उद्दीपकमभूत्। तानि च दर्शं दर्शम् अतितराम् गोदा कृष्णविग्रहसौन्दर्यसंस्मरणेन उद्विजते। भगवान् श्रीवेङ्कटाद्रीशो अत्र कृपया समागत्य, यदि मां संजीवयेत् तर्हि सद्यो युष्मान् अहमेव समाहूय वः कूजितानि शृणुयाम् इत्येवम् उक्तितितिभिः आत्मीयाम् आर्तिपूर्तिं गोदादेवी दशमे दशके आविष्करोति।

एकादशदशके गोदादेवी स्वसदृशीषु अन्यासु दयितासु भूदेवीजानकी-रुक्मिण्यादिषु भगवता कलितान् अनुग्रहातिशयान् अनुसन्दधाना, तथैव मामपि अनुग्रहीतुम् अर्हः स भगवान् शेषशायी सर्वजगत्पतिः रङ्गनाथः श्रीमान् कथं नु मां निगृण्हातीति रोदितीव मय भर्ता सत्यसन्ध एव। तथापि द्विजिह्वेन भुजङ्गेन तस्य नित्यसहवासस्य सत्त्वात् तद्गतमेव द्विजिह्वत्वं स्वयमपि बत प्राप्तवानिवेति कथयतीव। अथवा आदिशेषो हि चेतनेष्वग्रगण्यः। स तु घटककृत्यमेव कर्तुं क्षमः। तेन सह नित्यं वसन्नपि भगवान् मामुपेक्षत इति विस्मयप्रकाशनाभिप्रायो वा स्यात्। हिरण्याक्षनाम्ना दैत्येन नितां भूदेवीं समुद्धर्तुं वाराहमपि वपुरास्थाय दुर्घटानि कृत्यानि कृतवान्। जानकी विश्लिष्टाऽभूदिति भृशं विह्वलश्च विक्लबश्च सः व्यामुग्धश्चासीत्। शिशुपालेन सह कृतविवाहनिश्चयम् अत्यन्तमवसीदन्ती रुक्मिणीं स्वयं परिग्रहीतुं

दविष्टादपि सः देशान्तरात् सरभसमाधावति स्म । एवमेवं तासु तासु ललनासु प्रेमप्रकर्षपिशुनम् अतिमानुषचेष्टितवर्गं कृतवान् स एष भगवान् तादृशीषु अन्यतमायां मयि भृशमुदासीन इति कथमिदं सह्यतां दुःखमिति विलपति ।

द्वादशदशके मधुरापुरीप्रभृति द्वारकापुरीपर्यन्तं श्रीकृष्णकिशोर-विहरणस्थलानि सर्वाणि प्रोच्य, तत्र तत्र गत्वा, भगवन्तम् अनुभोक्तुं कामयमाना स्वयमेव च गन्तुमशकनुवन्ती गोदादेवी स्वबान्धवानुद्दिश्य तत्र तत्र आत्मानं नेतुं कथयति ।

*एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः ।*
*नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् ॥*

इति श्रुत्वा, सम्प्रति मधुसूदनः मधुरामधिवसतीति मत्वा, तत्र स्वात्मनः प्रापणं प्रार्थयते स्म प्रथमपाशुरेण । मधुरायामवतीर्णोऽपि स भगवान् व्रजं प्रापितोऽभूदिति आकर्ण्य तत्र मां नयत इत्याचक्षे द्वितीयपाशुरेण । धन्यजन्मनो नन्दगोपस्य सदनाङ्गणमधिवसति स दामोदर इति निशम्य तत्र मां नयत इत्याह तृतीयपाशुरेण । नन्दगोपगोहाङ्गणे विहरणं विहाय यमुनारोधसि विहर्तुं गत इति श्रुत्वा तत्र मां नयत इति अवादीत् चतुर्थपाशुरेण । यमुनायाः कस्मिंश्चन ह्रदे अवस्थाय विविधां पीडामुत्पायन्तं कालियं भुजगं दमयितुं गत्वा तत्र कदम्बमहीरुहात् तच्छिरसि निपत्यविचित्रं नृत्तं वितनोतीति विज्ञाय तत्र मां नयतेत्यब्रवीत् पञ्चमपाशुरेण । यमुनातीरात् कृष्णप्रेषितानां क्षुधितानां गोपकुमाराणां प्रार्थनया प्रहृष्टा महर्षिपत्न्यः भक्ष्यभोज्यलेह्यचोष्यादिपरमान्नवर्गपरिपूर्णपात्रहस्ताः सत्यः कृष्णबल-रामान्तिकमागत्य, समाराधयन्तीति निशम्य, भक्तविलोचनमिति प्रथमानं तादृशं स्थलं स्वात्मानं नेतुं प्रार्थयते षष्ठपाशुरेण । प्रलम्बासुरजिघांसया भाण्डीरवटस्थलीं प्रयातेन बलरामेण सह कृष्णोऽपि प्राययाविति विदित्वा, तत्र स्वात्मानं नेतुमयाचत सप्तमपाशुरेण । क्षुधितकुपितसुरपतिसमुत्पादितमहावृष्टिपीडितगोगोपबृन्दपरित्राणाय गोवर्धनाद्रिसमुद्धरणकृत्ये प्रवणः प्रभुः इत्यवगम्य, तत्पर्वतप्रान्तं स्वात्मानं नेतुमर्थयतेस्म अष्टमपाशुरेण । कृष्णः कालयवनभीत इव मथुरापुरीतः अन्यत्र गत्वा, द्वारकापुरीं प्रतिष्ठाप्य स तामधिवसतीति आकर्ण्य तत्र मां नयतेति याचतेऽस्म नवमपाशुरेण । फलकीर्तनपरं दशमपाशुरम् । एवं स्थलविशेषेषु स्वकीयम् अद्वितीयम् अतिमात्रम् अभिनिवेशमाविष्करोति गोदादेवी एकादश दशके ।

द्वादशदशके मथुरादिद्वारकापर्यन्तदिव्यस्थलेषु स्वस्य प्रापणं प्रार्थयामास गोदादेवी । एवं प्रार्थिताः बान्धवाः अमन्यन्त । कृष्णस्तु भगवान् बहुतिथादेव कालात्पूर्वम् अवतारकृत्यानि परिसमाप्य निजं दिव्यं धाम जगाहे । इदानीं मथुरायां व्रजे यमुनातटे द्वारकायां वा किमस्ति । तत्र प्रापणेन किं वा प्रयोजनम् अस्याः भविष्यति ? एतादृशवस्तुतत्त्वप्रकटने कृते सति तु अस्याः अवसादः भूयः भूयः अपि अभिवर्धेत । परं न पुनर्मनागपि हीयेत । अतश्च सेयं गोदा प्रकारान्तरेणैव समाश्वासनीया इति मत्वा च एवम् अयि गोदे । तथैव कामं करिष्यामः । इदानीं तु वर्षकालः खलु । अधुना तत्र प्रयाणं दुश्शकम् । मनागिव सहस्व विलम्बं मुग्धे । परस्तान्नेष्यामः । सम्प्रति तु तदीयगुणगणानुसन्धानेनैव कथंचित् सानन्दमेव कालं क्षिप इति च अन्यदन्यच्च प्राहुः । ततश्च प्रोज्जृम्भमाणविरहव्यथा गोदा यदि मामद्यैव कृष्णसकाशं नेतुं न शक्नुथ यूयं तर्हि तदुपभुक्तवस्तुषु यत्किमपि वा सद्यः समानीय दत्वा मां समाश्वासयत इति प्रार्थयते अनेन त्रयोदश दशकेन ।

प्रश्नोत्तरप्रणालिकया गोदादेव्या स्वानुभवानन्दभूमा सम्प्रकाश्यते अन्तिमे चतुर्दश दशके । परमकारुणिकः भगवान् भक्ताभीष्टप्रपूरकः खलु । भक्तानां स्वानुभवपर्याप्तम् आतिभरम् अभिवर्ध्य अथ परिपूर्णस्वानुभवं प्रयच्छति इति प्रसिद्धिः । तथैव भृशम् अभिवृद्धार्तिभरायाः गोदादेव्याः परमेण प्रेम्ण स्वात्मसन्दर्शनरूपं दिव्यानुभवम् अनुजग्राह सः बृन्दावनधामा कृष्णकिशोरः । तादृशम् अत्यद्भुतानुग्रहं विलक्षणसंवादापदेशेन चरमदशकेन गोदादेवी प्रथयति । इयं गोदादेवी एकैव उभयोः सख्योः भूमिकां परिगृह्य, एकस्याः सख्याः वाचा कृष्णकिशोरोऽत्र किमु दृष्ट इति प्रश्नप्रकटनम्, अथ अन्यस्याः सख्याः गिरा दृष्ट एव स बृन्दावने इति प्रत्युत्तरप्रकटनं च कलयन्ती भगवतो नन्दनन्दनस्य स्वात्मना सुष्ठु संदृष्टतामाविष्कृत्य सानन्दं स्वकीयम् इमं दिव्यप्रबन्धं समापयति ।

**तोण्डरडिप्पोडि आल्वार्चरितम्**

*चोलक्षितौ धनुषि मासि महेन्द्रतारे*
*यः प्रादुरास मुरभिद्वनमालिकांशः ।*
*रङ्गेशकेलिसखमूर्ध्वशिखं द्विजेन्द्रं*
*भक्ताङ्घ्रिरेणुमनघात्मगुणं प्रपद्ये ।।*

*तत्रोदभूद्भागवताद्द्विजेन्द्रो ज्येष्ठाख्यभे मासि च मार्गशीर्षे ।*
*श्रीविप्रनारायणनामधेयो मुरारिवक्षो वनमालिकांशः ।।*

*चोलक्षितौ धनुर्मासे प्रादुरास महेन्द्रभे ।*
*मुरजिद्वनमालांशो मण्डंगुडि पुरे महान् ॥*

*कोदण्डे ज्येष्ठानक्षत्रे मण्डंगुडिपुरोद्भवम् ।*
*चोलोर्व्यां वनमालांशं भक्तवद्रेणुमाश्रये ॥*

*धनुर्मासि शुभे ज्येष्ठाभेऽवतीर्णस्य भूतले ।*
*भक्तांघ्रिरेणोर्महिमा कथ्यते भक्तभुक्तये ॥*

चोलदेशे पुळ्ळम्पूदङ्गुडिनामक दिव्यदेशसन्निकृष्टे मण्डङ्गुडि पुरे धनुर्मासे ज्येष्ठानक्षत्रे श्रीमन्नारायणस्य वक्षोवनमालिकांशेन वेदविशारदानां द्विजोत्तमानां गृहे श्रीविप्रनारायणनाम्ना उदभूत् । श्रीमन्नारायणस्य प्रसादेन सुपुत्रः सञ्जातः इति पिता विप्रनारायणो इति नाम चक्रे । अन्नप्राशनादिभिः संस्कारैः संस्कृतः विप्रनारायणः आचार्यमुखतः अखिलशास्त्राणि साङ्गान् वेदान् जग्राह । पञ्चसंस्कारैः, ज्ञानेन, तिन्नुमन्त्रजपप्रभावेन सञ्जातज्ञानवैराग्यः मतिमान् विप्रनारायणः अकृतोद्वाहः श्रीरङ्गेशदिदृक्षया उभयकावेर्योर्मध्यस्थं, चन्द्रपुष्करिणीतटे स्थितं श्रिया जुष्टं शुभास्पदम् अतुलं श्रीरङ्गक्षेत्रं विमानमभ्येत्य प्रदक्षिणं, कृत्वा, महार्हनीलाचलसन्निकाशं प्रसन्नवक्त्रं, नलिनायतेक्षणं, कृपामयं, कान्तिनिकेतरूपं, श्रीरङ्गेश्वरदिव्यदेहं ददर्श । अनुत्तमात्यद्भुतवीर्यसुन्दरं, दृष्टिमनोपहारिणं श्रीरङ्गनाथस्य लावण्यं विलोक्य विरिञ्चिवद्विप्रकुलाग्रगण्यः विप्रनारायणः सुतरां हर्षं जगाम । श्रीरङ्गेशस्य कृपापात्रभूतः विप्रनारायणः महान् भगवद्भक्तो अभूत् । भगवत्प्रीतिकरेषु कैङ्कर्येषु पुष्पमालाकैङ्कर्यं प्रधानतममिति सम्यक् समालोच्य विष्णुचित्तार्यवत् भगवद्भक्तिपारगः नन्दनोद्यानवत् रम्यं श्रीपुष्पतुलसीवनं श्रीरङ्गप्रतीच्यां कृत्वा नित्यं श्रीरङ्गशायिने दिवारात्रं श्रीपुष्पतुलसीमालान् समर्पयन्, श्रीवैष्णवगृहेषु भिक्षाशनरतः, जितकामः ब्रह्मचर्याश्रमे सुखं तस्थौ ।

तदा कावेर्याः उत्तरे तटे करंबनगरे उत्तमस्वामिनिलये देवाङ्गनांशजा देवदेवीति विख्याता काचित् आसीत् । कदाचित् लोकमोहिनी देवदेवी सखीजनैः चोलभूपालदर्शनार्थं निचुलानगरं प्राप । नृत्यगीतादिविभ्रमैः चोलेन्द्रं मोहयित्वा, साग्रजा नाट्यसाहित्यकलासौन्दर्यमोहिनी राज्ञः रत्नभूषाम्बराणि बहुधनं प्राप्य, महता गर्वेण युक्ता स्वपुरं प्रति प्रतस्थे । मार्गश्रमापनोदनार्थं सखीजनैः श्रीमद्देवदेवी विप्रनारायणाश्रमं आससाद । नन्दनोद्यानसदृशे जितचैत्ररथे वने सर्वश्रमापहरणे

वृक्षमूले सा स्थिता। देवदेवी वनं सर्वं विलोक्य, अतिप्रहृष्टा, विस्मिता पार्श्वस्थामग्रजां अलिवेणीं वीक्ष्य शुभं वचः व्याजहार। अग्रजे एतत् वनं सुन्दरम्, अद्भुतम्। महत् चैत्ररथाधिकद्युति वनमेतत्। महान्तः वृक्षाः फलभारपीडिताः गर्भिण्य इव नम्राश्च प्रकाशन्ते। पुन्नाग वकुल, अशोक, जम्बीर, मल्लिका, जाजि, चम्पराश्च राजन्ते। अस्मिन् उद्यानवने वसन्तऋतौ पिकाः मधुरं कूजन्ति। शुकशारिकाः सुमनोहरे अस्मिन्नारामे वसन्ति। केतकी, मालती, जाजि, मल्लिकादीनि कुसुमानि सततम् अम्बरे नक्षत्राणीव विराजन्ते। पुष्पासवं पिबन्तः सादरं महत् कूजन्तः, पुष्पनिकटे नृत्यन्तः भ्रमराः सदा भ्रमन्ति। अत्र वापीकूपसरांसि सम्पूर्णाम्भांसि सततं सपद्मानि विराजन्ते। वनमध्ये निर्मलोदका कावेरी प्रवहति। सुशीतलः, सुगन्धः मनोहरः, मन्दवातः सर्वश्रमहरः सर्वदा वाति। सर्वोत्तमं रङ्गेशोद्यानवनमेतत् नन्दनवनं, चैत्ररथं च दृष्ट्वा सदाहसदिव भाति। वनस्योभयपार्श्वयोः कावेरी प्रवहति। सर्वजन्तूनामाधारं, विचित्रतरशोभितं श्रीरङ्गनाथरङ्गनायक्योः उत्तमं विहारस्थानमेतत्। रम्यामद्रं वनं कुत्र ? दुर्गमं नन्दनं कुत्र ? श्रीरङ्गेशमृगयायासश्रमापहरणामिदं वनम्। अस्माकं मार्गायासहरणे किमुत ? इति देवदेवी तदुद्यानवनं वर्णयन्ती, साभिप्रायं सखीजनैः वनसौन्दर्यं पश्यन्ती ततः इतः सञ्चरन्ती महौजसं, तद्वनाधिपं, वैष्णवं, अमलं शुभाम्बरयज्ञसूत्रं, छिद्रोर्ध्वपुड्रोज्ज्वलं, कण्ठोदग्रविराजमानतुलसीपद्माक्षमालाञ्चितं, सन्धारयन्तं, श्रीबृन्दावनमुद्धृतेन पयसा सम्पूरयन्तं, रङ्गेशाङ्घ्रिसरोरुहामृत-रसास्वादैकसञ्जीवनं, प्रतिदिनं तत्कैङ्कर्यपरायणं, स्वप्नेऽपि, किञ्चिदपि, प्रमादवशतोऽपि अज्ञातयोषित्सुखं, आज्ञातकामादिकं, मौनव्रतधरं, अद्भुतपूज्यचरितं विप्रनारायणं विलोक्य, देवदेवी विनयेन प्रणम्य, प्राञ्जलिः समुपस्थिता।

दृढव्रतः विप्रनारायणः देवदेवीं दृष्ट्वाप्यदृष्ट्वा तां तिरस्कृत्य, स्वस्य कैङ्कर्ये निरतो अभवत्। पराङ्मुखं विप्रनारायणं दृष्ट्वा देवदेवी आदरेणाग्रजां वीक्ष्य, अलिवेणी एषः उन्मत्तः षण्डो वा ? पुरस्स्थितां असादृश्यलावण्यां, सर्वलोकै-कमोहिनीं, मां न पश्यति इत्यवोचत्। देवदेव्याः वचः श्रुत्वाा, प्रहस्य, तदग्रजाा सा अलिवेणी एवमब्रवीत् - न च षण्डः, न च उन्मत्तः, स न चैव प्राकृतजनः। तत्प्रभावमतिदिव्यम्। सः महाविरक्तः। सदा श्रीरङ्गेशकैङ्कर्यरतः। लक्षधनं दत्वा चापि चक्षुषा त्वां न पश्यति, त्वद्विभ्रमविमोहितः चोलभूपालः न। उत्तमपुरुषोऽयं, न लोकसामान्यपुरुषः इति। अलिवेण्याः वचः श्रुत्वा देवदेवी लावण्यरूपगर्वेण रुषान्विता स्वसामर्थ्यमुद्दिश्य एवमब्रवीत् - अन्यादृशं मम सामर्थ्यं सततं दृष्ट्वापि अजानानेव वदसि। तत्सर्वं मम

सुसाध्यमिति न मन्यसे । मया आर्जितस्य वित्तस्य संख्या न विद्यते किल । वातपर्णजलाहाराः ऊर्ध्वरेतसः योगिनः मन्मुखालोकनेनैव स्खलितेन्द्रियाः स्युः । युवा, स्वयं सुन्दराङ्गः, सुवक्षाः, पद्मलोचनः, कोमलावयवः, श्रीमान् यौवनारम्भविग्रहः, एकाकी, सुमनोहरे निर्जनोद्याने विहरति । अस्य वशीकरणकार्ये कः प्रयासः ? अग्रजे साधवः सुलभसाध्याः किल इति ।

महायौवनगर्वितं देवदेव्याः वचनं श्रुत्वा, असहमाना अलिवेणी रक्तान्तलोचना रोषात् - धीमान्, वैराग्यनिलयः अयं विप्रनारायणः रूपविभ्रम-सम्पद्भिः चारुहासावलोकनैः यदि मोहितः तदा त्वं वारस्त्रीजनमुख्यैव भविष्यसि । आषण्मासमहं तवैव दासी भविष्यामि । इति ।

प्रतिज्ञारूपकं तस्याः अलिवेण्याः वचनं श्रुत्वा, देवदेवी संरक्तनयना रोषात् एवं प्रतिज्ञामकरोत् - अलिवेण्यग्रजे । सम्यक् श्रूयतां मद्वाक्यम् महावैराग्यवारिधिम् अमुं मद्विभ्रमविलासादिभिः यदि अहं मोहितं न करिष्यामि आषण्मासं तव दासी भविष्यामि इति । प्रतिज्ञां कृत्वा देवदेवी अग्रजां सखीजनैः गृहं प्रस्थापयित्वा, भूषणानि सर्वाणि शीघ्रं विसृज्य स्नात्वा, काषायवसनं परिधाय, नतानना धृतोर्ध्वपुण्ड्रा, सात्त्विकवेषतः साध्वीव विप्रनारायणस्य सन्निधिं समागत्य, वन्दनं कृत्वा, कृताञ्जलिपुटा तस्थौ । तां दृष्ट्वा विप्रनारायणः का त्वम् ? किमर्थमागता ? तत्कारणं वद इत्यवदत् । विप्रनारायणस्य वचः श्रुत्वा, वाराङ्गना चतुरा देवदेवी भुक्तियुक्तेव तं पुनः प्रणिपत्य, स्ववृत्तान्तं सम्यक् विज्ञापयामास । भो स्वामिन् आचार्य । मम विज्ञापनं अङ्गीकुरुष्व । पापबाहुल्यात् वारस्त्रीवंशसमुद्भवा अहम् । दशसूनिसमः चक्री । दशचक्रिसमः ध्वजी । दशध्वजिसमा वेश्या इति एवं शास्त्रनिर्णयः । विद्वन् वेश्यजन्म बहुपापसमुद्भवम् । अहं पापबाहुल्यात् अधुना वेश्याकुले जाता । अस्मिन् जन्मनि अहं भूयः सुदारुणं पापं कृत्वा, कान् लोकान् गमिष्यामीति महती चिन्ता अस्ति । आचार्य श्रीवैष्णवानां, विष्णोश्च कैङ्कर्यं कृत्वा, तेषामुपदेशानुसारेण तन्मार्गवर्तनं सम्यगितीयं मे मतिः । आचार्य, अस्मन्मातुः मतिस्तु घोरा, सर्वेषां भार्या भूत्वा, विलासविभ्रमैः भेषजैः जनान् मोहयित्वा अर्थसम्पादनं कुरु इति माम् अनिशं पीडयति मम माता । घोरं, नरकप्रदं, मन्मातुर्वचनं नाहं सहेय । मुक्तिकामा मुमुक्षोः भवतः पादपङ्कजं संसेव्य, अहं त्वदधीना वर्तिष्यामि, न संशयः । अतिलुब्धां पापचारिणीं मातरमनादृत्य, दयासिन्धो युष्मद्दास्यां मयि करुणां निक्षिप्य, अनाथामातुरां दीनां शरणागतां मां रक्ष । भवतां श्रीरङ्गेशतुलसीदामप्रदानसमये,

भिक्षाचरणवेलायामपि अहं वनपालिका भविष्यामि। त्वदाज्ञापरिपालिनी न सन्देहः। तोयेन शीर्णपर्णैर्वा फलैः केनचित् शाकेनं शरीरधारणं कृत्वा, तव शासने वर्तिष्ये। दास्याः त्वद्भुक्तशिष्टान्नं यदि कृपया दत्तं तदा कृतार्था भविण्यामि। न संशयः। दीनां मां अङ्गीकुरुष्व। साधवः दीनवत्सलाः खलु इति।

साधुत्वात् विप्रनारायणः वारयोषितः देवदेव्याः कौटिल्यं अजानानः तत्सर्वं सत्यमिति मत्वा, ताम् उद्यानवनरक्षणे नियोजयामास। देवदेवी तेन वाक्येन सन्तुष्टा, शुचिस्मिता आत्मानं तीर्णप्रतिज्ञाममन्यत। ततः प्रतिदिनेऽपि कावेर्यां त्रिषवणस्नानं कुर्वती, धृतोर्ध्वपुण्डा, नियता, तुलसीपद्ममालिका देवदेवी नित्यं विप्रनारायणं त्रिकालं कृतवन्दना, तेन निर्णीतकैङ्कर्यनिरता अभूत्। वैष्णवश्रेष्ठो विप्रनारायणः माधुकरं कृत्वा, तत् सम्यक् विष्णवे समर्प्य, स्वयं भुक्त्वा सर्वपातकैः विसृष्टा महाशुभ्रा शरद्राकानिशा इव अशोभत। ततः देवदेवी पुष्पोद्यानवने सम्यक् निरन्तरं सर्वेषां पुष्पतुलसीवृक्षाणां सादरं खननं विधाय, घटाभ्यां जलमादाय, प्रपूरणं कृत्वा, विप्रनारायणस्य मनः रञ्जयन्ती वृक्षान् वर्धयामास। अनिशं वातवर्षहिमातपान् सम्यक् सहमाना, सर्वाणि भोग्यानि विसृज्य अग्रजोक्तां गिरं चित्ते स्मृत्वा, अप्राप्तकामा शल्यमिव प्रलग्नं परिशोषयामास। तस्मिन् उद्यानवने श्रीरङ्गेशकैङ्कर्यपरम्पराभिः दिवाकालः सुखेनैव अपयाति। रात्रिः महाकालनिशीव आसीत्। भगवत्परेव, रङ्गेशकैङ्कर्यपरेव स्वकार्यसंसिद्धमभीप्सयन्ती श्रीविप्रनारायणदासभूता इवासीत्।

एवं देवदेवी सम्यक् उद्यानवनपोषणकैङ्कर्यं कुर्वती षण्मासपर्यन्तं समास्थिता। तथापि तस्याः प्रतिज्ञा सूफला नाभूत्। चिन्तासागरनिमग्ना देवदेवी बहुधा चिन्तयित्वा श्रीरङ्गेश करुणासिन्धो देवदेव। प्रसीद मे। नीचया मया गर्वेण वृथा प्रतिज्ञा कृता। वैराग्यनिधिः, जितेन्द्रियः, श्रीमान् विप्रनारायणः मादृशां योषिताम् अजेयः। आषण्मासं निरन्तरं मया सम्यक् अनुवर्तितः। तथापि वीक्षणेनापि मां न पश्यति। महागाढान्धकारे निशीथे बहिः वने एकाकीं शयानां शरणं गतां मां त्यक्त्वा, निर्दयः धीरः सुखं शेते। भवत्या किं भुक्तम् ? कुत्र शेषे ? इति मां कदापि, असन्मुखे स्थित्वापि, किञ्चिदपि न पृच्छति खलु। बाले, आरामे किं कृतम् ? किं कैङ्कर्यं करिष्यसि ? इति श्रीरङ्गनाथकैङ्कर्यकारणेनापि मां महानेषः किञ्चिद्वचः न पृच्छति। उद्यानवनवृक्षेषु यावती दया आस्थिता तावत्यपि कशरणायां मयि न विद्यते। कदा मम प्रतिज्ञा सफला स्यात् ? न वेद्मि। श्रीरङ्गनाथ ! करुणासिन्धो ! अनाथां मां विलोकय। पुरुषोत्तम ! मया कृतापराधं क्षमस्व। श्रीरङ्गेश ! मम प्रतिज्ञायाः सफलाय

अनुगृण्हन्तु इति अनन्यशरणा देवदेवी भक्ताभीष्टप्रदं देवं रङ्गेशं शरणं गता। तदा भक्तानुग्रहकारकः श्रीमान् ! रङ्गेश्वरः तस्याः प्रतिज्ञां सफलां सत्यं कर्तुममन्यत। ततः सर्वसस्यसमृद्धितः देवदेवी मनोऽभीष्टपूरकः प्रावृट्कालः समवर्तत। कदाचित् निशि सुमहदपारवर्षमागतम्। तदा धीमान् विप्रनारायणः पर्णशालायां स्थितः। वर्षेण हन्यमाना देवदेवी बहिः स्थिता। श्रीरङ्गेशानुग्रहादेव विप्रनारायणस्य देवदेव्यां कारुणयं सञ्जातम्। वर्षेण पीड्यमानां तां देवदेवीं विलोक्य, धर्मात्मा विप्रनारायणः कृपया एवमुक्तवान् - देवदेवि वर्षवातः महानासीत्। बाह्ये स्थातुं न शक्यते। अतः शीघ्रमत्रागच्छ। शालायां कुत्रापि उपविश्यतामिति। तद्वाक्यमङ्गीकृत्य, प्रहृष्टेनान्तरात्मना धन्यास्मीति वदन्ती सा पर्णशालां प्रविश्य, तस्य पादान्तिके स्थिता। विचित्ररूपलावण्या, कोकिलस्वरभाषिणी मधुरभाषणैः मुनेर्मनः सम्यक् रञ्जयन्ती तं स्ववाक्यश्रवणासक्तमकरोत्। अनन्तरं बुद्धिमती देवदेव विप्रनारायणस्य पादसंवाहनं कुर्वती नैपुण्यं प्रदशितवती। ततः अन्योऽन्यप्रेतिसंयुक्तौ उभौ मिलितौ। अग्निसदृशा नारी, घृतकुंभसमः पुमान्। वह्निसान्निध्यादाज्यं यथा द्रवति तथा युवतिसान्निध्यात् पुंसां चेतः चलति खलु। यथा राधया श्रीकृष्णः देवदेव्या सहादरात् विप्रनारायणः रमयामास। अजेया वैष्णवी माया स्त्रीरूपा न संशयः। तां जेतुं ब्रह्मेशानादयोऽपि न शक्नुवन्ति। तदा विप्रनारायणं पादाब्जस्पर्शपर्यन्तं स्ववशीकृत्य, साभिप्रायं मनोहारिमन्दहासावलोकनैः वायुः दीपशिखां इव तन्मनः चालयन्ती कोकिलस्वरयुक्तेन माधुर्यवचसा महुर्महुः तं पश्यन्ती करुणाकर तव दास्यै हितं वाक्यं ब्रूहि। यथामति त्वत्पादपद्मकैङ्कर्यं करिष्ये इति उक्तवती सुभ्रू, मन्दस्मितमुखी देवदेवी। तद्विलासाद्विमोहितः विप्रनारायणोऽपि शुचिस्मितः देवदेव्याः पाणिग्रहणं चक्रे। धन्यास्मीति वदन्ती अन्तरात्मना प्रहृष्टा सा देवदेवी तं गाढालिङ्गनं चक्रे।

अज्ञातविषयादिना परमर्षिणा विप्रनारायणेन सा तन्वङ्गी विचित्रसुरतैः सम्यक् रमयामास। स्वप्नेऽपि अज्ञातयोषितानन्दं मुनिं तत्क्षणे विषयार्णवनिर्मग्नमकरोत्। युवतीजनसामर्थ्यं वर्णितुं केन शक्यते ? ब्रह्मादयो अखिला देवाः तदधीनाः अभवन्। ततः दृढव्रता देवदेवी स्वगृहमागत्य, मङ्गलस्नानं विधाय, सम्यक् कृतभोजना, सर्वाभरणसंयुक्त, विचित्राम्बरशोभिता आभिरूप्येण तन्वङ्गी विप्रनारायणं महुर्मुहुः योगीशभ्रान्तिकारिणाम् एकदेशे विनिर्मग्नं नैपुण्यात् विदधे। नन्दनोद्यानसदृशे पुष्पवने मल्लिका, माधवी, जाजिलताकुञ्जेषु रमणीये मनोहारिमत्तभृङ्गनिनादिते, शुककोकिलशारिकागणशोभिते विचित्रनिर्भरानन्दमहोत्सवमहारसं दृढानुरागौ

देवदेवीप्रनारायणौ अन्योऽन्यमनुभूया अन्योऽन्यक्षणविश्लेषं महायुगं मन्यमानौ निकुञ्जेषु राधामाधवाविव संचक्रीडतुः ।

एवं द्विजोत्तमं स्ववशीकृत्य, देवदेवी अलिवेण्या सकलैश्च संश्लाघ्यमाना तीर्णप्रतिज्ञा तेन सह स्वगृहं विवेश । विप्रनारायणं त्यक्तवर्णाश्रमाचारं विटवेष-विशारदं, योषित्परवशं व्यधात् । ततः स्वधर्मानुष्ठानं सन्ध्यावन्दनादिकं सर्वं त्यक्त्वा, अनिशं वेश्याभोगपरायणः त्यक्तरङ्गेशकैङ्कर्यः वारवनितागृहे एव स्थितः । देवदेवी अपि विप्रनारायणं साक्षाद्रङ्गेश्वरं मत्वा पादसंवाहनादीनि अखिलानि कैङ्कर्याणि कुर्वती तदेकहृदया, पुरुषान्तरवर्जिता साध्वी समास्थिता । तस्याः माता तु नित्यवित्तार्जनरता, विटकण्टकी विप्रनारायणधनं सर्वमपहृत्य, तं निर्धनं कृत्वा, बहुधा निर्भर्त्स्य, निर्दया धनराहित्यात् बहिर्गच्छेत्युवाच । प्रव्याकुलान्तःकरणः, मोहपाशसम्बद्धः विप्रनारायणः देवदेव्याः गृहात् बहिः लज्जया नतमुखः, आच्छदिताम्बरः, समाकुञ्चितसर्वाङ्गः स्थितः । तदा जगत्पतिः श्रिया सार्थं विलाससंचारं कुर्वन् यदृच्छया तत्रागतवान् । वेश्याङ्गना गृहद्वारे शयानं तं विप्रनारायणं दृष्ट्वा मन्दस्मितमुखी श्रीरङ्गनायकी रङ्गेशं पप्रच्छ- ''कोऽयं वेश्यागृहद्वारे शयानः ? तद्धृतं बूहि''' इति । श्रीरङ्गनायिक्याः वाक्यं श्रुत्वा, श्रीरङ्गनाथः एवं उक्तवान् - अस्माकं पुष्पमालाकैङ्कर्यपरोऽयं वेश्यासक्तः वित्ताभावात् निराकृतः दुःखितः, मोहाविष्टः गृहद्वारे समास्थितः । इति ।

श्रीरङ्गेशवचः श्रुत्वा दुःखिता सा माता कृपया एवमाह - ''स्वामिन् । तवान्तरङ्गभक्तं युष्मत्कैङ्कर्यकारिणं विश्वमोहनमायया एतादृशं कर्तुं भक्तसंरक्षणाय तव उचितम् ? रङ्गेश विश्यासंसर्गजं दोषं निश्शेषं परिहृत्य, तं त्वत्कृपाविषयं भक्तमङ्गीकुरुष्व'' इति ।

श्रीदेव्याः वचः प्रतिगृह्य, रङ्गभूपतिः सुवर्णपञ्चपात्राणां मध्ये शुद्धोदकप्रदं पात्रं समादाय देवदेव्याः गृहं गत्वा, कवाटताडनमंकरोत् सा कवाटसमीपगा कवाटनिकटस्थः कोऽयमिति अभ्यभाषत । ''रङ्गेशदासनामाहं विप्रनारायणेन संप्रेषितः तवान्तिकमुपागतः । तेनोक्तं महद्वाक्यं रहस्यार्थदं वक्तव्यम् । द्वारं पिधेहि'' इति उक्तवान् श्रीरङ्गनाथः । तद्वाक्यं समाकर्ण्य द्वारं समुद्घाट्य देवदेवी ''किं तवागमनकार्यम् ? तद्बूहि'' इत्यब्रवीत् । विप्रनारायणेन सम्प्रेषितं स्वर्णपात्रमिदं, गृहाण इति हरिः तस्यै ददौ । सा गृहीत्वा, सन्तुष्टा विप्रनारायणं शीघ्रमानयेत्याह । तच्छ्रुत्वा

भगवान् श्रीरङ्गनाथः शीघ्रं विप्रनारायणान्तिकं गत्वा, भवन्तमन्तस्सुप्रीता देवदेवी सत्वरं समागच्छेत्युक्तवती इति निवेदितवान्। कर्णामृतं तं वाक्यं श्रुत्वा विप्रारायणः देवदेवी गृहं प्राप्य, जातसौहार्दया तया रममाणः क्रीडापरवशः अतिष्ठत्।

तस्यां रात्र्यां व्यतीतायां श्रीरङ्गेशार्चकाः तस्य पात्रस्याभावात् आलयाधिकारिणे तं वृत्तान्तं आवेदयाश्चक्रुः। तद्वृत्तं निशम्य सः चोलभूपतेः निवेदितवान्। सर्वं श्रुत्वा कुपितः राजा रङ्गेशपरिचारकान् सर्वान् रज्जुभिः बन्धनं कृत्वा अपीडयत्। तद्गृहं स्वर्णपात्रं प्रगृह्य विप्रनारायणं, देवदेवीं च अत्यन्तहर्षिताः चोलभूपालसन्निधौ दण्डवासिकाः सर्ववृत्तान्तं सम्यक् विज्ञापयामासुः। तद्वचः श्रुत्वा, स्वर्णपात्रं विलोक्य, महता कोपेन युक्तदेवदेवीमब्रवीत् - "मूढे। श्रीरङ्गेशस्य महतो हेमपात्रपरिग्रहः तव उचितः तस्मात् त्वमद्य दण्ड्या" इति। तद्वाक्यश्रवणात् भीता देवदेवी चोलेन्द्रं प्रति विज्ञापनं चक्रे। "प्रभो। इदं भगवत्पात्रमिति मया न ज्ञायते। त्वत्पादपद्माभ्यां सत्यमेवोच्यते। रङ्गदासाभिधानेन स्वदूतेनैव विप्रनारायणः पात्रं स्वयं मदीयमिति निशि अस्मद्गृहं प्रति प्रेषितवान्। अज्ञानात् तत् पात्रं मया गृहीतमिति"।

तन्निशम्य विप्रनारायणः "स्वर्णपात्रं न जानेऽहं, मम दूतो न विद्यते" इति उक्तवान्। तच्छ्रुत्वा देवदेवी "त्वयैव प्रेषितमिदं पात्रम्" इति दृढमब्रवीत् एतदन्योन्यविवादं वीक्ष्य चोलभूपतिः तावुभौ निर्भत्स्य, विवादं परिहृत्य, देवदेव्याः अपराधं समादाय, रङ्गनाथं स्वर्णपात्रं रङ्गराजाय प्रदत्वा, स्वर्णस्तेयदोषस्य विप्रनारायणस्य युक्तदण्डं विबुधैस्सह विचार्य, कर्तुकामः विप्रनारायणं कारागृहे निक्षिप्य स्वगृहमविशत् चोलभूपतिः। तदा रङ्गेश्वरी देवदेवं रङ्गेश्वरं प्रति "इतः परं मा कुरुष्व स्वलीलाविषयं, विप्रनारायणं शीघ्रं भवतोऽभिमुखं कुरु" इत्यवोचत्।

श्रीरङ्गनायिकायाः वचनमङ्गीकृत्य श्रीरङ्गनाथः चोलेन्द्रस्य स्वप्ने प्रसन्नः "विप्रनारयणस्य प्रारब्धकर्महरणं कर्तुकामेन मय देवदेव्यै हिरण्यमं पात्रं दत्तम्। अत्र कारणविचारणा न। एवं रूपेण श्रीमान् विप्रनारायणः मया दण्डितः। भवता अदण्ड्यः। निर्दोषोऽयं मत्पुत्राय मद्भूषनं मया दत्तम्। तत्र को भवान्? यत्तत् वेश्याधनं पात्रं तत् मे मास्तु। तत्पात्रं तस्यै च दत्वा विप्रनारायणं मुनिं विमुच्य, पूर्ववत् पुष्पधामकैङ्कर्यकारिणं विधेहि शीघ्र"मिति आज्ञाप्य, हरिः स्वस्थलं प्रतिपेदे।

तस्यां रत्र्यां व्यतीतायां निद्रायाः उत्थितः चोलभूपतिः विस्मितः स्वप्नवृत्तान्तं मुनिभ्यः निवेद्य, ततः शीघ्रं विप्रनारायणं आनयित्वा, प्रणम्य, सम्यक् सत्कृत्य,

तमपूजयत् । अथ विप्रनारायणः स्वकृतं नीचकृत्यं भूयो भूयो संस्मृत्य, अनुतापं गतः । तद्दोषपरिहारार्थं प्रायश्चित्तमकरोत् । एतत्समस्तपापानां प्रायश्चित्तं निर्णीतं भगवद्भक्तपादोदकनिषेवणमेवमुक्तप्रकारेण शुभं वैष्णवाङ्घ्रिजलं भक्तिभावेन अपिबत् । भुवि भगवद्भक्तपादोदकसमं पापहरं पुण्यतमं तीर्थं न विद्यते । सकलाः नद्यः कलुषस्नानकिल्बिषैः आत्मपापविशुद्ध्यर्थं वैष्णवाङ्घ्रवगाहनं वाच्छन्ति । तन्महापापसङ्घस्य प्रायश्चित्तादिरूपकं वैष्णवाङ्घ्रिजलं पीत्वा, पूतात्मा विप्रनारायणः प्रत्यनन्दत यावत् वैष्मवाङ्घ्रिरजः यस्य मूर्ध्नि स्थितं गङ्गादिसर्वतीर्थानि तावत् तिष्ठन्ति । न संशयम् । निरपेक्षं, मुनिं शान्तं, निर्वैरं, समदर्शनम् अङ्घ्रिरेणुभिः नित्यमनुव्रजाम्यहमित्येवं भगवद्गीताश्लोकं ज्ञात्वा विचक्षणः विप्रनारायणः अतोऽहं भगवद्भक्तपादरेण्वभिधानकः भवेयमिति अमन्यत । ततः अर्चकमुखेन भक्तवत्सलः रङ्गेशः विप्रनारायणं सम्यक् समाहूय ''वत्स भवतः न्यूनता न काचिद्भवति । पूर्ववत् मत्कैङ्कर्यपरो भूत्वा अत्रैव वस । सर्वाभीष्टानि तव प्रदास्यामि । अभीष्टतमं वरं निश्शङ्कं वाञ्छय'' इत्यवोचत् ।

प्रहृष्टात्मा विप्रनारायणः रङ्गेशस्य वचः श्रुत्वा, विज्ञापनं चक्रे । ''श्रीरङ्गनाथ । भवत्सन्दर्शनादेव मम सर्वाभीष्टानि सिद्धानि तव दासस्य अधुना भक्ताङ्घ्रिरेणुनाम यथा प्रथिता तथा वरं देहि'' इति प्रार्थितवन्तः । तेन सन्तुष्टः श्रीरङ्गनाथः भक्ताङ्घ्रिरेणुनामैव भुवि प्रथितं प्रददौ । अपि च भक्ताङ्घ्रिरेणवे परभक्तिं, परज्ञानं, परमं वैराग्यं श्रीरङ्गनाथः ददौ । तेन सञ्जातसर्वार्थज्ञानवान् भगवत्परः भक्ताङ्घ्रिरेणुः तत्रैव सदा तत्कैङ्कर्यपरः रङ्गेशसन्निधौ अतिष्ठत् । तत् ज्ञानभक्तिवैराग्यं अनुत्तमं महत् वीक्ष्य देवदेवी संप्रहृष्टा, महाश्चर्यनिरता, तादृशाहं भविष्यामि इत्येव निश्चित्य, स्वसर्वस्वं महाविश्वासपूर्वकं श्रीरङ्गनाथाय समर्प्य, साधुहृदया, शुद्धसत्वगुणान्विता, सम्मार्जनादिकैङ्कर्यनिरता मानवर्जिता रङ्गेशसन्निधौ नित्यं जितकामा बभूव । जितदुस्सङ्गतिस्सिनग्धा, सत्सङ्गतिपरायणा, रङ्गकैङ्कर्यनिरता, तीर्णसंसारसागरा सा देवदेवी तत्रैव कस्मिश्चित्कालपर्यये सत्सङ्गमविशेषतः वैष्णवं लोकं जगाम् ।

श्रीरङ्गेशानुग्रहादेव कृतकृत्यः भक्ताङ्घ्रिरेणुः सर्वार्थज्ञानमासाद्य, माता, पिता, सखा, भ्राता, पुत्रः, बन्धुः, गुरुः, धनं, विद्या, सम्पत्, भोगाश्च सर्वं मे श्रीरङ्गनाथ एवेति मत्वा, सर्वदा भगवत्कैङ्कर्यनिरतः, अतिमनोहराः श्रीपुष्पतुलसीमालाः विधाय, सद्भक्त्या ताः श्रीरङ्गिणः समर्प्य, धन्योऽभूत् ।

तिरुमालै नाम दिव्यप्रबन्धं विदधे। तस्मिन् प्रबन्धे श्रीरङ्गनाथः श्रोता भक्ताङ्घ्रिरेणुः वक्ता चाभवताम्। शतानन्दशौनकौ इव वक्ता श्रोता च अभवताम्। तस्मिन् प्रबन्धे अष्टाक्षरी, द्वय, चरममन्त्रत्रयार्थः सम्पक् विशदीकृतः। भक्ताङ्घ्रिरेणुनानुगृहीतः द्वितीयः दिव्यप्रबन्धः तिरुप्पल्लियेलुच्चिं नाम प्राबोधकीस्तवः। दशपाशुरात्मकेऽस्मिन् प्रबन्धे श्रीरङ्गनाथः संस्तुतः।

श्रीरङ्गे नित्यवासरतः भक्ताङ्घ्रिरेणुः सदा सत्कैङ्कर्यपरः पञ्चोत्तरं शतम् अब्दान् सुखेन स्थित्वा, श्रीरङ्गेश्वरसन्निधौ विष्णुसाम्राज्यमगमत्। परमाद्भुतं तस्य माहत्म्यं भक्त्या यः पठेत् शृणुयाद्वापि स मुक्तः नात्र संशयः।

*श्रीविष्णोर्वनमालिकांशवशतो भक्ताङ्घ्रिरेण्वाख्यया।*
*भक्तानुग्रहहेतवे करुणया यश्चोलभूभृद्भुवि॥*

*श्रीमण्डंगुडिनायकं द्विजवरं रङ्गेशमालाप्रदं*
*श्रीमालाकृतिकारकं गुणनिधिं सञ्चिन्तये सन्ततम्॥*

*श्रीरङ्गेश्वरकैङ्कर्यहेतवे गुणसिन्ध्वे।*
*भक्ताब्जभानवे तस्मै नमो भक्ताङ्घ्रिरेणवे॥*

**तिरुमालै**

तोण्डरडिप्पोडियाल्वार समाख्येन श्रीभक्तांघ्रिरेणुमुनिवरेण दिव्यप्रबन्धद्वितय-मनुगृहीतम्। तत्र प्राथमिकोऽयं श्रीमालाप्रबन्धः। द्वितीयस्तु तिरुप्पल्लियेलुच्चि नाम प्रबोधनप्रबन्धः। आद्यस्यास्य दिव्यप्रबन्धस्य प्रभावः सुप्रसिद्धेनाभाणकेन ज्ञायते "श्रीमालां यो न जानाति श्रीपतिं नैव वेद सः" इति। सोऽयं दिव्यप्रबन्धः चतुस्सहस्रदिव्यप्रबन्धवर्गे प्रथमसहस्रे सप्तमत्वेन परिगाणितः। एकमेव विषयमधिकृत्य बहुगाथाकीर्तनं यस्मिन् प्रबन्धे भवति स मालाशब्देन व्यवह्रियत इति द्राविडसङ्केतः। श्रीरङ्गनाथविषयकत्वात् श्रीशब्दः उपचारार्थे प्रयुक्तः- श्रीरामायणम्, श्रीभागवतम्, श्रीभाष्यमित्यादाविव। भगवतः पुष्पमालावत् परमभोग्यत्वाच्च श्रीमालेति नाम सुतरामुपपद्यते। संस्कृतभाषामयस्य श्रीविष्णुधर्माभिधानस्य पुराणग्रन्थस्य सारसंक्षेपरूपोऽयं दिव्यप्रबन्ध इति पूर्वाचार्या आशेरते।

"हरेर्नामैव नामैव मम भेषजम्", "कलौ नास्त्येव नास्त्येव गतिरन्यथा।" इत्याद्यनेकप्रमाणानुसारेण भगवन्नामसङ्कीर्तनमेव कलियुगेऽस्मिन् न प्रतिमोज्जीवनसाधनमिति सिद्धान्ताविष्करणम् अस्य दिव्यप्रबन्धस्य परमं प्रमेयम्।

पाण्डवेभ्यः पश्चात्तनः शतानीको नाम नरपतिः सत्कुलप्रसूतत्वेन परमसात्विकस्सन् भुवं पालयन् कदाचित् शौनकभगवतः सविधमुपेत्य संसारिणामुज्जीवनोपायः कश्चिदव्यभिचारी प्रकाशितव्य इति विज्ञापयन् भगवन्नामसङ्कीर्तनमेव समुत्तङ्गं साधनमिति तेन प्रतिबोधितोऽभूत् इत्यमुमंशं प्रकाशयता श्रीविष्णुधर्मेण सह दिव्यप्रबन्धस्यास्य साम्यं सूपपन्नम् । पञ्चचत्वारिशद् - गाथात्मकोऽयं दिव्यप्रबन्धः श्रीरङ्गनाथैकविषयकः दिव्यदेशान्तरप्रस्तावविधुरः प्रबन्धुः परमं पातिव्रत्यं प्रख्यापयति, इतरदिव्यदेशाधीशस्य भगवतो मनसा अपि अस्मरणात् ।

त्रैलोक्यनिगरणोद्गरणचरणजगन्निदानभूतपरमात्मन् ! श्रीरङ्गनाथ ! भवदीयनामसङ्कीर्तनप्रभावनिबन्धनमस्मदीयमवलेपभूमानमाकर्णयेथाः । इन्द्रियाणि कारागारे स्थापयित्वा कल्मषराशिं सुदूरतः समुत्सार्य, यमकिङ्कराणां मूर्धसु ताण्डवमारचयामो जयघोषणापूर्वकम् ।

मरकतमहाचलसन्निभदिव्यमङ्गलविग्रह ! विद्रूमाभदिव्याधर ! सरसीरुहाक्ष अच्युत ! नित्यसूरिनाथ ! गोपालकुलडिम्भ ! इत्येवम् उच्चारणरूपपरमभोग्यानुभव एव मे शाश्वतिको भूयात् । अर्चिरादिसरण्या परमपदानुभवसाम्राज्ये लब्धेऽपि न तत्र मे स्पृहा भगवन् श्रीरङ्गनाथ ।

''शतायुर्वै पुरुष'' इति वेदोक्तप्रक्रियया मनुष्याः शतं हायनान् परिपूर्त्या प्राणन्तीति स्वीकारेऽपि पञ्चाशद्वत्सरात्मकमायुषोऽर्धं निद्रया व्यपैति । अविशिष्टमर्धं तु शैशवोचितेनाज्ञानेन, बाल्योचितेन, क्रीडनेन, यौवनचित्तेन धूर्तचेष्टितनिकरेण व्याधिक्षुधाजरादिविविधदुःखानुभूत्या च व्यपगच्छति । ततश्च पुनर्जन्म न कामये भगवन् श्रीरङ्गनाथ ।

महापापिनामग्रगण्यः क्षत्रबन्धुरपि हि वर्णत्रितयशालि - नामविशेषानुसन्धानेन समुन्नतां पदवीमन्वविन्दत । स्वल्पानुकूल्यशालिनाम् अस्मादृशामपि विषये परमकृपां प्रदर्शयितुं क्षमं श्रीरङ्गनाथाभिधानम् आश्रितव्यामुग्धं भगवन्तं शेषिणं लब्ध्वापि हन्त बहवः संसृतिबद्धाः ताम्यन्तीति बहुशोचनीयमेतत् ।

ललनाभिः सकलसुखानुभवो भवितेति भ्रान्तिभूम्ना प्रवृत्ता अपरिमितानि दुःखान्येव भृशमंनुभवन्तः नक्तं भुक्त्वा, शयनासरेऽपि भगवच्चिन्तामकृत्वा शरीरपोषणार्थचिन्तयैवाभिभूताः सन्तः संसारिणः शिशिरतुलसीस्रगलङ्कृतवक्षसो

भगवतो रङ्गनाथस्य दास्यविमुखाः तदीयगुणगणगानपूर्वकनर्तने रुचिदरिद्रा भगवच्छेषतामृतास्वादनभाग्यविधुरा उदरंभरय एव कालं क्षिपन्तीति शोच्यमेतत् ।

मदमात्सर्यरूपप्राकारपरिवृता आमुष्मिकचिन्तालेशदरिद्रा भोः संसारिणः । क्षणभङ्गुरस्यास्य देहरूपस्य कुड्यस्य धरायां पतनकालं नावगच्छथ । साक्षात्सनातनधर्मात्मकस्य भगवतः श्रीरङ्गनाथस्य कैङ्कर्यविमुखाः सन्तः नश्वरशरीरपोषणमात्रतत्परा यूयं कङ्कगृध्रोपभोगाय खलु, वर्धध्वे ।

शास्त्राणि सम्यागधीतवन्तो महान्तो अतिक्षुद्राणि बौद्धक्षपणादिमतानि मनसाऽपि न चिन्तयेयुः । श्रवसापि न निशामयेयुः । तदास्तां नाम । अहं तावत् विलूनमस्तकोऽपि न गतासुर्भवेयम् । सत्यमेतत् । भो महात्मानः ! प्रत्यक्षमेतत् ईक्षध्वम् । धनुषा विध्वस्तलङ्कपुरो देवदेवो रामचन्द्र एव सर्वेश्वरः ।

भो भगवन् ! श्रीरङ्गपृथ्वीपते ! भगवद्विषयप्रावण्यदरिद्राः क्षपणाः शैवा अभाग्योपहताः बौद्धाश्च त्वद्विषये यदि कथयेयुः असहनीयानि दुर्वचांसि, तथाविधमर्हावचनश्रवणसमसमय एव तीव्रतरोगाभिभूतस्येव मम मरणं वरम् । अथ च भगवद्विरोधिसत्तामात्रमपि असहमानस्य मम भगवद्दूषकव्यक्तिरूपं लक्ष्यं यदि चक्षुर्गोचरतामियात्, मम शक्तिभूमा च यदि घटेत सद्य एव तच्छिरच्छेदनमेव मे युक्तं कृत्यम् ।

तत्त्वज्ञानदरिद्राः ! हे मूर्खमनुष्याः ! मयाभिधीयमानात् देवाधिदेवादन्यः कोऽपि देवः शरण्यः को वास्ति ? नैवास्ति । युष्माभिः शरण्यतया परिगृहीतानां दैवतानां यदि कदाचित् आपज्जायेत, तदैव हि अद्वितीयम् ईश्वरम् अवगमिष्यथ यूयम् । प्रमाणगतीनां निष्कृष्टमर्थं न मनागपि अवगच्छथ यूयम् । पुनरपि कथयामि-तस्मादन्यत् न किमपि दैवमस्ति । गापालस्यैव भगवतः चरमद्वन्द्वं शरणं वृणीध्वम् ।

राजसतामसजनाश्रयणयोग्यानि दैवतानि सर्वत्रापि स्थापितवान् हरिः । उज्जीवनकाङ्क्षिणां सतामुज्जीवनाय परमकृपया श्रीरङ्गदिव्यधाम प्राचीकशत् । अयि पूर्णम्मन्या जनाः । अपि नाम श्रूयते मदुक्तिः ? गरुडध्वजे भगवति सकलफलप्रदे विराजमाने सत्यपि देवतान्तरभजनप्रवंणा यूयं ज्येष्ठासकाशे सम्पदं प्रेप्सथ ।

अद्वितीयशार्ङ्गविक्रमप्रदर्शनेन उत्तरङ्गे तरङ्गमालिनि सेतुबन्धमारचय्य सर्वलोकसमुज्जीवनाय समराङ्गणे राक्षसाधिनाथं दशाननं व्यापादितवता महावीरेण

अधिशयितं महत्तरं मन्दिरं सप्तप्राकारपरिवृतं श्रीरङ्गधामेति कथयितुम् अपि अशक्ता भो गर्भदुर्भगजनाः भगवदनुभवोपयुक्तं कालं वृथा ह्यतिपातयथ ।

नरके पापाफलानुभवनिरतेषु पापिषु यममुद्गलसंवादं श्रुतवत्सु सत्सु तेषां स नरक एव स्वर्गनिर्विशेष आसीदिति वक्तव्यतानुगुणं प्रभावमधिवहद्भिः नामभिः विभासुरस्य सकलकल्याणगुणपरिपूर्णस्य भगवतः दिव्यं धाम श्रीरङ्गक्षेत्रमिति एतावन्मात्रमपि अनभिधाय संसारिणः तमसि अधोऽधः पतित्वा निमज्जन्तीति भृशं दूये ।

उत्तरङ्गजलधिपरिवृतेऽस्मिन् विशङ्कटे भूतले वर्तमानाः सर्वेऽपि चेतनाः सुरभितुलसीमालालङ्कृतं देवाधिदेवं श्रीरङ्गनाथं स्तोतुमेव सृष्टाः । अज्ञा मनुष्या विशेषतः स्तोतुमसमर्था अपि रङ्गं रङ्गमित्येतावन्मात्रं यदि ब्रूयुः, ज्ञानिनां नरककल्पानि भुवनानि अमूनि अखिलानि शून्यानि भवेयुः ।

भ्रमरावलीमुखरमहोद्यानपरिवृत्तं श्रीरङ्गम् । बर्हिनिवहनृत्तभिराममहो श्रीरङ्गम् । वर्षुकवलाहकमण्डलस्पर्शिमहोद्यानपरीतं श्रीरङ्गम् । कोकिलकुलकूजिताभिराम-महोद्यानपरिवृतं श्रीरङ्गम् । देवाधिदेवश्रीरङ्गनाथयात्रोत्सवास्पदमहोद्यानविभूषितं श्रीरङ्गम् । इत्येवमेवं वक्तुमनुत्साहिभिः कृतघ्नैः मूर्खैः साभिनिवेशमद्यमानमन्नमाक्षिप्य कृतज्ञेभ्यः शुनकेभ्यः उपाहरत तत् ।

श्रियःपतिः गरुडध्वजः भगवान्, चिरं भगवत्कृपालाभौपयिकसुकृत-विधुरदासजनवत् अद्वेषमात्रशालिनां स्वस्वरूपं याथातथ्येन प्रकाशयेत् । अद्वेषेणापि विहीनानां द्रोहिणां स्वस्वरूपं न कदाऽपि प्रकाशयेत् । उज्जीवनौपयिकविवेकशालिनां भगवदस्तित्वप्रकारकज्ञानसमनन्तरं संभावितान् सन्देहान् सवासनमुन्मूल्य, तेषां दिव्यदर्शनं ददाति भगवान् । तस्यावसथं श्रीमद्रङ्गम् ।

प्रथमतः द्यूतक्रीडासक्तः तदनु तस्करवृत्तिप्रवणो धूर्तैः विषयान्तरप्रवणैस्सह संसर्गी भूत्वा, यदा अहमवर्तिषि, तदा सुन्दरीणां शफरोपमेयनयनात्मकवागुराबद्ध आसम् । तथाविधं माम् अत्रागच्छेत्याहूय, हृदये च प्रविश्य, स्वस्मिन्नभिनिवेश-मभिवर्धितवतः सौन्दर्यस्य निकेतनं भगवान् यत्र वसति तद्धाम श्रीरङ्गसमाख्यम् ।

साभिनिवेशं स्थेम्ना स्तोतुमशक्तोऽस्मि । अञ्जलिबन्धादिकायिकव्यापार-करणेऽपि अशक्तोऽस्मि । ईश्वरोऽस्तीति धियाऽपि दरिद्रोऽस्मि । अयस्सधर्मकर्कश-हृदयमपि शनैश्शनैः द्रवीकुर्वन्तं भ्रमरमुखरारामपरिवृते श्रीरङ्गे शयानम् इक्षुरसवत् भोग्यभूतं भगवन्तं संसेव्य मदीयेन नयनद्वन्द्वेन अनुभूयमानः आनन्दः वाचामभूमिः ।

अतिसुभगवीचिशीकरपरिचर्याप्रवणायाः पयोधिसमरूपायाः कावेर्याः मध्ये अद्वितीयनिद्रामुद्रया सह साम्राज्यमातस्थिवासम् अम्बुजायतविलोचनमस्मत्स्वामिनं बिम्बफलोपमेयदिव्याधरसुभगं परमदयालुं श्रीरङ्गनाथं सेवितवतो मम नयनद्वन्द्वात् आह्लादशीतमश्रु प्रवहति । ततश्च विघ्नितपारिपूर्णावलोकनोऽहं पापी किं करवाणि ?

अयि भो भौमा जनाः, सिन्धुसवर्णदिव्यमङ्गलविग्रहोऽस्मत्स्वामी श्रीरङ्गनाथः भगवान् दिव्यमकुट विन्यसनेन प्रतीचीं दिशम्, दिव्यपादारविन्दप्रसारणेन प्राचीं दिशम्, अतिसुन्दरपश्चाद्भागप्रदर्शनेन उदीचीं दिशम्, दिव्यकटाक्षवीक्षाप्रसारणेन विभीषणावसथलङ्कारां दक्षिणां दिशं च धन्यां वितन्वन् भोगिभोगशय्यामधिशेते । तदिदं शयनमवेक्षमाणस्य मम वपुरपि द्रवीभवति । किमहं करवै ।

अनारतप्रसरत्सलिलकावेरीपरिवृते श्रीरङ्गधाम्नि भोगिभोगशयनीयमधिशयानस्य अत्यद्भुतशक्तिशालिनो भगवतो लक्ष्मीसनाथं विलक्षणं वक्षस्थलं मरकतमणिनिभं दिव्यमङ्गलविग्रहं दिव्यभुजावलिं स्वच्छारविन्दसमानदृग्विततिं दिव्याधरम्, अतिसुन्दरं चूडावतंस लावण्यं च विस्मृत्य किमवस्थातुरमर्हन्ति भक्तजनाः ?

विद्रुमसमाधरे भगवति श्रीरङ्गनाथे कैङ्कर्यरुचिदैवश्येन दृढाध्यवसायेन च समुज्जीवितुमशक्त । रे मूर्खहृदय कथय तावत् । सौन्दर्यपरिपूर्णहिरण्मयशैलोपमेये दिव्यमन्दिरे नीलमणिनिर्विशेषं विभासमानस्य विभोः शयनपरिपाटी किमहो चिन्तापथन्वेति ?

अयि भो विवेकान्धहृदय ! पुराणैः पुण्यपुरुषैः यदभाषि, तदेव खलु वयमपि अनुवादरूपेण भाषितुं प्रभवामः । भगवतो वैभवं तु नास्मदृशां ज्ञानगोचरः । उपायान्तरसङ्गविरहितेभ्यः निष्कल्मषचित्तेभ्यः व्यतिरिक्तानाम् अवगन्तुमशक्यो हि स भगवान् वीतकलुषाणां हृदि विराजमाने भगवति श्रीरङ्गनाथे प्रणामसमर्पणादतिरिक्तं तदीयप्रभावप्रतिपादनं किमहो सुशकमस्माकम् ? वद ।

गङ्गातीर्थतोऽपि अभ्यधिकपावनत्वशालिन्याः कवेरकन्याया दिव्यसरितः मध्ये तदीयदिव्यसलिलप्रवाहसंवृद्धमहोद्यानभरिते श्रीरङ्गधाम्नि आश्रितव्यामुग्धस्य अस्मत्स्वामिनः सर्वनियन्तुः श्रीरङ्गनाथस्य सर्वजनमनोहरां शयनमुद्रां ससेव्यापि कथमहं तां विस्मृत्य स्वात्मानं धारयितुं प्रभवेयम् ? इतीतिकर्तव्यतामुग्धो ह्यवतिष्ठे ।

पयः पूरमेदुरकवेरकन्याप्रसरमपवित्रमहोद्यानोपरीते श्रीरङ्गधाम्नि भक्तमन-स्तस्करस्य भगवतः शयनप्रक्रियां वदनारविन्दसुषुमां च संसेव्यापि भो हृदय । कर्कशतामुद्वहसि । तस्य परमपुरुषस्य अद्वितीयतां न जनीषे । हन्त कृत्रिमभक्तिमेव प्रदर्श्य, कृत्रिमचर्याभिरेव कालं क्षिपसि धिक् ।

भो भगवन् ! श्रीरङ्गनाथ । स्नानसन्ध्योपासनत्रेताग्निसमाराधनादिभिः परिपालनीयं ब्राह्मण्यं विलोपितं मया । आत्मविषयकज्ञानदरिद्रश्चास्मि । त्वद्विषयकभक्त्या च विरहितोऽस्मि । भो सिन्धुसवर्ण ! परिपूर्ण हरे ! मम समाश्वासबीजभूतं वस्तु न किञ्चिदस्ति मयि । शोकक्षोभे हृदयस्य प्रलापैरेव धार्यत्वात् प्रलपामि । मयि परमकृपां कुरुष्व ।

भगवन् ! रङ्गपते ! न कदाचिदपि पुष्पाणि सम्पाद्य, त्वत्पादारविन्दयोः समर्पयितुं शक्तोऽस्मि । निरवद्याभिः फणितिभिः त्वदीयशुभगुणगणान् कीर्तयितुं च न मे वर्तते । ततश्च श्रीरङ्गेश्वरस्य तव न केनापि प्रकारेण स्पृहणीयो भवामि । वराकोऽहं किमर्थमजनिषि । न जाने ।

दक्षिणजलधौ सेतुबन्धकाले वानरवीरेषु शैलप्रक्षेपणप्रवणेषु सत्सु, जलधिकूलस्थसिकतासु लुठित्वा, सागरमवगाह्य, सिकताकणान् विधूय, एवं नाम यथाशक्ति किञ्चित्कारं कृतवद्भिः पुरुषाख्यजन्तुविशेषैरपि न साधर्म्यमुद्वहामि । काष्ठसमानकठोरताशालिहृदयः विप्रलम्भैकतत्परः कृपणश्चाहं श्रीरङ्गनाथस्य भावनावृत्त्यापि दास्यमकुर्वाणस्सन् अनर्थभागी भवामि ।

चतुराननादीनाम् अमराणाम् अपि अपरिच्छेद्यमहिमा तेजोमयपरमपद-वास्तव्यो भगवान् गजेन्द्ररक्षणकृते क्षोदीयसि ग्राहेऽपि क्रोधमाहारयन् सरस्तीरमुपाययौ । एवमाश्रितरक्षणबद्धदीक्षे भगवति विराजमाने किमस्ति स्वात्मरक्षाभरः अस्माकम् ? श्ववृत्तिनिरतानामस्मादृशां जघन्यतां मनागपि मनस्यकलयतो भगवतो विषये किञ्चित्कारम् अकुर्वाणोऽहं किमर्थमजनिषि ।

भगवन् ! श्रीरङ्गनाथ ! भूमाविह भवदभिमानभाजनभूतेषु दिव्यदेशेषु न कुत्रापि में जननमघटत । कैङ्कर्यपराणाम् अनुभाव्यतया उपकल्प्यमानं क्षेत्रमपि नास्ति मम । दिव्यदेशवास्तव्यैस्सह बन्धुताऽपि नास्ति मम । किं बहुना ? यया कयापि विधया नास्ति मे भवत्पादारविन्दपरिसरानुबन्धः । वर्षुकवलाहकसच्छाय-गोपालकृष्ण ! अनन्यशरण्योऽहमाक्रन्दामि । स्वामिन् ! त्वदन्यः प्रभुः मम कोऽस्ति ?

सुसमृद्धतुलसीस्रगलङ्कृत ! कावेरीपरिवृत ! श्रीरङ्गधामन् ! मच्छेषिभूत स्वामिन् ! मनसि मे परिशुद्धिलेशोऽपि नास्ति । मुखे स्वादुभाषणमपि नास्ति । निष्कारणक्रोधद्रोहादिनिष्ठापिशुनजल्पितानि मम मुखतः उद्भवन्ति । एवं विधदुर्गुण-भरितस्य मम का गतिः ? अस्मत्स्वामिन् ! कथय ।

भगवन् ! रङ्गनाथ ! तपस्विषु नाहमन्यतमो भवामि । न च कैङ्कर्योपयुक्त धनसमृद्धेषु । मदादृतानां जनानामपि क्षीरनीरवदुपेक्ष्य एवास्मि संवृत्तः । बिम्बफलोपमेयाधरशालिनीनां ललनानामपि वर्जनीयः तस्करो अभूवम् । ईदृशस्य मे जननं सर्वथा निरर्थकमेव भवता निर्मितम् ।

द्विरेफविततिवितन्यमानकोलाहलभरितमहोद्यानालङ्कृत ! श्रीरङ्गधाम्नि विराजमान ! मुदिरसमुदयसधर्मदिव्यमङ्गलविग्रहशालिन् ! दयालो ! भगवन् ! भवत्साक्षात्कारौपयिकसरणिविज्ञानदरिद्रेषु मनुष्येषु अन्यतमः आत्मापहारचोरः मूर्खाग्रणीश्च अहमशरण्यः तवाग्रे तिष्ठामि । सर्वथा विगेयं मम मौर्ख्यम् ।

स्वामिन् ! श्रीरङ्गपृथ्वीपते ! पारमार्थिकानि मनोवाक्कायकृत्यानि सुदूरतः विधूय सुकेशिनीषु एव अभिनिवेश्य, सकलविधैः अनृतैः भरितः कृत्रिमचर्यश्चाहं त्वदीयकृपाबलविस्रम्भभूम्ना समागत्य, तवाग्रतः तिष्ठामि । त्रिकरणतोऽपि मिथ्याचारोऽहं निर्लज्ज एव समागतोऽस्मि ।

मदीयहृदयैकनिलयं भगवन्तं भवन्तं चिन्तयितुं योग्यं मार्गमजानन् आत्मापहारचोरोऽहं त्वदीयदास्येऽन्वयाभिनयमाकलयन् किङ्करवेषधारी वर्ते । जगति तेते जनाः यद्यन्मनसि कलयन्ति तत्सर्वं सहैव अवस्थाय त्वमवगन्तुं प्रभवसीति विदन्नहमतिमात्रपत्रपाभिभूतः स्वात्मनैव स्वात्मानमतीव परिहसामि ।

त्रिविक्रमावतारे विक्रम्य सर्वाण्यपि भुवनानि स्वपदन्यासधन्यानि कृत्वा समाक्रान्तवन् स्वामिन् ! पुण्डरीकाक्ष ! सत्यं शपे त्वदन्यं न कमपि सेवेय । मज्जीवितसर्वस्वभूत परमभोग्यामृत ! मद्भारक ! भूतमहाप्रभो पापी सोऽयं जनः त्वदन्यं न कदाऽपि भावयिष्यति ।

पुरा वासवसृष्टमहावृष्टिकाले गोवर्धनाद्रिमुद्धृतवन् ! महाबलाढ्य ! मधुरनदीनिर्विशेषं सर्वश्रमापहारिन् ! सकलजगन्निदान ! भगवन् ! रङ्गनाथ ! मृगीदृशां दृङ्मयवागुराबद्धम् अत एव भृशं परिक्लिश्यमानं मां न कटाक्षवीक्षालक्ष्यमातनुषे । क्रन्दामि सम्प्रत्यगतिस्तवाग्रे ।

व्यपगतप्रसादया भृशमाविलया कावेर्या परिवृते विराजमानः श्रीरङ्गनाथ एव खलु माता पिता भ्राता इत्याद्युक्तसकलविधबन्धुत्वशाली विराजते। तेन प्रभुवरेण मयि कर्तव्या कृपा स्वल्पीयस्येव। तथापि मां स दयनीयार्भककोट्यां न स्वीकरोतीति महदिदं मे दौर्भाग्यम्।

सह्यजापरिवृत! श्रीरङ्गनगराधिनाथ! प्राकृतजनस्पृहणीयान् लौकिकविषयान् सवासनमुत्सृज्य आत्मस्वरूपयाथात्म्यमवगत्य स्वरूपानुरूपांश्च समाचारानवबुध्य पञ्चेन्द्रियाणि च संनियम्य स्वकीयरक्षाभरं स्वशिरसोऽवतार्य मया त्यक्तं भरं मम शिरसि नाध्यारोपयेथाः त्वमेव भरत्वेन स्वीकुरु इति प्रार्थ्य त्वदायतने निवासमेव समुज्जीवनं मनवानान् स्वकार्यविमुखान् खलु भवान् भक्तमणीनाद्रियते।

भो भगवन् तुलसीमाल्यालङ्कृतमकुटतट! श्रीरङ्गबन्धो! त्वत्कैङ्कर्याननुकूल-जन्मरहितेभ्यः चतुर्वेदपारङ्गतेभ्यः ब्राह्मणेभ्योऽपि, त्वत्पादारविन्दप्रावण्यभरितान् जघन्यजातीयान् क्षोदीयसोऽपि जनान् त्वम् आद्रियसे।

भगवन्! श्रीरङ्गनाथ! श्रीपते! श्रीवत्साङ्क! विशङ्कटपृथिवीमण्डलजाताः जनाः भयानकानि परिहासदुरितानि विरचय्य, घोरपातकिनः सन्तोऽपि भवन्तं हृदि सम्यगवस्थाप्य, दृढाध्यवसायशालिनः यदि भवेयुः ते सत्यं पापफलोपभोगदवीयांस एव स्युः।

अत्यन्तनिहीनदुष्कृत्यानां कर्तारः कारयितारश्च सन्तोऽपि दिविषत् दुर्गमदेवाधिदेवेति, मधुस्यन्दितुलसीस्रगलङ्कृतमकुटतटेति च यदि भक्त्या कथयेयुः तर्हि तादृशा महात्मानः स्वोच्छिष्टान्नप्रदानेन जगतीं पावयितुम् ईशते।

प्राकारपरिवृत! श्रीरङ्गमन्दिराधीश! भगवन्! अनवद्यवंशपरंपराप्राप्त-सदाचारनिष्ठान् चतुर्वेदधरान् विप्रान् प्रति पुरा त्वया कथितं तावत् भो वेदविदग्रेसराः। जघन्यजातीया अपि मद्दास्यप्रवणाः चेत्, तान् यूयं प्रणमत, तेभ्य उपदिशत। तेषा सकाशात् अर्थविशेषान् स्वीकुरुत च। तान् मन्निर्विशेषं पूजयत च इति।

श्रीरङ्गनाथप्रभो! षडङ्गसनाथांश्चतुरो वेदान् सम्यगधीत्य वसिष्ठसमानानां भवतीत्युक्तरीत्या स्वसजातीयेषु समुत्तुङ्गाः सन्तोऽपि यदि भागवतनिन्दापरा भवेयुः तर्हि क्षणमात्र एव ते चण्डाला भवितारः।

श्रीरङ्गनाथभगवन्! गङ्गासमुल्लासिजटाजूटे शिवे चतुरानने च भवद्दिदृक्षया

अनादेः कालात्तप्ततपसोः व्रीडाभिभूतयोः सतोः गजेन्द्रे परमकृपां नित्यसूरिणामपि विस्मयावहां प्रकाशितवन्तं परमदयानिधिं मयि दयाविधुरं च भवन्तं कथमहं शरण्यमाकलयेयम् ?

सुसमृद्धविशुद्धसौधमण्डलमण्डितायाम् उत्तरमधुरानगर्यां व्यापादितकुवलयापीडमत्तमाङ्गं श्रीकृष्णं श्रीरङ्गशायिनमधिकृत्य तुलसीभृत्येन भक्ताङ्घ्रिरेणुना विज्ञापिता सैषा कविता क्षोदिष्ठाऽपि अवद्यभरितापि भगवतः श्रीरङ्गनाथस्य परमभोग्यैव ॥

**तिरुप्पळ्ळियेळुच्चि :**

श्रीभक्ताङ्घ्रिरेणुदिव्यसूरिणा अनुगृहीते दिव्यप्रबन्धद्वितये द्वितीयोऽयं प्रबन्धः । श्रीरङ्गनाथभगवत्सुप्रभातगानगोचरः तिरुप्पळ्ळियेळुच्चीति द्राविडव्यपदेशः । पळ्ळियेळुच्चि इतीदं द्राविडपदं शयनादुत्थापनमित्यर्थकम् । दिव्यप्रबन्धेऽस्मिन् दशपाशुरेषु श्रीरङ्गनाथ, शयनीयादुत्तिष्ठ भोः इति कीर्तनात् अन्वर्थनाम्ना सोऽयं प्रबन्धः । तिरु इति पदं दिव्यप्रबन्धान्तरेषु इव अत्रापि शोभनार्थकम् । यद्यपि श्रीरङ्गनाथभगवद्विषयकोऽयं दिव्यप्रबन्धः तथापि सर्वेष्वपि दिव्यदेशेषु सकलेष्वपि भवनेषु प्रत्यहम् आराधनोपक्रमनियतम् अनुसन्धीयते तिरुप्पल्लाण्डु, तिरुप्पावै, दिव्यप्रबन्धयोः मध्य इति ताभ्यां समानमहिमा सोऽयं वेदितव्यः । भगवतः शयनादुत्थापनम् इत्यस्मिन् विषये काचन शङ्का भवितुमर्हति प्राकृतानाम् अस्मादृशाम् । सदा प्रबुद्धस्य भगवतः निद्रासक्तिरेव नास्ति । निद्रा च तमोगुणकार्यभूता, सा परमसत्त्वसमाश्रये परमपुरुषे सम्भवितुं नार्हति च । एवं च सति शयनादुत्तिष्ठेति प्रबोधनस्य कास्वित्प्रसक्तिरिति अत्रोच्यते - अर्चावतारे भगवतः क्रियमाणा उपचारा राजोपचारसधर्मण इति पाञ्चरात्रशास्त्रप्रणाली । लोके वन्दिनो राज्ञां शयनभवनात् बहिरवस्थाय अवनमदखिलमहीमण्डलमण्डनायमानमहीपतिमकुटतटहीरमणि-प्रभापुञ्जमन्दाकिनीपयः पूरप्रक्षालितपादारविन्दयुगल-महाप्रभो! जागृहि, तव सुप्रभातम् इति गायन्ति समुत्थापनगद्यपद्यानीति प्रसिद्धमेतत् । अनयैव प्रक्रियया भगवानापि समुद्बोध्यत इति न किञ्चिदनुपपन्नम् । एतदेव

***तमेव मत्वा परवासुदेवं रङ्गेशयं राजवदर्हणीयम् ।***

इति मुखपद्यतोऽपि विशदीकृतम् । वस्तुतः विभवावतारेषु

*कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते ।*
*उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ।।*

इत्यादितः प्रबोधनस्य प्रसिद्धत्वात् तदनुकरणम् अर्चावतारे न विप्रतिपत्तियोग्यमिति ध्येयम् ।

भो भगवन् ! श्रीरङ्गनाथ ! भास्करः प्राच्यां दिशि उदयशिखरि शिखरमाससाद । सान्द्रं तिमिरं व्यीलयत । प्राभातिकीश्रीरुदियाय । श्रेष्ठानि सर्वाण्यपि पुष्पाणि विकचानि मधुस्यन्दिनी भवन्ति । राजानश्च अहमहमिकया समेत्य, संघीभूय, प्राथमिक कटाक्षवीक्षालाभाय पुरतः अवतिष्ठन्ते सकलमपि अवकाशमाक्रम्य । एतैस्सह प्रविष्टाः वाहनभूताः करिणश्च करिण्यश्च मुरजाादिवाद्यवर्गाश्च उत्तरङ्गतरङ्गमालिनिर्विशेषं मुखरा भवन्ति । अतश्च शयनं विसृज्य, स्वामिन् ! कृपया समुत्तिष्ठ ।

भगवन् ! श्रीरङ्गनाथ ! दिक्षु विदिक्षु च भास्करकिरणाः प्रसृमरा अभवन् । सान्द्राणामुडुगणानां तेजः विलिल्ये । उडुपतिश्च प्रहीणतेजा अभवत् । विस्तृतं तिमिरमपाहीयत । प्राभातिकः पवनः सुकुमारोपवनविलसत्पूगवृक्षस्थपाळीषु प्रविश्य, तत्सौरभसम्भृतः पवते । पराभिभवननिपुणतेजःपुञ्जहेतिराजालङ्कृत-पाणितल । प्रभो ! करुणया शयनादुत्तिष्ठ ।

भो भगवन् ! श्रीरङ्गनाथ ! उत्तुङ्गबालमहिषीणां बन्धोन्मोचनावसरे वल्लवैराध्मातस्य वेणोः निनदः वृषभकण्ठस्थघण्टाध्वनिश्च संसृज्य दिगन्तव्यापृतोऽभूत्, केदारेषु भ्रमरविततिः सरीङ्कारमुत्तस्थौ सर्वतः । रक्षोगणसमूलोन्मूलनविचक्षणशार्ङ्गपाणे देवाधिदेव । विश्वामित्रयागसंरक्षणेन तदवभृथस्नानप्रपूरक ! महावीर ! साकेतपुराधिनाथ ! शयनमुत्सृज्य समुत्तिष्ठ करुणया ।

समृद्धकुसुमहोद्यानेषु पक्षिणः प्रबुध्य कलकलमातन्वते । प्राच्यां दिशि घुष्यतस्सागरस्य समुद्घोषस्सर्वतो व्यापृतः । मधुकरस्वरविचित्रमालाहस्ता अमराः त्वत्पादारविन्दसेवायै समुपस्थिताः । अतश्च लङ्केश्वरविभीषणपरिचर्यास्पद श्रीरङ्गविमानशायिन् अखिलजगत्स्वामिन् अस्मत्स्वामिन् श्रीरङ्गनाथ । कृपया जागृहि ।

विलक्षणबृहत्तरस्यन्दनसनाथा द्वादशादित्या इह समाययुः । जगन्निर्वाह धुरन्धरा एकादशरुद्राश्चात्र समुपागताः । बर्हिवाहनः षण्मुखश्चात्र समुपस्थितः ।

नव मरुद्गणा अष्टौ वसवश्च अहमहमिकया समेत्य सान्द्रस्सन्ति । एषां वाहनभूता वाजिसनाथा रथाश्च तिष्ठन्ति । गीतनृत्तान्विता देवसेनासमूहाश्च बृहत्तरगिरिवर- सन्निभ- तावकमन्दिरे पुरतः अवतिष्ठन्ते । भगवन् रङ्गनाथ । करुणया जागृहि ।

अस्मत्स्वामिन् ! तावकीनदिव्यालयद्वारि देवेन्द्रः स्वकीयवाहनभूतेन ऐरावतेन गजराजेन साकं समायातः । सपरिवारा अण्डान्तर्वर्तिनः देवाः महातपस्विनः सनकादिमहर्षयः मरुद्गणाः यक्षाः गन्धर्वाश्च मिथस्सङ्घर्षसमुत्पादकास्सन्तः त्वत्पादारविन्दसेवाहेवाकेन व्यामुग्धा वर्तन्ते । द्यावापृथिव्यौ निरवकाशलेशे वर्तेते । श्रीरङ्गनाथ । कृपया जागृहि ।

भगवन् ! श्रीरङ्गनाथ ! भवते समर्पयितुं सौरभसमृद्धानि दुर्वादलानि शङ्खनिधिपद्मनिधिप्रमुखानुत्तमनिधीन् कामधेनुं रमणीयं मुकुरम्, अन्यान्यन्यानि च दृश्यानि मङ्गलद्रव्याणि समाराधनोपकरणानि च समादाय देवा महर्षयः तुम्बुरुनारदादयश्च समुपस्थिताः । भास्करश्च स्वकीयगभस्तिविततीर्विश्वतः प्रसार्य प्रादुर्बभूव । तिमिरं चाम्बरतलादपगतम्, स्वामिन् करुणया जागृहि ।

भो भगवन् ! निरवद्यान् लघुपटहान् एकतन्त्रीवाद्यमृदङ्गवीणामुरलीश्च दिगन्तविसृत्वरनिनदशालिनीः कुर्वन्तो गायकोत्तमाः किन्नराः गरुडाः गन्धर्वाश्चात्र समुपागताः । अन्ये च महर्षयः देवाश्चारुणा यक्षाः सिद्धाश्च भवत्पादारविन्द- प्रणिपाताय कृत्स्नायामपि रजन्यां सङ्घीभूय व्यामुग्धा अवतिष्ठन्ते । ततश्च एतेभ्यः तदाशिशिरित दिव्यदर्शनानुग्रहणाय श्रीरङ्गनाथकृपया जागृहि ।

सह्यजातीर्थपरिवृत ! श्रीरङ्गनाथ ! सुरभीणि कमलकुसुमानि पुष्कलविकासं दधुः । भास्करश्च उदयशिखरिणः शिखरमासीदति स्म । कृशोदर्यो ललनाश्च स्नात्वा केशपाशानुपशोष्य धृतचेलाः प्रस्थिताः । ग्रथितया तुलसीस्रजागर्भितं पुष्पकण्डोलं भुजमूले बिभ्राणमुपगतं भक्ताङ्घ्रिरेणु नामानं दासमिमं दयनीयोऽयम् इति धिया अङ्गीकृत्य, त्वद्भक्त भक्तमाकलयितुं परमकृपया शयनात्समुत्तिष्ठ । इति सुप्रभातदिव्यप्रबन्धः ।

***श्रीभक्ताङ्घ्रिरेणुमुनीन्द्रचरणौ शरणम् ।***

**तिरुप्पाणाल्वार्चरितम्**

***श्रीलोकसारङ्गमहामुनीन्द्र स्कन्धाधिरूढं कलयामि नित्यम् ।***
***कलङ्कहीनं कमनीय भक्तिं कवीश्वरं गायकसार्वभौमम् ॥***

*दुर्मत्यब्दे कार्तिकाख्ये मासे राकामहतिथौ ।*
*रोहिण्यां सौम्यवारे तु श्रीपाणो निचुलापुरे ।।*

*कावेरीतटनिचुलापुरेऽन्यवंशे*
*रोहिण्यां विलसति वृश्चिके अवतीर्णम् ।*
*श्रीवत्सांशजमहिशायि भक्तिभाजं*
*पाणाख्यं परमुनिवाहनं प्रपद्ये ।।*

*कार्तिके रोहिणी जातं श्रीपाणं निचुलापुरे ।*
*श्रीवत्सांशं गायकेन्द्रं मुनिवाहनमाश्रये ।।*

उरैयूल् नाम निचुलापुरे कावेरीनदीतीरे रोहिणीनक्षत्रे, वृश्चिकलग्ने, बुधवासरे, पूर्णिमातिथौ, कार्तिकमासे दुर्मतिनामसंवत्सरे कस्मिश्चित् ब्राह्मणक्षेत्रे व्रीहिगुच्छात् श्रीहरेः आज्ञया श्रीवत्सांशेन संजज्ञे श्रीपाणदिव्यसूरिः । अयोनिसम्भवः श्रीपाणसूरिः बाल्ये पञ्चमवर्णे ववृधे । श्रीमन्नारायणः यं पुरुषं अनुग्रहिष्यति सः सात्त्विकः, विज्ञेयः, मोक्षार्थचिन्तकः स्यात् । तथैव श्रीपाणसूरिः जायमानभगवत्कटाक्षेण प्रह्लाद इव बाल्यात्प्रभृति सत्तमः, सुस्निग्धः, सञ्जातज्ञान-वैराग्यः, जन्मसंसिद्धवैष्णवश्च अभवत् । विशेषतः विष्वक्सेनकृपावशात् सम्प्राप्तपञ्चसंस्कारः, विदिताखिलतत्त्वधीः, निवृत्तसंसारः, महाभागवतोत्तमः आसीत् ।

भागवद्ध्यानैकतत्परः श्रीपाणसूरिः कावेरीतीरमाश्रित्य, भगवद्गुणान् कीर्तयन् अनुदिवसं महागान्धर्वमाश्रितः व्यतिष्ठत । महातेजाः श्रीपाणसूरिः निचलापुरे भगवद्ज्ञानतत्परः, भगवद्गानविद्यानां सार्वभौमः कृताधिवासः संरेजे । सामगानरतात्मनां देवगानेन सत्तमः श्रीपाणः नित्यसूरिरिव भाति । पुण्यचारित्रो सः श्रीमान् भगवत्प्रियः स्ववर्णोचितं धर्मम् आचरन् दिव्यगानेन श्रीरङ्गनाथं गायन् निश्चलमानसः सानन्दबाष्पः, सततं निर्भरः, पुलकाङ्कितः सदा हरेः नामसङ्कीर्तनरसामृतास्वादविस्मृतः गानेन रङ्गेशाभिमुखं स्थितः । कावेरीद्वयमध्यस्थं अतिपावनं श्रीरङ्गं ज्ञानदृष्ट्या विलोक्य, कावेरीसैकते श्रीरङ्गेशं ध्यायन्, निरन्तरं तन्मयत्वेन चेतसा आसीत् । तत्र कश्चिन्महायोगी सारङ्गाख्यः नित्यं श्रीरङ्गराजस्य कैङ्कर्यं कुर्वन् स्थितः । एकस्मिन् दिने सारङ्गयोगीन्द्राः स्वर्णकुंभमादाय कावेरीतोयं गृहीतुकामः तत्तीरमभ्यगात् । तदन्तिकस्थं, भगवत्परं श्रीपाणसूरिम् आलोक्य, दुरतः

गच्छ, गच्छेति अवोचत् । अज्ञातबाह्यव्यापारः, तन्मयत्वेन चेतसा तूष्णीभूतः समास्थितः तद्वचः नाशृणोत् श्रीपणसूरिः । श्रीरङ्गवासिनः वर्णधर्मपराः केचित् ब्राह्मणाः कावेरीतटे विष्णुं गायन्तं श्रीपाणसूरि मतङ्गं मत्वां, तं दूरतः गच्छ गच्छेति ऊचुः । श्रीभगवद्गुणानुभवकैङ्कर्यजितबाह्येन्द्रियः श्रीपाणमुनिः तदज्ञातवचसः सुनिश्चलः तुष्णीं स्थितः । ततः कोपेन भूसुराः श्रीपाणस्यं माहात्म्यमज्ञात्वा, तं प्रति शिलाः प्रचिक्षिपुः । दृढमनस्कः श्रीपाणसूरिः शिलाभिः जर्झरीकृतसर्वाङ्गः भगवद्भक्तिपारवश्येन निश्चलः अतिष्ठत् । जितबाह्येन्द्रियं मुनिं निश्चलं श्रीपाणं दृष्ट्वा किमेतदिति विस्मितचेतसः ते सर्वे बिभ्युः । दृढव्रतः श्रीपाणमुनिः सम्यक् समाप्तगीतः, जितक्रोधः स्वाश्रमं प्राप । श्रियःपतौ न्यस्तभारः तेषां शिलाप्रहारेण न काञ्चिदपि व्यथां उपरतः क्रोधः अगात् । तेन श्रीरङ्गनाथस्यैव महती व्यथा सञ्जाता । भक्तान्तर्यामिणः तस्य ललाटे रक्तं सुस्राव । तद्विलोक्य अर्चकाः विस्मितमानसाः बिभ्युः । तदानीं तद्देशभूपालः श्रीरङ्गनाथस्य स्थितिं दृष्ट्वा भीतः सन् दुर्मतेः मम दोषेण एतत् सञ्जातमिति मत्वा, दोषस्य कारणं किमिति पण्डितैः साकं मन्त्रयामास । तदानीं श्रीरङ्गनाथः सारङ्गयोगिनः स्वप्ने प्रसन्नः प्रत्यभाषत हे ब्राह्मणोत्तम ! मम भक्तं श्रीपाणं निकृष्टमिति न चिन्तय । भवतः भुजस्कन्धाभ्यां तं वहन् भक्त्या मत्सविधिं प्रापयस्व इति । ततः सारङ्गमुनिपुङ्गवः स्वप्नात् समुत्थाय अद्य मे जन्म सफलमिति मत्वा, अद्भुतं स्वप्नवृत्तान्तं सत्यमिति मत्वा, यथाशास्त्रं स्नातः शुचिः अलङ्कृतः नित्यकृत्यानां समाप्त्यनन्तरं श्रीपाणयोगिनः सविधिं संप्रतस्थे । यत्र भागवतः स्थितः सुदूरमपि तत्र गन्तव्यं खलु । श्रीरङ्गस्यातिदूरे कावेर्याः तटे एकान्तप्रदेशे भगवद्गुणान् तन्मयत्वेन गायन्तं, गुणानुभवसञ्जातमहानन्दाश्रुवारिभिः सम्यक् संसिक्तसर्वाङ्गं पुलकाङ्कितविग्रहम् अज्ञातबाह्यवयापारं, हरौ विन्यस्तमानसं भागवतोत्तमं श्रीपाणयोगीन्द्रं दृष्ट्वा, तत्पादपद्मयोः साष्टाङ्गं दीर्घप्रणामं चक्रे । एवं बहुलः प्रणम्य, सत्कृत्य, स्वप्ने श्रीरङ्गनाथेन यदुक्तं तत् सर्वं तस्मै न्यवेदयत् । श्रीपाणयोगिः प्रथमं स्वनैच्यानुसन्धां कृत्वा, सारङ्गयोगिनः शुभकरवचनानि श्रुत्वा, आर्य, मातङ्गोऽहं, उत्तमं श्रीरङ्गं पद्भ्यां स्प्रष्टुं नार्हामि । अतः प्रवेष्टुं नोत्सहे इत्युक्तवान् । तद्वाक्यं श्रुत्वा सारङ्गयोगिः एवमब्रवीत् - अतश्चेत् दासस्य मम स्कन्धाधिरोहणं कुरु यथा श्रीरङ्गनाथास्य दिव्याज्ञा तथैव क्रियताम् । आवयोः नैवोल्लङ्घ्येया इति । तद्वचननमाकर्ण्य भगवत्परः श्रीपाणयोगिः कृताञ्जलिः न्यस्तभरः परतन्त्रः समास्थितः । तदानीं सारङ्गयोगीन्द्रः भगवत्प्रियः श्रीरङ्गनाथं खगराडिव श्रीपाणयोगनिं

स्वभुजस्कन्धाभ्यां उवाह । पश्चात् ब्राह्मणाः पुरतः वैष्णवाश्च श्रीरङ्गनाथस्य शासनात् मन्त्रोच्चारणं कृतवन्तः । मुक्तपुरषमातिवाहकः समरस्तवैभवैः वैकुण्ठे, मणिमण्टपं यथा गमयेत् तथा सारङ्गयोगीन्द्रः श्रीपाणयोगनं महता वैभवेन श्रीरङ्गे शन्तनुमण्टपं निनाय। श्रीरङ्गनाथस्य शासनात् सम्यक् प्रदक्षिणं कृत्वा भगवत्सन्निधिं चागमत् । दयानिधिः श्रीरङ्गनाथः तस्मै श्रीपाणाय आत्मीयं दिव्यमङ्गलविग्रहं दर्शयामास। किरीटकेयूरसुवर्णकुण्डलप्रलम्बमुक्तामणिहेमभूषणं, विशालवक्षःस्थल-शोभिकौस्तुभं, श्रियालङ्कृतं विशालवक्षःस्थलं प्रतप्तचामीकरचारुवाससं पीताम्बरं, सुमेखलाशोभिकटिं, सुवर्धुनीजातमृणालकमलं यज्ञसूत्रकं दधानं, भुजोपधानप्रसृताान्यहस्तं, निकुञ्चितोत्तनितपादयुग्मं, सुदीर्घसद्बाहुमुदग्रवेषं, भुजङ्गतल्पं पुरुषं ददर्श । एवमुक्तप्रकारेण ब्रह्मादिनिखिलैः सुरैः इक्ष्वाकुप्रमुखैः सर्वैः भूपैश्च परिपूजितं, श्रीरङ्गे शेषशय्यायां शयानं श्रीरङ्कनाथं भक्तितत्परः श्रीपाणः सम्यक् दृष्ट्वा, आपादमस्तकं संसेव्य, श्रीरङ्गनाथस्यावयवसोदर्न्यं ज्ञात्वा, भक्तिभावेन श्रीरङ्गनाथस्य पादपद्मयोः सञ्जातप्रीतिमानभूत्। शिशुः स्तन्यपानेच्छया सर्वानवयवान् विहाय, मातुः स्तनमेव यथा गृह्णाति तथा श्रीपाणः श्रीरङ्गनाथस्य पादपद्मयोः भक्तिमानभूत् । शेषभूतस्य जीवात्मनः शेषिसम्प्रप्तये प्रथमं भगवत्पादपङ्कजमेव अवतरणतीरम् । पादादिकेशपर्यन्तं दिव्यमङ्गलविग्रहं श्रीपाणः भक्त्या अनुभूय, तदनुभवसञ्जातप्रेमातिशयहेतुना तमेवार्थं समुद्धृत्य, रङ्गेशानुभवोद्भवं संगृह्य जगत्संरक्षणाय दशपाशुरैः अमलनाथाख्यं द्राविडं प्रबन्धं चकार। एवं प्रबन्धम् आशु कृत्वा भगवत्परः श्रीपाणः निर्व्याजकृपया सग्यक् जगत्सर्वमपालयत्। तस्मिन् ग्रन्थे श्रीरङ्गेशः, श्रीवेङ्कटेशश्च स्तुतौ । लोकसारङ्गयोगीन्द्रप्रमुखाः सकलाः जनाः भक्त्या श्रीपाणमाश्रित्य कृतार्थाः अभवन् । तदा सर्वेषां पश्यतां समुखे श्रीपाणः श्रीरङ्गेशपदपद्मयोः भक्त्या, नित्यकैङ्कर्यवाञ्छया रङ्गेशपदपद्मयोः विलीनः। अद्यापि श्रीरङ्गनाथस्य चरणकमलयोः नित्यकैङ्कर्यनिरतः श्रीपाणः परिदृश्यते । महत्तरं तदद्भुततमं दृष्ट्वा जनाः विस्मितः चकिताश्च। पुण्यं श्रीपाणचरितं ये शृण्वन्ति पठन्ति च ते सर्वेऽपि पापविमुक्ताः सन्तः परमपदं यास्यन्ति ।

*श्रीवत्सांशमुपागतः कलियुगे चोलावनौ ब्राह्मण-*
*क्षेत्रे श्रीनिचुलापुरे समभवद्यो व्रीहिगुच्छे महान् ।*
*पञ्चाशद्भुवि वत्सरान्व्यपनयत् रङ्गेशपादाब्जयोः*
*वीणापाणिरुदञ्चत प्रतिदिनं तं पाणदेवं भजे ।।*

**अमलनादिपिरान्**

श्रीपाणसूरिः नाम मुनिवाहनसूरिवरेण दशपाशुरात्मकः दिव्यप्रबन्धः एकः एव अन्वग्राहि। अस्य ग्रन्थस्य अमलनादिपिरान् प्रबन्धः इति आख्या प्रथते। अस्याः आख्यायाः अर्थः कः इत्युक्ते, प्रकृतप्रबन्धोपक्रमस्थपदराशिप्रकाशनरूप-सङ्केतसिद्धा सेयं समाख्या। सोऽयं प्रबन्धः अमलनादिपिरान् इति उपक्रमशालीति हेतुना उपक्रमसङ्केतव्यपदेशनिबन्धना सेऽयं समाख्या युक्ता भवति। श्रीमधुरकविप्रणीतस्य कण्णिनुण्शिरुत्ताम्बु इति एषः व्यपदेशः अपि एतादृश एवं इति अवगन्तव्यम्। सोऽयं दिव्यप्रबन्धः चतुस्सहस्रदिव्यप्रबन्धवर्गे प्रथमसहस्रे नवमत्वेन परिगणितः। भगवतो श्रीरङ्गनाथस्य पादादिनेत्रान्तकतिपयदिव्यावयव-सौन्दर्यानुभवपरीवाहरूपेण अवतीर्णः अयम् अमलनादिपिरान् दिव्यप्रबन्धः। परमभक्तानां नित्यानु-सन्धेयप्रबन्धेषु अग्रिमं स्थानमलङ्करोतीति अनुभवरसिकाः विजानन्ति। अस्मिन् दिव्यप्रबन्धे श्रीरङ्गनाथः श्रीवेङ्कटाद्रिनाथश्च उभावेव दिव्यदेशस्वामिनौ कीर्तितौ। श्रीरङ्गनाथस्य कीर्तनमेवात्र प्रधानम्, अन्यत्तु उपसर्जनभूतमिति वेदितव्यम्।

अखिलहेयप्रत्यनीकस्य निखिलजगदेकनिदानस्य महोपकारकस्य, भागवतशेषतां मयि समुत्पाद्य, जाज्वल्यमानस्य नित्यसूरिपरिषन्निर्वाहकस्य सुरभिमहोद्यान परीतं श्रीवेङ्कटाद्रिमधितिष्ठतः आश्रयणदुष्करत्वादिदोषवैदेशिकस्य श्रीवैकुण्ठनिकेतनस्य समुत्तुङ्गप्राकारश्रेणिपरिवेष्टिते श्रीरङ्गनामनि धामनि शयानस्यप्रभोः पादकमले स्वयमागत्य मम दृशोः अन्तः अवतिष्ठेते।

महाबलिसविधे त्रिपदपरिमितभूतियाचनामात्रे दानधारोदकप्राप्त्या हर्षप्रकर्षमेदुरान्तःकरणतया जगत् अतिक्रम्य अण्डकटाहावधि संमुच्छ्रितमकुटतटस्य, समुद्धूतनिशाचरनिकरविनाशनविशारदपरुषसायकस्य काकुत्स्थस्य सुरभिमहोद्यान-परीतश्रीरङ्गधामनाथस्य कटितटभूषणभूतदिव्यपीताम्बरे मम चिन्तना निविशतेऽस्म।

उत्प्लवनक्रीडासंसक्तशाखामृगसङ्कुले श्रीवेङ्कटाद्रौ नित्यसूरिभिः आराध्यमानस्य, श्रीरङ्गे भोगिभोगशयनीयशायिनश्च महाप्रभोः सन्ध्यासमरोचिषि दिव्यपीतवाससि विरिञ्चोत्पत्तिहेतुभूतदिव्यनाभिकमले च खलु ममान्तरात्मा अवजगाहे।

चतुरश्रसमुत्तुङ्गप्राकारपरिवेष्टितङ्कानगराधिनाथस्य दशकन्धरस्य शिरांसि दश विनाशयितुमद्वितीयमस्त्रं प्रयुक्तवतः सागरसवर्णस्य मधुकररीङ्कारमयूर-ताण्डवभरितवनालीपरिवृतश्रीरङ्गधामनाथस्य भगवतः उदरबन्धनाभिधानं दिव्यभूषणं मम हृदयाभ्यन्तरे विहरति।

दुर्भरभारायितानादिदुरितसञ्चयग्रन्थिसन्बन्धप्रणाशनपूर्वकं मम स्वस्मिन् प्रावण्यभूमानमुत्पादितवतः मच्चेतसि च प्रविष्टस्य श्रीरङ्गनाथस्य दिव्यमौक्तिकमालिकालङ्कृतं श्रिया अध्युषितं च वक्षःस्थलं हि मां स्वायत्तीचकार हा हन्त न जाने किं नु मया घोरं तपस्तप्तम् ।

शुभ्रचन्द्रकलाधरमौलेर्महादेवस्य गुरुपातकविपद्विमोचनविचक्षणः सुन्दरच्छदचञ्चरीकझङ्कमहोद्यानपरिवृतश्रीरङ्गक्षेत्रस्वामी च यो भगवान्, तस्यैतस्य देवदेवस्य अण्डान्तर्वर्ति देवादिषण्डं बहिरण्डबृन्दं महापृथिवीं सप्तकुलाचलान् अन्यदन्यच्च अखिलमास्वादितवान् दिव्यकण्ठः खलु दासमिमं जनमुदजीवयत् ।

दिव्यपाञ्चजन्यज्वालाचूडालहेतिराजपरिकर्मितपाणितलस्य महत्तरमहीधरोपमदिव्यमङ्गलविग्रहशालिनो दिव्यतुलसीसौरभसंभृतसमुत्तुङ्गमकुटतटस्य च अस्मत्स्वामिनः फणिपतिशय्यामधिशयानस्य अत्यद्भुतचेष्टितस्य श्रीरङ्गनाथस्य विद्रुमसमः दिव्याधरः मम हृदयमाचकर्ष ।

भक्ताग्रेसरप्रह्लादहिंसनतत्परस्य स्थूलवपुषः हिरण्यकशिपुनाम्नः असुरस्य वर्ष्म विदारितवतः, ब्रह्मादीनां देवानामपि सुदुर्लभस्य जगन्निदानस्य महोपकारकस्य परमपावनस्य च श्रीरङ्गधुरन्धरस्य दिव्यमुखमण्डले विराजमानं श्यामवर्णविशालप्रभापुञ्जमञ्जुलरक्तरेखाविभूषितसुदीर्घमहत्तरदिव्यलोचनद्वन्द्वं हा हन्त माम् उन्मत्तमाततान ।

न्यग्रोधमहीरुहदलपुटे सप्तलोकी धरडिम्भवपुषा शयानस्य फणिपतिडोलिकातलिमशयस्य च श्रीरङ्गभर्तुः महनीयमनोहररत्नखचितहारावलीभिः मौक्तिकस्रग्विततिभिश्च विभूषितः अद्वितीयसौन्दर्यनिधिः श्यामलः दिव्यमङ्गलविग्रहः हा हन्त मम हृदयस्य धीरतामपाहरत् ।

नीलमेघनिभं गोपालडिम्भवपुषा समास्वादितनवनीतगन्धिमुखारविन्दं मदीयहृदयापहारकं नित्यसूरिपरिषन्नियामकं श्रीरङ्गनायकं मदीयदिव्यामृतं दृष्ट्वौ मम दृशौ नान्यत्किमपि वस्तु द्रष्टुमुत्सहेयाताम् ।

**तिरुमङ्गै आल्वार्चरितम्**

चोलदेशे अविनाडिति विख्यातः कश्चित् देशः अस्ति । तत्र नागपुरीक्षेत्रं भाति । तत्र शङ्खमुखं नाम पुण्यस्थानं विश्रुतमंस्ति । तस्य पश्चिमदिग्भागे

क्रोशत्रयविदूरतः महापुण्यप्रदं बिल्वारण्यमस्ति। तत्र दिव्यरूपकं नृसिंहपञ्चकं वर्तते। सैव जगतीतले परिरम्भपुरीति विश्रुता। समुद्रस्य पश्चिमे तीरे कावेरीनद्याः तीरे परिरम्भपुरी वर्तते। तदन्तिके कमलरमणाक्षिविभ्रमैः कटाक्षवीक्षणैः परिपूर्णवैभवैः कमलापूर्णपुरी अस्ति। परिरम्भपुरकमलानगरयोर्मध्ये महत्तरम् अन्यूननगरं विद्यते। तत्र वसतां कदापि न्यूनता नास्ति। तत्र जितारातिः महायशाः अविनाडुडयाराख्यः दण्डधानिकभूपतिः अस्ति। तस्य कार्तिकमासे विष्णोः शार्ङ्गांशतः लोकसंरक्षणार्थाय चतुष्कविः जज्ञे। तत्कालनिर्णयं वक्ष्यते -

*कल्यब्दानां गते सप्तदशोत्तरशतद्वये।*
*नलाब्दे कार्तिके मासे राकायां कृत्तिकोडुनि॥*
*चतुर्थवर्णे संजज्ञे शार्ङ्गांशाद्गुरुवासरे।*
*परकालो महातेजाः चतुष्कविशिखामणिः॥*

अवतारश्लोकाः एवं श्रूयन्ते -

*समजायत तत्र पादजः प्रमुखः कश्चन नीलनामकः*
*पुरुषोत्तमकार्मुकांशजः स्पुरिते कार्तिककृत्तिकोडुनि॥*

*कार्तिके कृत्तिकाजातं चतुष्कविशिखामणिम्।*
*षट्प्रबन्धकृतं शार्ङ्गमूर्तिं कलिहमाश्रये॥*

*चतुर्थवर्णेऽच्युतशार्ङ्गशक्त्या कृतोदयं कार्तिककृत्तिकायाम्।*
*रङ्गेशकैङ्कर्य तरङ्गितांशं चतुष्कवीन्द्रं शरणं प्रपद्ये॥*

पित्रोः आनन्दः सुन्दराङ्गः महीभुजः महातेजाः परकालः उदितः बालसूर्य इव अवर्धत। सम्प्राप्तयौवनः सर्वशास्त्रविचक्षणः राजसेवापरः परकालः वर्धते। तेजास्विनं महात्मानं दीर्घबाहुं महामतिं जितारातिं नीतिशास्त्रविशारदं परकालं विलोक्य विस्मितः चोलभूपतिः जिष्णवे कलिवैरिणे आधिपत्यं प्रददौ। महायशाः परकालः सर्वान् धर्मेण पालयन् प्रजारञ्जनतत्परः चोलराजप्रियः तस्थौ। परकालः जनैः नित्यं ग्राम्यसुखेन सादरं क्षिपन्, वारस्त्रीवरनाट्यलोलनयनः, सङ्गीतसक्तश्रुतिः, अज्ञातात्मविचारणः, खलरतिस्स्वच्छन्दवृत्तिः परम्, शौर्यपराहताखिलरिपुः नरेन्द्राश्रयः नीलः रेजे।

तस्य नागपुरस्य वायव्यां दिशि क्रोशमात्रेण कश्चित् श्वेतहृदः विश्रुतः विद्यते।

पुल्लपङ्कजशोभितः तस्य तटाकस्य तीरे विष्णुः संराजते स एव श्वेतह्रदे शान्तमूर्तिः इति गीयते । पुण्यं श्वेतसरः अपङ्कजं, पङ्कजावृतं, शुद्धं, गम्भीरम्, अतिविसृतम्, अमृततमं, मानससरोवर इव अप्सरगणसङ्कीर्ण भवति । जलक्रीडेच्छया स्वर्गात् समागत्य अमराङ्गनाः तस्मिन् सरोवरे सम्यक् जलक्रीडां विधाय, विष्णोः कुमुदापचयं कुर्वन्तीमेका देवकान्तां विहाय स्वर्गं ययुः । सा देवकान्ता देवतारूपं विहाय मानुषं रूपमास्थिता, तटाकतीरे एकैव चचार । तदा नागपुर्याः एकः भिषग्वरः वैष्णवः यदृच्छया तत्रागतः तां वराङ्गनामपश्यत् । वात्साल्यात् तामवलोक्य शुभं वचः व्याजहारः - कमलपत्राक्षि ! कलभाषिणि ! कन्यके ! का त्वम् ? एकैव तटाकतीरे किमर्थं वर्तसे ? इति । तद्वाक्यं समाकर्ण्य, तां पुत्रिकामिव वीक्ष्य, वात्सल्यात् अब्रवीत् - यदि भवती मया मन्नगारमागतवती सर्वथा आत्मजामिव रक्षेयम् । न संशयः इति । वैद्यवचनमङ्गीकृत्य सा तत्पुरं गन्तुं संसिद्धा । अनपत्यत्वात् स वैद्योऽपि आदरात् तामादाय नागनगरं गृहमागत्य, प्रहृष्टनानन्तरात्मना भार्या हस्ते ददौ । तस्याश्चापि अनपत्यत्वात् तां कन्यां प्रतिगृह्य स्वात्मजामिव सादरं ररक्ष । कुमुदं ददातीति तस्याः कुमुदवल्ली इति नामकरणं चकार भिषग्वरः ।

भिषग्वरः भागवतोत्तमः सञ्जातयौवनां, साध्वीं, जितदेवाङ्गनाश्रियं दृष्ट्वा, अज्ञातकुलगोत्रैषा रूपतः रम्भेव भाति । गुणवती एषा कस्मै प्रदेयेति अचिन्तयत् ।

प्रियंवदाः नीलस्य चाराः केचित् तस्याः कुमुदवल्ल्याः रूपलावण्यसम्पदः तस्मै कलिवैरिणे सम्यगावेदयांश्चक्रुः । चारैः बहुशः श्लाघयित्वोक्तं सम्यक् निशम्य, तदद्भुतलावण्यं द्रष्टुकामः चतुष्कविः राजकार्याणि विनिधाय कृतत्वरः तत्क्षणेन तत्रत्यैः अभिसंवृतः स्वपुरात् नागपूरीं गत्वा, भिषग्राजस्य वेश्मनि तेन सम्मानितः, कृतासनपरिग्रहः, तेन भागवतेन संभाषमाणः सुरसुतोपमां तत्सुतां तां बालां अपश्यत् । तां दृष्ट्वा अत्यन्तं संप्रहृष्टः चतुष्कविः विस्मितः, तं भागवतं भिषग्राजं प्रीत्या एवमब्रवीत् - भिषग्वर ! अनपत्यस्य भवतः इयं कन्या कस्मादागता ? तत्कारणं मे वद । श्रेतुमिच्छामि इति । भिषग्वरः तत्सर्वम् कलिवैरिणे सम्यक् निवेद्य, ममानपत्यतादोषः अनया परिहृतः । अज्ञातकुलगोत्रैषा कन्यका, वरवर्णिनी, कल्याणगुणसंयुक्ता कस्य भार्या भविष्यति ? इति व्याकुलचित्तो अभवत् । तन्निशम्य, प्रहृष्टः परकालः वैष्णवं भिषग्वरं सद्वाचाम्बरभूषणैः सुसंपूज्य, पत्न्यर्थं भिषग्राजसुतां वरयामास । तद्वचनं श्रुत्वा भिषग्वरः भार्यया सह संप्रहर्षितः तां कन्यां श्रीमते कलिवैरिणे प्रदातुमैच्छत् ।

कुमुदवल्ली पित्र्योः प्रयत्नं निशम्य, परकालस्य सन्निधौ पितरौ प्रति एवमवोचत् ।

तापः, पुण्ड्रः, दास्यनाम, मन्त्रः, तिरुवाराधनं च अमी पञ्चसंस्काराः पारमैकान्त्यहेतवः। एवमुक्तप्रकारेण पञ्चसंस्कारसंस्कृतं श्रीवैष्णवं विना अन्यं कदाचन न वृणेऽहम्। इति। महामतिः परकालः एतमध्यवसायं सम्यक् ज्ञात्वा, शुभस्य शीघ्रमित्युक्त्वा नागपुर्याः श्रीनिवासस्थलं संप्रतस्थे। श्रीनिवासस्थले पूर्णं नत्वा, तत्सन्निधौ अग्नितप्तेन, शङ्खेन चक्रेण भुजमूलयोः तेन पूर्णेन हरिणा सम्यक् कृतलाञ्छनः धृतोर्ध्वपुण्ड्रः श्रीवैष्णवदिव्यचिह्नैः कुमुद्रवल्ल्याः सन्निधिं गतवान्। साध्वी सा कुमुदवल्ली तं वैष्णवं विलोक्य भूयः एवमब्रवीत् - दिने दिने अष्टोत्तरसहस्रेभ्यः वैष्णवेभ्यः षड्सैः भोजनं दत्वा, सदक्षिणं, सतांबुलं दत्वा, ततः श्रीपादतीर्थं तदन्नायतिपावनं च आदरेणातिश्रद्धया स्वीकर्तव्यम्। एवं एकसंवत्सरं यदि भवता कृतम्, ततः परं तव भार्या भविष्यामि। एवं कृते अहं सुलभा, अन्याथा तव दुर्लभा एव इति।

चतुष्कविः कुमदवल्ल्योक्तं वचः अङ्गीकृत्य, तत् धृवं करिष्ये इति प्रतिज्ञामकरोत्। ततः श्रीमान् धीमान् भागवतः भिषग्वरः सुतां कुमुदवल्लीं दानजलेन श्रीमते कलिवैरिणे सन्तोषेन ददौ। विवाहानन्तरं परकालः स्वप्रतिज्ञां सफलां व्यधात्। सर्वेषामाराधनानां परमं विष्णोराराधनम्। तस्मात्परतरं तदीयाराधनम् इति अर्थं सम्यक् हृदि निधाय भगवत्परः परकालः संतोषेन अष्टोत्तरसहस्रेभ्यः वैष्णवेभ्यः प्रतिवासरं षड्सोपेतं भोजनं, वस्त्रं वा भूषणं वाऽपि वैष्णवः यद्यदिच्छति तत्सर्वं तस्मै दास्यति परकालः। एवं वैष्णवाराधनार्थाय तद्राजधनं सर्वं शीघ्रं परकालेन व्ययीकृतम्। चाराः सकलं कलिवैरिणः वृत्तान्तं चोलराजाय सम्यन्ङ्न्यवेदयन्। ततः चोलराजेन प्रेषिताः दूताः राजधनहरणार्थाय परकालस्य सन्निधिं समागताः। समागतान् दूतान् दृष्ट्वा परकालः सर्वं धनं दास्यामि ददाम्येव निशामुखे ददामि मध्याह्ने ददामि सूर्योदये पुनः आगच्छन्तु, गम्यतामिदानीम्, अवसारो नास्ति इदानीम् इत मृदुभाषणैः बहुविधैः तान् राजदूतान् कुशलतः निर्विघ्नं प्रतिवासरं तदीयाराधनं चक्रे।

एवं गतेषु कतिषु दिनेषु तदनन्तरं राजदूताः परकालं द्रव्यार्थः रुरुधुः। ततः सञ्जातकोपेन परकालेनन भत्सिताः तत्कृत्यं चोलभूपाय सम्यङ्न्यवेदयन्। तच्छुत्वा संकृद्धः पदाहतउरग इव चोलराजः किङ्करान् षट्सहस्रकं परकालस्य बनधनार्थं प्रेषितवान्।

परकालः स्वावतारस्थलस्य दक्षिणे क्रोशमात्रतः रम्ये कमलानगरे नित्यं तदीयाराधनंमव्याहतं चक्रे। तदीयाराधनपुण्यफलेन, तदुच्छिष्टान्नभोजनात्,

तत्पादतीर्थपानेन कलिवैरिणः ज्ञानभक्त्यादयः गुणाः ववृधिरे । शुक्लपक्षे चन्द्रमसः कला इव परकालस्य गुणाः ववृधिरे । यथा श्रीरामकैङ्कर्ये महोत्साहो महाबलः मारुतात्मज इव परकालोऽपि वैष्णवाराधने सर्वदा निमग्नाः सन्तः स्थिताः । ततः चोलराजेन प्रेषिताः दूताः परकालं बन्धितुं कमलानमरं गताः । मारुतेः ग्रहणार्थाय यथा रावणकिङ्कराः तथा चोलराजकिङ्कराः राजद्रव्यापहारी, राजशासनदूषकोऽयं परकालः बध्यतां, ताड्यतां, वधध्यतामिति समन्ततः तं परिपप्रुः । परकालस्य प्रभावं केन वर्णितुं शक्यते ? तदा तेषामत्याश्चर्यकरं युद्धमभूत् । कोपात् संरक्तनयनः परकालः महाखङ्गं प्रगृह्य, एक एव महोत्साहेन गजसमूहस्योपरि मृगराडिव खङ्गेन शितधारेण तत्किङ्करबलं निश्शेषं निर्मूलितवान् । पूर्वं रावणबलं हनुमता यथा निहतं तथा परकालेन चोलराजेन प्रेषितं बलं सप्तवारं निहतम् । ततः सर्ववृत्तान्तं श्रुत्वा चोलमहीपतिः चिन्ताशोकसमाविष्टः, महाश्चर्यसमन्वितः मन्त्रिभिः बहुधा सम्यक् मन्त्रयित्वा यथार्थं ज्ञातुं स्वयं गत्वा परकालं धनं पृष्टवान् । मे धनमदत्वात् न भोक्तव्यमित्युक्त्वा, भटानाज्ञाप्य, स्वपुरं गतवान् राजा ।

रुद्धः परकालः त्रिदिनम् उपवासपरः हरिपदाम्बुजं ध्यायन् तस्थौ । तृतीयदिवसे रात्रौ भक्तवत्सलः वरदराजः स्वप्ने प्रसन्नः काञ्च्यां वेगवतीनद्यां धनमस्ति प्रगह्यतामित्यब्रवीत् । परकालः स्वप्नादुत्थाय सत्वरं हरेर्वाक्यं सत्यमिति विनिश्चित्य चतुर्थदिवसे चोलमन्त्रिणं एवमब्रवीत् - काञ्च्यामापद्धनं किञ्चिन्निक्षिप्तं मया पुरा । तत्रागताश्चेत् युष्मद्द्रव्यं दास्यामि न संशयः इति । तदाकर्ण्य अमात्यः परकालं दातव्यं तन्निवेद्य, धनशेषं समादाय तदीयाराधनाय शीघ्रं कमलानगरम् आजगाम परकालः ।

चोलामात्यः धनं सर्वमादाय अत्यन्तविस्मितः चोलभूपालनिकटे तन्निदाय परकालवृत्तान्तं सर्वं निवेदयामास । प्रसन्नः वरदराजः धनं प्रसादितवानिति आप्तमन्त्रिवचनं श्रुत्वा, धनं दृष्ट्वा विस्मयाविष्टहृदयः चोलराजः एवमुक्तवान्- परकालः महाभागवतोत्तमः, न सामान्यजनः । कृष्णः द्रौपदीं यथा रक्षितवान् तथा वरदः कलिवैरिणं ररक्ष । द्रौपदीभङ्गादिदोषेण कुरुसन्ततिः यथा निर्मूलितः तथा भगवद्भक्तानामनादरेणाऽपि नाशः स्यात् । अतः अधुना अपराधक्षमापणं कर्तव्यम् इति । ततः परकालं समाहूय क्षमापणं कृत्व, परिरभ्य, वैष्णवोत्तमं परकालं विविधैः भूषणाम्बरैः पूजयित्वा कमलानगरं प्रस्थापयामास । मदर्थं परकालः त्रिरात्रं समुपोषितः इति तद्दोषपरिहाराय कलिवैरिणा दत्तं धनं सर्वं देवब्राह्मणाधीनं कृतवा् चोलराजः ।

चोलराजपूजितः परकालः अप्रतिहतसङ्कल्पः कमलानगरे तदीयाराधनम् अविच्छिन्नं कुर्वन् किञ्चित्कालानन्तरं द्रव्याभावेन चौर्यकर्मणि यत्नं व्यधात् । तस्य कार्यस्य परकालस्य पञ्चशिष्याः आसन् । एकः जलोपरिगतिः, द्वितीयः छायासंलीनकः, तृतीयः वृक्षाग्रारोहकः, पञ्चमः दर्गलपूत्कारकारकः । एतैः अनुचरैः वैष्णवैः सहितः रुद्धमार्गः महारण्यमुपाश्रित्य ऊर्ध्वपुण्डललाटांश्च, चक्राङ्कितभुजान्विना तत्र मार्गे गता गतानामन्येषां धनान्याहृत्य नित्यमव्याहतं सहस्रसङ्ख्यया बहुतदीयाराधनं चक्रे । परकालस्य शिष्याः देशान्तरात् चौर्यात् धनानि अपहृत्य तदीयाराधनाय कलिजिते भक्तितः ददुः । देवी कुमुदवल्ली अपि वैष्णवाराधनप्रिया नित्यं तदीयाराधनं कुर्वन्ती समास्थिता । वैष्णवानां सद्मानि वर्जयित्वा महान् कलिजित् ग्रामे जनपदे सर्वत्र नगरेषु च चौर्यात् धनार्जनं कुर्वन् भक्तिः अभ्यवर्तत ।

ततः कदाचित् धनहरणेच्छया एकस्मिन् ग्रामे परकालः रहसि व्यतिष्ठत । काचित् वनिता भुक्तपात्रं शोधयन्ती तस्थौ । तस्य प्रक्षालनरवं कलिजित् तस्याः करस्थितं पात्रं हठात् स्वीकृतवान् । तदानीं सा अस्मद्गुरुभ्यो नमः इत्युक्तवती । तच्छ्रुत्वा नीलः संभ्रमेण तत्पात्रं प्रमुमोच । तत्पात्रमादाय सा स्व भर्त्रे वृत्तान्तमेतं भयार्ता विशदं निवे दितवती । तन्निशम्य स बुद्धिमान् सः परकाल इति ज्ञात्वा, भार्यां कोपेन दृष्ट्वा मग्धे ! महात्मा परकालः एषः तदीयाराधननकैङ्कर्यहेतोः कृपया अत्रागतः । भवती तूष्णीं स्थिता चेत् वित्तं सफलं भवेत् खलु । स्वातंत्र्यतः वित्तमिदं विफलमित्युक्तवान् । परकालः एवं वैष्णवेतरान् सम्यक् विशोध्य तदीयाराधनपरः श्रीकमलापुरे तस्थौ ।

एकदा परकालः बिल्वारण्ये पान्थागमनकाङ्क्षी रुद्धमार्गो वयतिष्ठित । तदा थामत्रयावधि कश्चिज्जनोऽपि नालक्ष्यत । तेन कारणेन कलिजित् व्याकुलान्तःकरणः वृक्षाग्रारोहकं शिष्यं वीक्ष्य अस्मिन् मार्गे कोऽपि नागच्छति, अद्य यामत्रयं जातम् । वैष्णवाः क्षुधयाऽन्विताः । वृक्षाग्रशाखामारुह्य दशदिक्षु विलोकय इत्यब्रवीत् । तस्य वचः अङ्गीकृत्य स शिष्यः तथैवाकरोत् । तदानीं भगवान् श्रीरङ्गनाथः कृपया भक्तानुग्रहहेतवे एवमचिन्तयत् - परकालः निरन्तरं वैष्णवेभ्यः सम्यक् तदीयाराधनं महाविश्वासपूर्वकं करोति । एष एवात्र चरमपुरुषार्थः खलु । एतत्पुण्यफलप्राप्तिहेतुना मया अयं संरक्षितव्यः इति । ततः

*साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् ।*
*मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥*

इत्युक्तेन प्रकारेण श्रीरङ्गनाथः दयया ब्राह्मणो भूत्वा, श्रिया कृतोद्वाह इव अखिलभूषणैः सर्वाङ्गभूषितः लक्ष्मीसमेतः विराजमानः परकालान्तिकमागतवान् । द्विजरूपिणं सङ्गेशं विलोक्य सन्तुष्टः परकालः तस्य धनानि, भूषणानि, अम्बराणि, सर्वाणि आहृत्य तस्य पादाङ्गुलीयमात्रं ग्रहीतुकामः यत्नकरोत् । महता यत्नेन चापि ग्रहीतुं नाशकत् । तदा दन्तैः उत्पाद्य तद्ग्रहीतुं यत्नं कृतवान् । तदानीं द्विजरूपधरः श्रीरङ्गनाथः तं वीक्ष्य एवमवोचत् अस्मद्धनं सर्वं त्वया अपहृतं खलु । पाददाङ्गुलीयमात्रं न त्यजति वा ? इति तद्वचनं श्रुत्वा परकालः तेन विसृष्टमात्रेण मम किं प्रयोजनम् ? वैष्णवानां भुक्तिपात्रार्थं वा उपयोगः स्यात् । तत्कथं विसृजेदिति उक्त्वा दशनैः शीघ्रमङ्गुलीयकम् अग्रहीत् । तथापि ग्रहीतुं परकालः न समर्थो अभवत तत् वीक्ष्य कोपसंरक्तलोचनः परकालः ब्राह्मणवेषधारिणं श्रीरङ्गगनाथं खड्गेन भीषयन् मम अहितार्थं भवतां मन्त्रितं वा किम् ? तं मन्त्रं शीघ्रमुपसंहर इत्युक्तवान् । तद्वचनमाकर्ण्य श्रीरङ्गेशः तं मन्त्रं तव वक्ष्यामि शृणु इति दयया परकालस्य दक्षिणे कर्णे रहः तं मन्त्रं प्रददौ । सर्ववेदसारभूतं, भगवत्सायुज्यसाधकं गुह्यमुत्तमम् अष्टाक्षरं चोपदिश्य, तन्मन्त्रप्रतिपादितं स्वदिव्यात्मस्वरूपं तस्मै व्यदर्शयत् । करुणारूपिणं, श्रिया सहासीनं पीताम्बरधरं दिव्यमङ्गलविग्रहरूपिणं अनुभूय अनुभूय आनन्दार्णवनिमग्नो बभूव । ब्रह्मानुभवसञ्जातप्रेमातिशयसम्पदः परकालतनौ प्लावयन्तः षड्विधप्रबन्धरूपैः वहिरागतः । आशुकवित्वं, चित्रकवित्वं, मधुरकवित्वं, विस्तरकवित्वमिति चतुर्विधं कवनं परकालैः क्रियत इति चतुष्कविः इति प्रसिद्धः । श्रीकलिजित्कृताः दिव्यप्रबन्धाः षट्त्रिंशतमेकसहस्रमेकषष्ठपाशुरैः विराजन्ते ।

परकालेन संस्तुतः श्रीरङ्गनाथः सन्तुष्टः मन्दस्मितः शुभं वाक्यं व्याजहार । स्तोत्रेणानेन परितुष्टोऽस्मि । मदीयकैङ्कर्यं त्वया सम्यक् कृतम् । साम्प्रतं तेन सुप्रीतः प्रसन्नोऽभवम् । वरदोऽहं समागतः । वरं वरय । सीम्प्रतं सर्वाभीष्टानि संप्रयच्छामि इति । रङ्गेशस्य वचः श्रुत्वा सन्तुष्टः कलिजित् प्राञ्जलिः प्रणतो भूत्वा शुभं वचः व्याजहार । भवतः दर्शनादेव कृतार्थोऽस्मि न संशयः । त्वद्दासदासस्य मे वाञ्छितव्यः वरः कः विद्यते ? तथाऽपि करुणाकर भक्ताय मे वरं देहि अत्र बिल्वारण्यवने भक्तानां वरदः सदा सान्निध्यं कुरु । सर्वाभीष्टप्रदो भवान् मे वरं प्रदेयम् इति । तस्य वचः अङ्गीकृत्य श्रीरङ्गनाथः अद्यापि भक्तसंरक्षणे तथैव परिदृश्यते । तदाप्रभृति हरिणाङ्गीकृतं भुवि, परकालकृतं धनापहरणं भुवि सर्वस्थलेषु सर्वत्र च उत्सवेषु अश्ववाहनोत्सवमङ्गीकृतम् । अतः महोत्सवेषु सर्वेश्वरः अश्वावाहदिवसे कृपया भक्तवत्सलः कलिवैरिणे सर्वस्वदानमद्यापिकरोति । एतं चित्रं चोरोत्सवं ये नरोत्तमाः सेवन्ते तेषां रङ्गेश्वरः शीघ्रं सुप्रसन्नो भविष्यति ।

ततः श्रीरङ्गनाथः परकालमुद्दिश्य एवमवोचत् - कलिह, श्रीरङ्गे मम कैङ्कर्यं विधेहि। प्राकारगोपुरे, धान्यनिलयं, महानसं च युष्मत्प्रियतरं यत् तत् सर्वं निर्माणं करणीयम् इति। ततः श्रीरङ्गनाथस्य दिव्याज्ञां शिरसा वहन् सन्तुष्टः सम्परिक्रम्य, प्राञ्जलिः पुरतः स्थितः। ततः आयाहि रङ्गमित्युक्त्वा श्रीरङ्गनाथः तत्रैव अन्तर्दधे। स्वशिष्यैः सहितः परकालः कमलानगरं प्राप्य, वैष्णवान् सम्यगाराध्य, देव्यै कुमुदवल्ल्यै वृत्तान्तमिदं निवेद्य, तया अनुज्ञापितः श्रीरङ्गेशस्य कैङ्कर्यं कर्तुकामः स्वजनैः सह श्रीरङ्गनगरं प्रतस्थे।

परकालः श्रीरङ्गमासाद्य फणीन्द्रतल्पे शयानम्, आद्यं रघुवंशनाथं श्रीरङ्गनाथं परभक्तियुक्तः प्रणम्य परमं प्रहर्षं लेभे। भक्तवरः परकालः श्रीरङ्गनाथं सन्दर्शयित्वा, मोदमवाप्य, भक्तिसहितः तीर्थप्रसादादिकं स्वीकृत्य, नम्रशिरसा, ताभ्यामनुज्ञापितः श्रीरङ्गनाथकैङ्कर्यविधौ हृदये चिन्तां दधार। श्रीरङ्गनाथस्य विमानमण्डपगोपुर-प्राकारादीन् निर्मातुकामः तदनुकूलद्रव्यसम्पादनोपायं स्वपरिजनं पप्रच्छ। नागपट्टणाख्ये विहारे काचन सुवर्णमयी बुद्धप्रतिमा वर्तते। तामानीय छित्वा भित्वा युष्मन्मनोरथं पूरयत इति ते अब्रुवन्।

परकालः नागपट्टणं गत्वा कस्याश्चित् वैष्णव्याः गृहमुपगम्य, बौद्धालये विद्यमानायाः सुवर्णप्रतिमायाः तद्विमानस्य च निर्माता शिल्पी द्वीपान्तरे अस्तीति ज्ञात्वा, ततः तद्गृहं प्रत्यभिज्ञाय तद्द्वारवितर्दिकायामुपविश्य सम्भाषमाण आसीत्। यदा स शिल्पी भुक्त्वा, ताम्बूलं गुहीत्वा, द्वारवितर्दिकामाजगाम, तदायं परकाल एवमुवाच- अहो बत। महत्कष्टमापतितं नागपट्टणस्य। बौद्धालयं विमानञ्च भित्वा बहवः तुरुष्काः सुवर्णप्रतिमाञ्चादाय जग्मुः इति।

तदाकर्ण्य स शिल्पी व्याकुलतरतिः सानुतापं रहस्यं विवव्रे। केनेदं द्रोहिणा शिल्पिना रहस्यमभेधि ? मया तु विमानशिखरकलशस्य अधोभागे अन्तः शृङ्खलां संयोज्य तस्या अपरान्तः प्रतिमा सोमसूत्रस्याधस्तात् भूम्यन्तरे एकस्यां नागदन्तिकायां संयोजितोऽभूत्। एतत्रहस्यं बुद्ध्वा कथं वा केन वा प्रतिमा अपहृता ? इति अतीव विषसाद।

परकालस्तु रहस्यं भित्वा विषयं संगृह्य द्वीपान्तरात् निर्जगाम समुद्रतीरे एकं तरणिवणिजं पूगफलराशिं तरणावरोपयन्तं दृष्ट्वा, वयं द्वित्रिदिवसादुपोषिताः। हस्तेन किञ्चिदपि अतरोऽस्ति। पारतरणाय त्वमेव शरणम् इत्युक्त्वा, तेनानुमताः

तरणिमारुरुहुः। ततः परकालः स्वहस्त स्थितमेकं पूगफलं छुरिकया द्विधा छित्वा फलार्धं तद्राशौ तत्समक्षं प्रक्षिप्य अर्थयामास- एका पत्रिका विलिख्य दीयताम्। अस्मिन् अर्धं पूगफलं त्वदीयमस्ति इति। ऋजुबुद्धिर्वणिक् तथैव लिखित्वा ददौ।

पारङ्गतायां तरणौ फूगफलार्धं देहि इति परकालः कलहायतेऽस्म। एकपूगफलार्धमेव त्वयात्रन्यस्तम्। तदेवं दीयते इति वणिक् कलहायतेस्म। ततः तत्रत्याः वणिजः मिलित्वा, वणिजा लिखितां पत्रिकामादाय वाचयित्वा राश्यर्धं दापयामासुः। राशर्धयोग्यं मूल्यं तस्मादादाय परकालादयः निश्चक्रमुः। ततश्च नागपट्टणं प्रविश्य रात्रौ बौद्धालयं प्रविश्य कुत्रचित्कोणे निलीय स्थित्वा निशीथे सोमसूत्रस्याधः कीलितां शृङ्खलां विस्रस्य, विमानमारुह्य शिखरकलशमितस्ततः परिवर्त्य, प्रक्षिप्य, तद्द्वार सुवर्णमयविग्रहमादाय रात्रौ एव अन्यत्रानीनयन्।

प्रभातात्पूर्वमेव कस्यचिदग्रहारस्य क्षेत्रे कृष्टे पङ्कबहुले तं विग्रहं निखाय पङ्केन प्रच्छाद्य, तत्पर्यन्तस्थितस्य चिञ्चातरोरधस्तस्थुः। प्रभाते क्षेत्री हलमानीय क्षेत्रं क्रष्टुमारेभे। परकालस्तु मदीयमिदं क्षेत्रम्। अपसर दूरतः। मत्पितामहेन क्रीतम्। यद्यहं क्रयपत्रं श्वः प्रभाते न दर्शयिष्यामि तर्हि त्वदीयमेव क्षेत्रं भविष्यति इत्युक्त्वा तत्रै वातिष्ठत्। स तूद्विग्नचित्तो हालिको गृहं निर्जगाम। सूर्यास्तानन्तरं रात्रौ अन्यत्र नीत्वा उत्तमदेवस्यालये उत्तमूर सन्निधिभुवि निचरव्नुः।

ततश्च नागपट्टणे हैमप्रतिमाहीनं शून्यमालयं दृष्ट्वा प्रतिमान्वेषणं महता प्रयत्नेन प्रयासेन च कृत्वापि अलब्धमनोरथाः तद्भक्ताः निर्वेदमात्रशरणाः बभूवुः। तदनु परकालकविः कालक्रमेण तां सौवर्णीं प्रतिमां रहसि किञ्चित्किञ्चित्छित्वा भित्वा विक्रीय तन्मूल्येन श्रीरङ्गक्षेत्रे मण्डपप्राकारगोपुरादीन् निरमापयत्। तावतापि कर्मकरेभ्यः देयस्य भृतिद्रव्यस्यापर्याप्ततया तैः अतिनिर्बद्धः परकालकविः तान् सर्वान् प्लवमारोप्य कवेरजास्रोतो मध्यमानीय निपात्यामारयत्।

तदनु तद्बन्धुभिः आकृष्टोऽयं भगवदाज्ञया तान् सर्वन् स्नातान् धृतोर्ध्वपुण्डान् रङ्गमन्दिरमानीय भगवत्सन्निधावाह्वापयत्। मृतान् तत्तद्बन्धून् प्रत्येकं तत्तन्नामग्रहणपूर्वकं तैः तैः मृतास्ते तद्बान्धवाः प्रोचुः। तेन तेनैव कण्ठस्वरेण भो भो बान्धवाः। मैवं महात्मानं परकालकविं निर्बध्नीत् यया कयापि विधयायदनुग्रहात् कर्मज्ञानभक्त्यादिसाधनैरपि अलभ्यं भगवतः सायुज्यमलप्स्महि वयमकिञ्चनाः इति।

अथ ते नमस्कृत्य भगवन्तं परकालकविं च यथायथं निश्चक्रमुरतीव मुदिताः।

एवमादिभिः दिव्यचरितैः स्वविरचितैः तिरुवेलुकूत्तिरूक्कै, तिरुक्कुरुन्दाण्डहम्, तिरुनेडुन्दाण्डहम्, शिरियतिरुमडल्, पेरियतिरुमडल् पेरियतिरुमोलि इति षड्भिः प्रबन्धैः स्वभक्तप्रतिष्ठापितया स्वावतारस्थलस्थया स्वदिदव्यमूर्त्या च जगदुज्जीवयन् अद्यापि भुवमलङ्करोति परकालसूरिः ।

*वृश्चिके कृत्तिकाजातं चतुष्कविशिखामणिम् ।*
*षट् प्रबन्धकृतं शार्ङ्गमूर्तिं कलिहनं भजे ॥*

## शिरियतिरुमडल्

अस्मिन् ग्रन्थे तमिलसमाजस्य मडल् प्रथायाः वर्णनं विद्यते । नायिकानायकयोः प्रेमावस्थायां यदि दयितां प्राप्तुं बाधापत्तिः स्यात् तदा लोकमर्यादां विहाय मडल् आरुह्य मरणाय चेष्टते । तालपत्राणामेकं घोटकं निर्माय निराशो नायकस्तमारुह्य आत्महत्यां कर्तुं घोषयन्ति, ततोऽन्ते च स्वदयितां प्राप्नोति, इयमेव मडल्प्रथा इति कथ्यते । अत्रैतस्याः प्रथाया वर्णनं विद्यते । अस्मिन् द्वादशपाशुराणि सन्ति । परकालनायिकायाः विरहावस्थायाः वर्णनम् अत्रैवं कृतम्- यदाऽहं घटनर्तकस्य श्रीकृष्णस्य मेघसदृशविग्रहं पश्यामि तदा प्रभृति विलक्षणां विकृतिमेव ह्यविन्दम् । अस्यामवस्थायां शीतलोऽपि पवनो मां बाधते । एवं विविधामतिप्रवृत्तिं चिकीर्षन्ती लोकापवादभयेन तूष्णीमेवऽवतिष्ठामि इति ।

## पेरियतिरुमडल्

अस्यां रचनायां मडल्प्रथायाः वर्णनं कुर्वता कविना श्रीपरकालसूरिणा काव्यरसस्य प्रयोगः नितरां समुचितरूपेण कृतः । शृङ्गारस्य परिपाकः सरलः स्वाभाविकश्चास्ति । यत्र कुत्रापि रामकथायाः महाभारतकथायाश्च रमणीयप्रसङ्गा उपलक्ष्यन्ते कतिपयेषु पाशुरेषु पौराणिककथनामाश्रयं गृहीत्वा, तदनुसारं विषयवस्तु वर्णितम् ।

एवं श्रीपरकालस्वामिनः प्रसिद्धिः तद्रमणीयकवित्वशक्त्या तमिलसाहित्ये राजते । कवेर्गुणा एव तद्रचनासु स्पष्टतया भान्ति । तेनैव कवेः साहित्यकारस्य वा सम्मानं भवति ।

## तिरुवेळुकूत्तिरुक्कै :

विविधकविताप्रक्रियासु अमोघसामर्थ्यवता तिरुमङ्गै दिव्यसूरिणा

चित्रकवितायां रथबन्धात्मकपाशुरेण अयं दिव्यप्रबन्धः अनुगृहीतः । प्रलयानन्तरं जगत्सृष्टिं सङ्कल्पितवान् श्रीमन्नारायणः प्रथमतः स्वनाभौ पद्मपुष्पे चतुर्मुखब्रह्माणमरसृजत् । तथा सृष्टस्य जगतः रक्षणभारमपि स एव स्वीकृत्य त्रेतायुगे साधुपरित्राणधर्मसंस्थापनार्थाय श्रीरामचन्द्ररूपेण कृष्णाजिनं च धृत्वा वामनरूपेण बलिचक्रवर्तिनः यज्ञवाटिकां गत्वा त्रिपादपरिमितं स्थलं पृष्ट्वा पादद्वयेनैव त्रिलोकानपि आक्रमितवान् । एकदा सुपर्णं गरुत्मन्तमधिरुह्य, अगाधकासारे ग्राहग्रस्तं गजेन्द्रं रक्षितवान् । त्रेताग्नयः, चतुर्वेदाः, पञ्चमहायज्ञाः, षट्कर्माणि च समाचरन्तः विप्राः सर्वेऽपि भवन्तं प्रणमन्ति । पञ्चेन्द्रियाणि जित्वा, आहारनिद्राभयविषयोपभोगान् जित्वा, रजस्तमोगुणयोः निर्मूलनेन सत्त्वगुणप्रधानेन तादृशदशाफलरूपेण अपारसंसारदुःखं च अतिक्रम्य महात्मानः परमात्मनः स्वरूपस्वभावान् जानति । तद्विना त्रिनेत्रधारी नागभूषणः रुद्रोऽपि भगवन्तं ज्ञातुमशक्यः एव । वराहावतारे समस्तलोकसमुदायमपि दंष्ट्राग्रे धृतवान् परमात्मा । परमात्मानुभवः षड्रसानुभव एव । जाज्वल्यमानानां पञ्चायुधानामपि परमात्मनः हस्ततेजसा सौन्दर्यं सिद्ध्यति । अत्यन्तसुन्दरचतुर्भुजः श्रीभूदेवीसहितः अत्यनन्तानन्दं सञ्जनयति । शास्त्रोक्तरीत्या चातुर्वर्ण्यनिर्वाहकः पञ्चमहाभूतानां प्रवर्तकः परमात्मैव । सुगन्धभरितपरीत्या चातुर्वर्ण्यनिर्वाहकः पञ्चमहाभूतानां प्रवर्तकः परमात्मैव । सुगन्धभरितपरिमलपूरितमधुस्रवितपुष्पसदृशी नीलदेवी अतिलोकसुन्दरी । तस्यै सप्तवृषभान् हतवान् परमात्मा । परमात्मनः दिव्यस्वरूपं स्वभावं च बाह्यकुदृष्टिमतजानानां दुर्ज्ञेयानि । पञ्चलक्षणविशिष्टकेशपाशाञ्चिता श्रीमहालक्ष्मी सदा परमात्मनः वक्षःस्थले वसति । धर्मार्थकाममोक्षप्रदाता परमात्मैव । सृष्टिस्थितिसंहारकार्यनिमित्तं त्रिमूर्तिरूपाणि धरति । कर्मानुगुणप्रकारेण सुखदः स्वरूपफलानि चेतनानां प्रसादयति । एकोऽपि परमात्मा सर्वव्यापी, सर्वान्तर्यामी भवति । सूक्ष्मचिदचिद्विशिष्टः स्थूलचिदचिद्विशिष्टश्च एक एव ''अन्तर्बहिश्च-तत्सर्वं व्याप्य नारायणः स्थितः'' इति श्रुतिः खलु ।

हे अपर्याप्तामृतस्वामि संसारदुःखनिवृत्तेः युष्मच्चरणयुगलिं समाश्रये । मम पापानि परिहर ! इति कुम्भकोणक्षेत्राधिपतिं प्रार्थयन् प्रबन्धं समाप्तीकृतवान् परकालसूरिः । अष्टविशेषैः कुम्भकोणक्षेत्रं वर्णितम् । सदा मधुस्रवपुष्पपूरितैः वनैः व्याप्तम् । विविधलतावनपरिवृतम् । रत्नमयी कावेरी सदा प्रवहति । सस्यसुन्दर-क्षेत्रमयम् । प्रकाशमानैः कदलीवकुजम्बूपूगमाकन्दादिवृक्षैः परिवृतम् । विद्यानिधीनां

महात्मनां वासस्थानम् । ध्वजाग्रैः अम्बरचन्द्रचुम्बितसुवर्णभवनैः व्याप्तम् श्रीवैष्णव सम्पत्परिपूर्णम् इति श्रीकुम्भाकोणक्षेत्रे फणविराजितनांग-राजशयनस्य परमात्मनः चरणद्वन्द्वमेव सदा मम हृदि स्थितम् ।

**तिरुक्कुरुन्दाण्डगम् :**

अस्मिन् दिव्यप्रबन्धे विंशति पाशुराणि सन्ति । भक्तिमार्गे परमात्मनं ये स्मरन्ति, तेषां सुलभवशः ब्रह्मण्डपालकः । कंसान्तकं सत्यसङ्कल्पं तं परमात्मानं मनसि सदा निधाय संस्मरामि । कदापि न त्यजामि । अप्तेजोवायुभिः रक्षमाणां स्वर्गसदृशां लङ्कां विजित्य प्रकाशमानमानन्दप्रवाहममृतस्वरूपिणं, तस्य कल्याणगुणवैभवं च वर्णयितुं कः समर्थः ? मन्थरगिरिमथनेन क्षीरसागरात् लब्धममृतं सुराणां सर्वेषां प्रसादितवान् । अतः तं स्वामिनं प्रणमामि । वराहावताररूपेण भूमिमुद्धरणं कृतवन्तं पुष्पवर्णं स्वप्ने दृष्ट्वा मनसा वाचा कर्मणा श्रद्धया अनुभूतं मया । मम भग्यमेव भाग्यम् । मेघवर्णं परमात्मानं मनसि निधाय प्रेमामृतरसमयमिक्षुरसं पीतं मयाा । मम भाग्यमेव भाग्यम् । त्रिमूर्तिषु अद्वितीयं कारणभूतं परमात्मानम् आनन्दकरपाशुरैः नित्यानां शिरोभूषणरूपेण दासाः कीर्तयन्ति । इहसुखप्रदाता, परसुखप्रदाता मोक्षप्रदाता सत्यस्वरूपः । तं परमात्मानमाश्रित्य सुलभतया तरन्ति भक्ताः । केवलशरीरसुखकामुकाः तं परमात्मनं न जानन्ति । सप्तलोकानपि अन्तः निक्षित्य, प्रकाशमानः बालमुकुन्द एव सदा अस्माकं शरणम् भवति ।

मनः मम स्वाधीने नास्ति । बहूनि पापकर्माणि मया कृतानि । मुक्तमरकतमणिवर्णः तेजोमयः परमात्मा आश्रितसंरक्षकः । तस्य परमात्मनः कैङ्कर्यं विना अन्यत्किमपि न जानामि । अष्टदिक्पालकानां निर्वाहकः, अण्डनिर्वाहकः, सर्वकार्यकारणभूतः, परंज्योतिः, परमात्मा आश्रितजनानां सर्वेषमपि रक्षकः इति ज्ञात्वा, ज्ञानिनः पादाभिवन्दनादिभिः स्तुतिस्मृतिकीर्तनादिभिः तं सेवन्ते । माहापापिनः मम स्वप्ने साक्षात्कारभूतः श्रीरङ्गनाथः मा भीः इति अभयं दत्तवान् । तस्य दर्शनेनैव मम सर्वव्यधिः पापानि निर्मूलितानि । कुमुदाक्षीणां सङ्गममेव सदा, स्मृत्वा पापभूयिष्ठमनसा परमात्मानं ये न स्मरन्ति, तादृशानामपि स्वसाक्षात्कारेण भक्तिं जनयति परमात्मा । मायामृगं हत्वा, सप्ततालवृक्षान् विच्छेद्य त्रिलोकान् आक्रम्य, मन्थरगिरिमथनेन अमृतं प्रसाद्य, अतिमानुषचेष्टाभिः भक्तानां सदा संरक्षकः परमात्मैव ज्ञापितवतः परमात्मनः कारुण्यं लीलावैभवाश्च वर्णितुमशक्याः । तिरुप्पेरै स्वामिनं

ये सेवन्ते ते संसारसागरं तरन्ति। आशापिशाचं त्यजन्ति। इन्द्रियक्लेशेभ्यः विमुक्ताः भवन्ति। पिष्टपूरितं कपालं धृत्वा याचनं कुर्वन् संचरमाणस्य शिवस्य शापविमुक्तिं कृत्वा अनुगृहीतवान् श्रीमन्नारयणः तिरुक्कण्णियूर्, श्ररङ्गम्, तिरुमेय्यम्, कञ्चि, तिरुप्पेरै, तिरुमल्लम् क्षेत्रेषु विराजते। तस्यानुग्रहेणैव अस्माकमुज्जीवनम् भवति, मार्गन्तरं नास्ति। देवाधिपः देवेन्द्रः, कमलासनस्थः चतुर्मुखश्च, नित्यं मधुपुष्पसमर्पणेन परमात्मनः विष्णोः चरणद्वन्द्वमाश्रित्य स्तुवन्ति। इत्येवं परकालसूरिणा उक्तां द्राविडमालां ये पठन्ते ते तेजोमयं वैकुण्ठमाप्नुवन्ति।

**तिरुनेडुन्दाण्डगम् :**

विद्युद्भास्वररूपः, चतुर्वेदप्रतिपाद्यः, ज्योतिर्मयः अनादिनिधन-नित्ययौवनः, सुवर्णवर्णः, पञ्चभूतान्तर्यामि, परमात्मा सदा मम हृदि तिष्ठति। तस्य चरणद्वन्द्वमेव सदा स्मरामि। पृथिव्यप्तेजोवाय्वाकाशविविधरूपैः सर्वव्यापकः सर्वदेवान्तर्यामि त्रिमूर्तिषु अपि सुवर्णवर्ण, अग्निवर्ण, सागरवर्णैः प्रकाशते। त्रिमूर्त्यात्मकः परंज्योतिः मेघवर्णः मम स्वामिनः सहजवर्णः। नीलमेघश्यामः, विविधकालेषु विविधावतारेषु विविधशरीरेषु विविधप्रकारैः गीयते। तं सम्पूर्णं ज्ञातुं वक्तुं द्रष्टुं च केऽपि न समर्थाः। इन्द्रब्रह्मणोः कारणभूतः, पृथिव्यप्तेजोवाय्वाकाशपञ्चभूतानामपि अन्तर्यामी, दिक्चन्द्रसूर्यान्तरात्मा, संस्कृतद्राविडवेदवेद्यः ब्राह्मणमन्त्रप्रतिपाद्यः परमात्मा। तस्यानवरतस्मरणेनैव सर्वविधसुखं सिद्ध्यति। परमात्मनः दिव्यचरणयोः एकात् गङ्गाजलं प्रवहति। एकः पादः सकलभुवनसूर्यचन्द्रनक्षत्रब्रह्माण्डपर्यन्तमाक्रमति। तयोः दिव्यचरणयोः सदा प्रणमामि।

दीर्घविशालहस्तः, नित्यप्रभुः गरुडवाहनारूढः, सदाराक्षसशिक्षकः: पद्भ्यामेव सर्वत्र व्याप्य स्थितः, सुवर्णसस्यक्षेत्रमयस्य कोवलूरुक्षेत्रस्य अधिपतिः। तं संसेव्य तरन्ति भक्ताः। सुन्दरकोवलूरु क्षेत्रे एव षण्मुखः परशुरामेण जितः।

तिरुनीरकवासः, विशालतिरुमलगिरिवासः निलात्तिगळतुण्डवासः, पूर्णकाञ्चीपुरवासः, तिरुक्कारकवासः, तिरुक्कार्वानवा०सः सुन्दरकावेरीदक्षिणतीरस्थ-तिरुप्पेरकनिवासश्च सदा मे मनसि स्थिताः। दिव्यचरणारविन्दयुगलं सदा स्मरामि।

सर्वदिक्पालकानामधिपः, तिरुमालिरुंजोल, तिरुमल, श्रीरङ्गादिदिव्य-क्षेत्राधिपः शीतलकटाक्षैः सर्वदा अस्मान् रक्षति। मम मनः सर्वदा अविश्रान्तेन अनन्तशयनं, गरुडध्वजं, सुन्दरश्रीरङ्गनाथं स्मरन् परवशो भवति। अन्यत्स्मरणमेव नास्ति।

गोवर्धनगिरिमुद्धृत्य शिलावर्षात् भक्तजनान् संरक्षितवान्, शिवधनुर्भङ्गकृत्वा सीतां परिणीतवान्, चाणुर, केशि, वृषभासुरादिराक्षसनिवारकः, परमात्मा मम मनसि वसति। तस्य लीलावैभवं, नामवैभवं च सदा स्मरामि मम विधेयशारिका अपि तस्य नामसङ्कीर्तनं करोति।

पुष्पसरोभिः परिवृतसुन्दरतिरुवजुन्दूरुक्षेत्राधिपः वात्सल्येन कृपावर्षेण मामनुगृह्णाति। गोपालक, गोपिकापालक, वासितवनपरिवृततिरुक्कण्णपुरवास, राक्षसान्तक, नीलमेघश्याम, तिरुनरैयूरुवास इति स्मरति मम मनः। कुम्भकोण, कोवलूरु, नरैयूरु वासाधिपस्य नामगानामृतपानेन परवशो भवामि।

अनन्तरपाशुरेषु परमात्मनः दिव्यमङ्गलविग्रहः वर्णितः। तेन परमात्मना संश्लेषः वर्णितः। परमात्मनः लीलाः वर्णिताः। विविधावतारेषु परमात्मना कृताः अतिमानुषचेष्टाः वर्णिताः। तिरुनेडुंदाण्डगं नाम द्रविडमालामिमां ये पठन्ति तेषाम् अनादिपापकर्माणि अवश्यं नश्यन्ति। इति त्रिंशति पाशुरेषु द्रविडमाला उक्ता।

**पेरियतिरुमोलि - (बृहत्सूक्तम्)**

अस्मिन् ग्रन्थे १०८४ पाशुराणि सन्ति। एकादशशतकेषु निबद्धानि। प्रतिशतकेपि दश दशकानि सन्ति। प्रतिदशकेऽपि दश पाशुराणि सन्ति। एकादश-शतके अशीतिपाशुराणि सन्ति। ग्रन्थस्य विस्तृतत्वात् दशकेषु उक्ताः विषयाः एव सूच्यन्ते।

प्रथमशतके प्रथमदशके अनादिनिधनं भगवत्तत्त्वं न ज्ञात्वा, लौकिकानित्य विषयासकत्या मया कालयापनं कृतम्। भगवत्कृपया नारायणमन्त्रमवाप्य उज्जीवनं प्राप्तोऽस्मि इति बहुमुखैः उक्तवन्तः। द्वितीयदशके सर्वेश्वरः दिव्यदेशेषु अर्च्चावताररूपेण अनुगृण्हातीति हिमवत्पर्वते तिरुप्पिरिति नाम देवप्रयागक्षेत्रं सन्दर्शयन्ति। तृतीयदशके इन्द्रियशक्तेः नष्टात्पूर्वमेव बदरिक्षेत्रं सन्दर्शनीयमित्युक्तवन्तः। चतुर्थदशके शिशोः संरक्षणाय माता यथा औषधं स्वीकरोति तथा लोकहिताय नारायण एव तपमाचरितवान्, अष्टाक्षरीमन्त्रं प्रकटितवान् बदरिक्षेत्रे। अतः बदरिकाश्रममवश्यं सन्दर्शनीयमित्युक्तवन्तः। पञ्चमदशके सालग्रामं सन्दर्शनीयमित्युक्तम्। षष्टदशके नैमि शारण्यस्वामिन-माश्रयन्ति। सप्तमदशके शिङ्गवेलकुन्रनाम अहोविलक्षेत्रं सन्दर्शयन्ति। अष्टमदशके तिरुवेङ्गडमाश्रयन्ति। नवम दशके वेङ्कटाद्रीशस्य दासोऽहमिति प्रकटयन्ति।

वेङ्कटाद्रिनिलयस्य पादसन्निधिं विना अन्यत्किमपि नेच्छामीति प्रकटितवन्तः दशमदशके ।

द्वितीयशतके प्रथमदशके श्रीवेङ्कटाद्रिनाथस्य कैङ्कर्येण सन्तृप्तिं प्रकटयन्ति । द्वितीयदशके तिरुवल्लूरुस्वामिनमाश्रयन्ति । तृतीयदशके तिरुवल्लिक्केलिस्वामिनं सेवन्ते । चतुर्थदशके तिरुनीर्मलै दिव्यदेशमाश्रयन्ति । पञ्चमदशके कडन्मल्लैस्थलशयनस्वामिनं सेवन्ते । षष्ठदशके कडल्मल्लैस्थलशयनस्वामिनं ये स्मरन्ति ते एव धन्याः इति वदन्ति । सप्तमदशके परमात्मनः अनुभवस्यालभ्यत्वात्, मानसानुभवमात्रत्वात् नायिकावस्थां प्राप्तवन्तः । अष्टमदशके भावनाप्रकर्षेण प्रत्यक्षसमानाकारमानसानुभवेन श्रीअष्टभुजस्वामिनः सन्निधौ भाषणं कुर्वन्ति । नवमदशके परमेश्वरविण्णकरमिति दिव्यदेशमाश्रयन्ति । दशमदशके तिरुक्कोवलूरु दिव्यदेशस्वामिनमाश्रयन्ति ।

तृतीयशतके प्रथमदशके तिरुवहीन्द्रपुरवैभवं वर्णयन्ति । द्वितीयदशके तिल्लैतिरुच्चित्तिरकूटं नाम दिव्यदेशम् (चिदम्बरम्) आश्रयन्ति । तृतीयदशके चिदम्बरक्षेत्रस्वामिनमाश्रयन्ति । चतुर्थदशके काजिदेशस्य श्रीरामविण्णकरं वर्णयन्ति । पञ्चमदशके तिरुवालिदिव्यदेशस्वामिनमाश्रयन्ति । षष्ठदशके तिरुमङ्गै आल्वार् नायिकावस्थामवाप्य विरहव्यसनेन तिरुवालिस्वामिसन्निधिं पक्षिसन्देशं प्रेषयन्ति । सप्तमदशके मानसानुभवेन, भावनाप्रकर्षेण ज्ञानवैशद्यमाप्नुवन्ति । अष्टमदशके तिरुनांगूरुदिव्यदेशस्य मणिमाडक्कोयिल् क्षेत्रमाश्रयन्ति । नवमदशके तिरुनांगूरुवैकुण्ठविण्णकरं दिव्यदेशमाश्रयन्ति । दशमदशके अरिमेयविण्णकरमिति दिव्यदेशमाश्रयन्ति ।

चतुर्थशतके प्रथमदशके तिरुनांगूरुक्षेत्रे तिरुत्तेवनारतोकै इति दिव्यदेशमाश्रयन्ति । द्वितीयदशके तिरुनाङ्गूरुक्षेत्रे तिरुवण्पुरुषोत्तमम् इति दिव्यदेशमाश्रयन्ति । तृतीयदशके तिरुनाङ्गुरु दिव्यदेशस्थं शेबुन् शेय् कोयिल इति दिव्यदेशं संसेव्य उज्जीवितोऽहमिति वदन्ति । चतुर्थदशके तिरुनाङ्गूरु दिव्यदेशस्थतिरुत्तेत्तियम्बलम् इति दिव्यदेशस्वामिनमाश्रयन्ति । पञ्चमे दशके तिरुनांगरुदेशस्थतिरुमणिकूटस्वमिनमाश्रयन्ति । षष्ठदशके तिरुनाङ्गूरुदेशस्थ-तिरुक्कावलंपाडिक्षेत्रस्वामि एव रक्षक इति वदन्ति । सप्तमदशके तिरुवेल्लक्कुलं दिव्यदेशस्वामिनमाश्रयन्ति । अष्टमदशके पार्तन्पल्लि दिव्यदेशस्वामिसन्निधौ नायिकावस्थां प्राप्तवन्तः (तिरुमङ्गै आल्वार) परकालसूरयः । नवमे दशके

तिरुविन्दलूरुक्षेत्रे स्वामिसन्निधौ प्रणयकोपं प्रदर्शितवन्तः परकालसूरयः। दशमदशके स्वस्थचित्ताः परकालसूरयः तिरुवेल्लियंगुडिस्वामिनमाश्रयन्ति ।

पञ्चमशतके तिरुपुल्लभूतंगुडिदिव्यदेशमाश्रयन्ति । द्वितीयदशके तिरुकूडलूर इति दिव्यदेशमाश्रयन्ति । तृतीयदशके तिरुवेल्लरै इति दिव्यदेशस्वामिनमाश्रयन्ति । चतुर्थदशके ज्ञानिनामपि सर्वेषां प्राप्यबुद्धिमविहाय आश्रयणीयं श्रीरङ्गक्षेत्रमिति स्फष्टयन्ति । पञ्चमदशके श्रीरङ्गनाथमाश्रित्य आर्त्या अन्यापदेशेन स्पष्टयन्ति । षष्टदशके श्रीरङ्गनाथं संसेव्य वर्णयन्ति । सप्तमदशके श्रीरङ्गनाथसेवाभाग्यस्य प्रीतिं स्पष्टयन्ति । अष्टमदशके भगवत्प्राप्तेः उपायभूतः भगवानेवेति आश्रितसुलभेति श्रीरङ्गनायकं शरणं प्रपद्यन्ते । नवमदशके तिरुप्पेर शेषतल्पस्वामिनमाश्रयन्ति । दशमदशके गुणपूर्णनावासं नन्दिपुरविण्णकरक्षेत्रं वर्णयन्ति ।

षष्ठशतके प्रथमदशके द्वितीयदशके, तृतीयदशके च तिरुविण्णकरुक्षेत्राधिपमाश्रयन्ति । चतुर्थदशके तिरुनरैयूरिति दिव्यदेशमाश्रयन्ति । पञ्चमदशके तिरुनरैयूरवैभवं परमपदसमानमिति अनुभवन्ति । षष्टदशके तिरुनरैयूरुक्षेत्रस्थं मणिमाडं नाम दिव्यदेशमाश्रयन्तु इति परोपदेशं कुर्वन्ति । सप्तमदशके तिरुनरैयूरु दिव्यदेशमाश्रयन्ति । अष्टमदशके तिरुनरैयूरुक्षेत्राधिपं संसेव्य वर्णयन्ति । नवमदशके तिरुनरैयूरुस्वामिनामाश्रयन्त् इति परोपदेशं कुर्वन्ति । निरन्तरं स्मरणीयं नारायणनामेवेति दृढीकुर्वन्ति दशमदशके ।

सप्तमशतके प्रथमदशके भगवदनुभवविरोधांत् संसारबन्धात् विमुक्तिं प्रदेयमिति निरुनरैयूरुस्वामिनं प्रार्थयन्ति । द्वितीयदशके तिरुनरै ति यूरुस्वामिनं विना अन्यं नाश्रयामि इति स्फष्टयन्ति । तृतीयदशके तिरुनरैयूरुस्वामिनं बाह्यसाक्षात्कारेण लब्धमिति आनन्दं प्रकटयन्ति । चतुर्थदशके तिरुच्चेरै स्वमिनः ये भागवतोत्तमाः अनन्यार्हशेषाः ते एव मम स्वामिनः इति वदन्ति । पञ्चमदशके आत्मना नित्यसंश्लेषप्राप्तेः एव सर्वेश्वरः तिरुवजुदूरुक्षेत्रे अवततारेति वर्णयन्ति । षष्ठदशके तिरुवजुदूरुस्वामिनं संसेव्य सन्तोषं प्रकटयन्ति । सप्तमदशके लक्ष्मीपुरुषकारेण तिरुवजुदूरुस्वामिनं शरणं प्रपद्यन्ते । अष्टमदशके तिरुवजुदूरू स्वामिनः अन्यः रक्षकः नास्तीति तमेवाश्रयन्तु इति जनेभ्यः उपदिशन्ति । नवमदशके बाह्यानां वचनानि न श्रुत्वा, आश्रयणीयं शिरुपुलियूरुस्वामिनं जलशयनमाश्रयन्तु इति उपदिशन्ति दशमदशके तिरुक्कणमङ्गै स्वामिनमाश्रयन्ति ।

अष्टमशतके प्रथमदशके तिरुक्कणपुराधिपं शौरिराजस्वामिनं वर्णयन्ति ।

द्वितीयदशके, तृतीयदशके, चतुर्थदशके च तिरुक्कण्णपुरशौरिराजस्वामिनः लीलाः वर्णिताः । पञ्चमदशके कृष्णविरहेण गोपिकाः यादृशीमवस्थां प्राप्तवत्यः तादृशीमवस्थां स्पष्टयन्ति । षष्ठदशके अस्माकं रक्षणे उद्युक्तः सर्वेश्वरः तिरुक्कण्णपुराधिपः एवेति अनुभवन्ति । अष्टमदशके तिरुक्कण्णपुरस्वमिनं सेवन्ते । नवमदशके तिरुक्कण्णपुराधिपस्य दासोऽहमिति प्रकटयन्ति । दशमदशके तिरुक्कण्णपुराधिपमाश्रयन्ति ।

नवमशतके प्रथमदशके तिरुक्कण्णङ्कुडिस्वामिनमनुभवन्ति । द्वितीयदशके तिरुनावात् दिव्यदेशस्वामिनः अलभ्यत्वात् विरहावस्थां प्रकटयन्ति । तृतीयदशके तिरुप्पुल्लाणि (दर्भशयनम्) दिव्यदेशं सेवन्ते । चतुर्थदशके तिरुप्पुल्लाणिं प्रति विरहावस्थां पक्षिसन्देशरूपेण वर्णयन्ति । पञ्चमदशके तिरुक्कुरंगुडि गन्तव्यमिति उद्वेगं प्रकटयन्ति । षष्ठदशके तिरुक्कुरुगुडिस्वामिनमाश्रयन्तु इति जनेभ्यः उपदिशन्ति । सप्तमदशके तिरुवल्लवाड्दिव्यदेशमाश्रयन्ति । अष्टमदशके तिरुमालिरुजोलै दिव्यदेशमाश्रयन्ति । नवमदशके तिरुमालिरुजोलै स्वामिनः प्राप्तेः आर्तिं प्रकटयन्ति । दशमदशके तिरुक्कोट्टियार् स्वामिनः सौलभ्यमनुसन्दधानः प्रीत्या अनुभवन्ति ।

दशमशतके प्रथमदशके सन्दर्शनीयानि विविधदिव्यक्षेत्राणि ज्ञापयन्ति । द्वितीयदशके राक्षसस्त्रीणामवस्थामवाप्य रामविजयं प्रकटयन्ति । तृतीयदशके राक्षसस्त्रीणां कुजमणितूरक्रीडाविधानं ज्ञापयन्ति । चतुर्थदशके यशोदावस्थामवाप्य कृष्णावतारमनुभवन्ति । पञ्चमदशकेऽपि यशोदा इव श्रीकृष्णमनुभवन्ति । षष्ठदशके सर्वेश्वरस्य परत्वसौलभ्यामनुभवन्ति । सप्तमदशके यशोदागोपिकयोः मध्ये वादरूपेण श्रीकृष्णस्य धूर्तचेष्टाः वर्णिताः । अष्टमदशके गोपिकानां श्रीकृष्णेन संश्लेषविधानमुक्तम् । नवमदशके नायिकायाः विरहदुःखं वर्णितम् । दशमदशके नायिका आर्त्या माधवप्राप्तेः विहङ्गानाश्रयति ।

एकादश शतके प्रथमदशके दक्षिणवायुबाधा नायिकावचनैः वर्णिता । द्वितीयदशके, तृतीयदशके च नायिकावचनैः सर्वेश्वरानुभवतृष्णा, त्वरता च प्रकटिताः । चतुर्थदशके आश्रितरक्षकमाश्रयणीयमिति मनसा भाषणं कुर्वन्ति । पञ्चमदशके नायिकावस्थायां परत्वानुभवः वर्णितः । षष्ठदशके सामान्यजनाः कर्मवश्याः परमात्मनः संबन्धज्ञानाभावेन इतरदेवानाश्रयन्तीति, तेषां देवानामपि नियामकः पालकः, आश्रयणीयः, सर्वेश्वर एवेति हितमुपदिशन्ति । सप्तमदशके

सर्वेश्वरानुभवायैव इन्द्रियाणि सन्तीति परमात्मनः अवतारचेष्टान् ये नानुभवन्ति तेषां इन्द्रियाणि निरर्थकानि इति वदन्ति। अष्टमदशके सर्वेश्वरं परमात्मानं पुनर्जन्म-राहित्यं प्रदेयमिति प्रार्थयन्ति। एवं तिरुमङ्गै अधिपस्य परकालस्य पेरियतिरुमोलि प्रबन्धं ये पठन्ति ते सर्वपापेभ्यः विमुक्ताः भवेयुः।

**तिरुमङ्गै आल्वार् तिरुवडिगले शरणम्**

**नम्माल्वार्चरितम्**

*वकुलाभरणं वन्दे जगदाभरणं गुरुम्।*
*यश्श्रुतेरुत्तरं भागं चक्रे द्राविडभाषया॥*

*वकुलालङ्कृतश्रीमच्छठकोपपदद्वयम्।*
*अस्मत्कुलधनं भोग्यमतु मे मूर्ध्नि भूषणम्॥*

चोलदेशस्य दक्षिणे पाण्ड्यदेशः आशीत्। तत्र पवित्रतमा ताम्रपर्णी नदी प्रवहति। पाण्ड्यदेशे अष्टादश दिव्यक्षेत्राणि दिव्यप्रबन्धेषु कीर्तितानि। सुविख्याते पाण्ड्यदेशे कुरुकापुरीति नगरी आसीत्। द्वापरे कौरवेण परिपालिता तदाख्यया विख्याता ताम्रपर्णीसरितटे कुरुकापुरी। तत्र आदिपुरुषः, प्रपन्नार्तिवैद्यः, वेदवेद्यः, श्रीद्योतितभुजान्तरः विष्णुः अवततार। तत्रास्ति पादजातेषु कश्चिद्भागवतोत्तमः। श्रीमद्विभूतिनाथेन्द्रः इति तस्य नाम। सद्गुणवतः तस्य पुत्रः धर्मधनुः। तस्य पुत्रः श्रीमन्नारायणपरायणः चक्रपाणिः। चक्रपाणेः सुतः अच्युतः। रत्नधाम इति प्रसिद्धस्य अच्युतस्य पुत्रः बुद्धिमान् पाटललोचनः। पट्टलोचनस्य सुकुमारः पोत्कारिः। तस्य पोत्कारेः पुत्रः कारिः इति। सप्तैव ते महाभागाः भगवद्भक्तिपरायणाः। सुमहातेजाः कारिः सकलसद्गुणसम्पन्नः, विष्णुभक्तिपरायणः, महाप्राज्ञः, पित्रोः आनन्दवर्धनः,यौवनावस्थां प्राप्तवान्। स्वकुलोचितधर्मपरायणस्य पुत्रस्य सद्गुणैः सन्तुष्टः पिता पोत्कारिः कारेः विवाहार्थं यत्नमकरोत्।

चतुर्दशदिव्यक्षेत्रैः पवित्रे केरलदेशे तिरुवण् परिशाराख्यं दिव्यं विष्णुस्थलमस्ति। तत्र स्वतुल्यवशसम्पद्भिः विष्णुभक्त्या च प्रसिद्धः तिरुवालु मार्पर् नाम वैष्णवोत्तमः पादजः आसीत्। तस्य पुत्री वैष्णवी नाथनायकी। विष्णभक्तिपरायणयोः द्वयोः अङ्गीकारेण कारिनाथनायक्योः महता वैभवेन विवाहः बभूव। स्वधर्माचारतत्परः गृहस्थाश्रमधर्मज्ञः कारिः नाथनायक्या रेमे। एकदा

तिरुक्कुरुगुडिक्षेत्राधिपतिं परमात्मानं कुरङ्गपूर्णं सन्तानार्थं प्रार्थयामास । तदा अर्चकमुखेन सः पुत्रत्वं तु गमिष्यामि अहमेव तवेति वरप्रदानं विदधे । कुरङ्गेशस्य आज्ञया विष्वकसेनमचिरेण नाथनायकी गर्भमाधत्त ।

कलियुगारम्भे प्रमादि नाम संवत्सरे एकमासे त्रयोदशदिनोत्तरे गते वैशाखमासे शुक्लपक्षे चतुर्दश्यां शुक्रवासरे विशाखानक्षत्रे शुभे कर्कटलग्ने कुरङ्गनगरीपूर्णवरप्रदानेन योगिराट् सेनेश्वरांशतः कारेः नाथनायक्यां शठकोपः अवततार । तस्यावतारश्लोकाः श्रूयन्ते -

*राधे कलितवैराधे वैशाख्यां काव्यवासरे ।*
*लग्ने कर्कटकेऽसूत तनयं नाथनायिका ॥*

*आदौ कलेर्हि कुरुकापुरिपाण्ड्यदेशे*
*वैशाखमासि मघवानलभेश जातम् ।*
*सेनापतेः, पदजकारिगृहेऽवतीर्णं*
*श्रीशास्पदं शठरिपुं शरणं प्रपद्ये ॥*

*वैशाखे तु विशाखायां कुरुकापुरिकारिजम् ।*
*पाण्ड्यदेशे कलेरादौ शठारिं सैन्यपं भजे ॥*

शठकोपावतारात्पूर्वमेव आदिशेषः कुरुकापुर्यां चिंचारूपेण ईशशासनात् उद्भूत् । सूर्योदयात्पूर्वमरुणोदय इव मधुरकविः अपि अजायत ।

शठारिः विष्वक्सेनकृपावशात् प्रह्लाद इव गर्भे एव सर्वार्थान् विदितवान् । सूर्य इव निर्मलः सम्पूर्णज्ञानमवाप्य, जगत्सर्वं कल्यात्मकं विलोक्य, नेत्रे निमील्य, निश्चेष्टः तस्थौ । मलमूत्रादिरहितं, रोदनादिविवर्जितं, सर्वावयवसम्पत्तिं, दृढाङ्गं दिव्यतेजसं, निरन्तरं भगवत्पादविन्यस्तसर्वभारं, तत्पादाम्भोरुहध्यानरसास्वादैकधारकं निश्चेष्टं पुत्रं विलोक्य जनकः कारिः पुत्रमादाय विस्मितमानसः, कुरकानाथसन्निधिं गातवान् । शङ्खतीर्थसमीपे ताम्रायाः दक्षिणे तटे सुस्थितं पुण्डरीकाक्षं शङ्खचक्रधरं हरिं, धरया रमया सह वरदाभयहस्तं नवनीरदनीलाभं, पीतवाससम्, अच्युतम्, आदिनाथं प्रणम्य, तस्य सन्निधौ भक्तिपूर्वकं तं बालं चिंचामूले निक्षिप्य, मारन् इति नामकरणं कृत्वा आत्मजप्रतिपत्तिं विहाय, भगवत्प्रतिपत्तिं विधाय गृहं जगाम् , सुज्ञानपूर्णः तिन्त्रिणीमूलसंश्रयः मारः षोडशवर्षपर्यन्तं मूकीभावेन नेत्रे श्रीमन्नारायणपादारविन्दचिन्तनामृत-रसपानमत्तचित्तः अवतस्थे ।

तस्मिन् काले मधुरकविसूरिः बदरिकाश्रमात् अयोध्यामगमत् । अयोध्यायां सीतासहितं श्रीरामचन्द्रं संसेव्य, एकस्मिन् दिने रात्रौ जलशङ्कार्थमुत्थितः दक्षिणाभिमुखः आयातः । तदा दक्षिणस्यां दिशि अप्राकृतं दिव्यं कान्तिं विलोक्य, विस्मितः किमेतत् ? अग्निना ग्रामो दह्यते वा ?अथवा दावाननलो वा ? इति विचिन्तयन्, द्वित्रेषु दिवसेषु एवं विलोक्य, तदप्राकृतदिव्यतेजः इत्यमन्यत । तत्तेजः जिज्ञासुः तस्मात् निर्ययौ । एकस्मिन् ग्रामे आसायमास्थितः तेजो परीक्षार्थं निशि दक्षिणाभिमुखः प्रतस्थे । एवं साकेतनगरात् निर्गत्य दक्षिणस्यां दिशि स्थितान् अखिलान् दिव्यदेशान् दृष्ट्वा पवित्रतमं श्रीरङ्गक्षेत्रमाससाद । तत्रापि दक्षिणे भागे तत्तेजः समदृश्यत । तस्मादन्यत्र कुत्रापि नैवादृश्यत । दृष्टं तेजः तत्रैव वर्तत इति निश्चितः मतिमान् मधुरकविः सम्यक् गवेषयन् तस्थौ । एवं विचिन्वतः तस्य चिंचामूले महामुनिः शठजित् भानुवत् दृष्टः । पद्मसनोपविषष्टं परमपदयुगले निविष्टचैतन्यं परतत्त्वबोधमुद्रं परमगुरुं पराङ्कुशं वन्दे । तथा तिन्त्रिणीमूलमाश्रितं, श्रीपराङ्कुशं विलोक्य, विस्मयाविष्टः सः मधुरकविः मया दृष्टं महदद्भुतमप्राकृततेजः इदमेवेति निश्चित्य, तस्य समीपमगमत् । महता मौनेन युक्तं मुकुलीकृतलोचनं शठारिं विलोक्य, अयम्, अन्धो वा यदि मूको वा इति शङ्कितः, तत्परीक्षार्थं तदग्रे दृढं पाषाणं अपातयत् । तस्य महारवं श्रुत्वा, शठारिः नेत्रे उन्मील्य, पुरस्थितं पाषाणं अद्राक्षीत् । नैवान्धोऽयमिति ज्ञात्वा, सन्तुष्टः मधुरकविः द्वितीयशोधनार्थाय पापरहित ! प्रकृतेः उदरात् जातः जीवः किं भक्षयित्वा, कुत्र वर्तते ? इति महद्वाक्यमुवाच । तस्य तद्वचनं श्रुत्वा शठकोपः तद्वस्तु भक्षयन् जीवः तत्रैव वर्तते इत्यब्रवीत् । तद्वचः निशम्य, सन्तुष्टः मधुरकविः कृतार्थः गुरुपादाम्बुजं ध्यायन्, गुरोः नाम सदा जपन्, भक्त्या अनिशं शुश्रूषां कुर्वन् तत्रैवाचार्यसन्निधौ अतिष्ठत ।

तस्मिन् काले आदिदेवः, जगन्नाथः वासुदेवः, जगत्पतिः, चतुर्भुजः नीलमेघश्यामः, श्रीवैकुण्ठनाथः, भगवान्, गरुडवाहनारूढः, श्रीभूनीलादिसहितः, दिव्यात्मस्वरूपः, दिव्यमङ्गलविग्रहः, समस्तकल्याणगुणैश्वर्यैः सहितः श्रीमन्नारायणः साक्षात्कृतः । महत् भगवद्रूपं, तत्तत्कल्याणगुणादिकं तत्सर्वं सम्यगनुभूय शठजित् ब्रह्मानन्दार्णवे निमग्नः अन्यं किञ्चिदपि न वेद । भगवतो विष्णोः दिव्यात्मस्वरूपं, दिव्यमङ्गविग्रहं भक्तध्येयान् दिव्यगुणान् निखिलान् बुभुजे । ब्रह्मानुभवसञ्जातप्रमोदानन्दः वकुलाभरणोदरे स्थितैः उत्कृष्टभावार्थैः सह बहिरागताः चतुर्मुखब्रह्मणः चत्वारः वेदाः यथा बहिरागताः तथा शठारिमुखात् चतुर्णां वेदानां सारार्थः

दिव्यप्रबन्धचतुष्टयरूपेण बहिरागतः। ऋग्वेदस्य सारार्थरूपेण शतपाशुरात्मकेन तिरुविरुत्तम् नाम प्रबन्ध विरचितः। यजुर्वेदस्य सारार्थरूपेण सप्तपाशुरात्मकेन तिरुवाशिरयम् नाम प्रबन्धः विरचितः। अधर्वणवेदस्य सारार्थरूपेण पेरियतिरुवन्दादि इति प्रबन्धः विरचितः। तस्मिन् सप्ताशीति पाशुराणि सन्ति। सामवेदस्य सारार्थरूपेण द्विशतैकसहस्रपाशुरैः तिरुवायिमोलि इति नाम्ना सहस्रगीतिप्रबन्धः विरचितः। वेदसारतमं द्वयमन्त्रार्थं लोकरक्षणाय विशदीकृतं शठारिणा दिव्यप्रबन्धेषु। श्रीरङ्गादिदिव्यक्षेत्रेभ्यः क्षेत्राधिपतयः शठारेः साक्षात्कारं प्रसाद्य, पाशुरैः कीर्तितवनन्तः। श्रीवैष्णवसमृद्धये शठारिः मङ्गलाशासनं चक्रे। शठारि वैभवं दृष्टा सन्तुष्ठाः सकालाः सुराः सम्प्राप्तमंगलाः तस्मात् स्वान् लोकान् सप्रपेदिरे। अष्टोत्तरशतस्थानस्थितानां परमात्मनां श्रीरङ्गेशादयः द्वात्रिंशद्देवाः विष्णुमूर्तयः प्रत्यक्षीभूताः। श्रीकृष्णस्य सौन्दर्यं दृष्ट्वा शठारिः त्रेधा विष्णुदशमासान् मूर्छितः। एवं संस्तुताः देवाः सर्वे स्वस्थानानि प्रपेदिरे। भगवद्विषयान् ग्रन्थान् चतुरः विधाय, मधुरकव्यादिभ्यः लोकसंरक्षणार्थाय उपदिश्य महायशाः कृतकृत्याः शठारिदिव्यसूरिवरः। भूलोके पञ्चत्रिशति वर्षणि सुखेन समास्थिताः। चिंचामूले पद्मासनस्थः मलमूत्रादिरहितः, क्षुत्पिपासादिवर्जितः अहर्निशं श्रीमन्नारायणपादपङ्कजध्यानरसानुभवधारकः आपञ्चत्रिंशदब्दं सुखेन एकवर्त्मना स्थित्वा, विबुधैः सम्पूज्यमानः, अनेककर्मभिः पित्रोः अतुलमानन्दं विधाय, स्ववंशं जगतीतले आचन्द्रार्कं प्रतिष्टाप्य, नित्यसूरिभिः श्रीवैकुण्ठनगरं प्राप। तत्रैव तिंत्रिणीमूले पूर्ववत् पद्मासनस्थः अद्यापि परिदृश्यते। प्रपन्नजनकूटस्थः, महायशाः, कारिसूनुः शठारिः अतिमानुषप्रभाव-शालिनः। तैषां चरितं शृण्वतां पठतां स्मरतां, नमतामपि सर्वाभीष्टानि शठजित् कृपयैव दीयन्ते। एतैः एव श्रीवैष्णवमतं सम्यक्प्रकाशितम्।

***माता पिता युवतयस्तनया विभूतिः सर्वं यदेव नियमेन मदन्वयानाम्।***
***आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना॥***

## तिकुवायिमोलि

अस्मिन् प्रबन्धे ११०२ पाशुराणि सन्ति। शतक, दशक, पाशुररूपविभागः अस्मिन् प्रबन्धे कृतः। अन्त्यादि सम्प्रदायः अस्मिन् प्रबन्धे अनुसृतः। पाशुराणि रागतालबद्धात्मकानि। प्रथमपाशुरादारभ्य अन्तिमपाशुरावधि विशेषभगवद्गुणानुभवः, भगवत्साक्षात्कारः, भगवत्सान्निध्यप्राप्तेः स्तोत्राण्येव सन्ति। प्रार्थनायां नायिकावस्थाथां

दीनालापनानि बहुहृद्यानि । अत एव अस्य प्रबन्धस्य भगवद्विषयः इति नामान्तरमस्ति । दशशतकात्मकेऽस्मिन् प्रबन्धे प्रथमशतके समस्तकल्याणगुणात्मकस्य, नित्यसूरिसंसेवितस्य, उभयविभूतिनाथस्य, सर्वस्मात्परस्य सर्वेश्वरस्य श्रीमन्नारायणस्य कैङ्कर्येणैवं जीवात्मनां सर्वेषामपि उज्जीवनमिति भक्तिपूर्वकज्ञानेन, अज्ञाननाशेन, भगवच्चरणकमलसंसेवनेनैव संसिद्धिरिति तत्त्वहितपुरुषार्थाः प्रबोधिताः । भगवतो नारायणस्य परत्वस्थापनं कृतम् । इतरविषयान् त्यक्त्वा भगवत्समाश्रयणोपदेशः कृतः । भक्तानां विषये भगवतः सौलभ्यकाष्ठानिरूपणं कृतम् । नायकीदशां प्राप्य अपराधसहत्वगुणं पुरस्कृत्य पक्ष्यादिदूतप्रेषणप्रतिपादनं कृतम् ।

द्वितीयशतके समस्तपदार्थानामीश्वरविरहेण स्वसमानदुःखभावत्वनिरूपणं कृतम् । पुराणेतिहासावनुसृत्येश्वरावतारे परत्ववर्णनं कृतम् । नित्यकैङ्कर्यसाम्राज्य-च्युतस्यात्मनः सदाचार्यपुरुषकारेण हरौ समर्पणाय उपदेशः कृतः । भगवतः नित्सूरिसहितानां भूषणास्त्रादीनां स्वरूपवर्णनं कृतम् । केशवादिद्वादशनामसम्बन्धेन स्वसम्बन्धिनामपि मुक्ति भाक्त्ववर्णनंकृतम् । स्वसम्बन्धिष्वपि हरेः प्रीतिमवेक्ष्य स्वस्य हर्षातिरेकवर्णनं कृतम् । सर्वानन्दयुक्ते मोक्षेऽपि ममेच्छा नास्ति, तव चरणौ मम मस्तके निधेहीति प्रार्थनं कृतम् । भगवतो वनाद्रिनाथस्य सर्वविधसमाश्रयणार्थं प्रोत्साहनकृतम् ।

तृतीयशतके सुन्दरभुजस्य दिव्यवयवानां श्रीभूषणानां च सुषुमावत्वं दृष्ट्वा स्वस्याश्चर्यप्रकटनं कृतम् । हे भगवन् । त्वं जगत्सृष्टिं कृत्वा निवृत्तोऽसि, अहं स्वानिन्द्रियाणि विषयप्रवणानि कृत्वा अनर्थं प्राप्तवानिति क्लिष्यता तत्प्राप्त्यवधिनिर्धारणाय निवेदनं कृतम् । श्रीवेङ्कटेश्वरस्य श्रीचरणयोः सर्वदेशसर्वकालसर्वावस्थास्वपि नित्यकैङ्कर्यस्य मनोरथाविष्कारः कृतः । तद्विभूतिविस्तारस्यानन्त्यात् सामान्यतया चेतनाचेतनविभूतिकत्वनिरूपणं कृतम् । आश्रितान् श्रीवैकुण्ठमहानगरादगत्य रक्षितवतः सौलभ्यानुसन्धानेन विकृतिरहितानामवस्तत्वनिरूपणं कृतम् । सुन्दरस्य भगवतः सौन्दर्येण जितानां श्रीवैष्णवानां स्वशेषित्वनिरूपणं कृतम् । भगवद्विषये स्वहृदयस्य जायमानचापल्यातिशयस्य वर्णनं कृतम् । क्षुद्रविषयेषु काव्यगानस्य निष्प्रयोजनत्वात् तान् विहाय सर्वेश्वरस्तवाय कवीनामुद्बोधनं कृतम् । आश्रितरक्षणाय अनेकावतारान् धृतवतौ विरोधिनिरसनशीलस्य गुणान् स्तोतुं प्रवृत्तस्य स्वस्य न्यूनताराहित्यवर्णनं कृतम् ।

चतुर्थशतके कैङ्कर्यप्राप्तेः सुलभोपायः तस्य श्रीमन्नारायणस्य चरणकमलसेवा एवेति, तस्य कैङ्कर्यस्य प्राप्तेः अवरोधः कैवल्यैश्वर्यापेक्षा एवेति, पञ्चभूतप्रभावितेभ्यः कामक्रोधादिअरिषड्वर्गेभ्यः विमुक्तिमार्गः देवतान्तरप्रयोजनान्तराणि विहाय भगवदाश्रयणरुचिप्राप्तिरेवेत्युक्तम्। निखिलकल्याणगुणसेवधिं सर्वाधिक-विभूतियुक्तं वैकुण्ठनाथं स्तुवतः ममानवाप्तं किञ्चिदपि नास्ति । तेन लोके मत्सदृशभाग्यशाली कोऽपि नास्तीति मङ्गलाशासनकरणं कृतम् ।

पञ्चमशतके भगवदनुभवजनितप्रीतिपूर्वकप्रकर्षात् स्वोत्कर्षस्य अनुसन्धानं कृत्वा, परमकारुणिकेन परमात्मना दत्तेनन भगवद्भागवतप्रीत्यतिशयेन परिष्कृतानां श्रीवैष्णवानां, परमपदश्वेतद्वीपवासिनां मङ्गलाशासनं कुर्वन्ति । असुरस्वभावजनानामपि उज्जीवनाय भक्तिमार्गं दर्शयन्ति। स्वोपदेशेन क्षपितकल्मषां समिध्यमाना श्रीवैष्णवसमृद्धिमालोक्य अतीव मुदा मङ्गलाशासनं कुर्वन्ति । त्वत्सौन्दर्येण मां द्रावयन्तं कुम्भकोणे शयानं त्वां पशयन्नपि शीतलावलोकनमालिङ्गनं कुर्वन्तं न पश्यामीति खेदप्रकटनं कृतम् ।

षष्ठशतके अनिष्टनिवृत्तेः, इष्टप्राप्तेश्च सुलभोपायः परमात्मनः चरणशरणमेवेति परमसुलभोपायः प्रदर्शितः । तत्सहकृतवत्योः पुरुषकारभूतयोः श्रीमाहालक्ष्मीअलिवेलुमट्गयोः समक्षे तिरुमलश्रीनिवासस्य चरणशरणं प्रपद्यन्ते ।

सप्तमशतके चरणशरणप्राप्तिः केवलमानसानुभव एव । बाह्यसंश्लेषाभावेन इदानीमपि संसारे एव मामुपस्थापितवान् परमात्मेति चिन्ताक्रान्ताः सन्तः संसारात् विमुक्तिः कदा लभेत इति परमात्मानः स्तवनं कृत्वा, तिरुवायिमोलि गानार्थमेव एवं प्रकृतौ मामुपस्थापितवान् परमात्मेति ज्ञात्वा, तिरुवारन् विल्लै इति दिव्यदेशे विराजमानस्य श्रियःपतेः तिरुवायिमोलिगानश्रावणाय उद्युक्ताः भवन्ति ।

अष्टमशतके दिव्यायुधदिव्यमङ्गलदिव्यविग्रहसन्दर्शनेन संजनितानन्दानुभवेन मङ्गलाशासनानि कृत्वा, अर्चावताररूपेण दिव्यदेशेषु विराजमानस्य परमात्मनः सौन्दर्यसौशील्यसौलभ्यादीननुभवन्ति ।

नवमशतके सर्वव्यापि नारायणः सर्वशक्तियुक्तः इति, निर्हेतुककटाक्षप्रदः इति, अर्थितार्थपरिदानदीक्षितः इति, विशिष्य निरुपाधिकबन्धुः इति ज्ञात्वा, तस्य भगवतः शीलगुणानुभवैकलग्नाः सन्तः स्वस्यार्तिं पक्षिभिः द्वारा परमात्मानं प्रति सन्देशं प्रेषयन्तः दिव्यदेशेषु विराजमानानां अर्चामूर्तिणां स्तवनं कुर्वन्ति । तानि दिव्यक्षेत्राणि तिरुप्पुलिगुडि, तिरुवेङ्गडम् इत्यादीनि ।

दशमशतके भगवत्पादसेवानुभवजनितप्रीतिकारितनित्यकैङ्कर्याचरणाय प्रतिबन्धकनिरोधेन अर्चिरादिमार्गेण परमपदं गंन्तुं तिरुमोगूरु इति दिव्यदेशे विराजमानं कालमेघसदृशं परमात्मानं शरणं प्रपद्यन्ते । भागवतोत्तमैः सह भगवत्सौलभ्यनिलयस्य तिरुवनन्तपुरक्षेत्रस्याधिपतिमाश्रयन्ति। इतरेषां संसारजनानां सर्वेषमपि उज्जीवनोपायमुपदिशन्ति । तिरुवाट्टार् इति क्षेत्रस्य अदिनाथमाश्रयन्ति । तेनूतिरुप्पेरै इति दिव्यक्षेत्राधिपतिं स्तुवन्ति। अर्चिरादिमार्गेण श्रीवैकुण्ठं गत्वा, तत्र नित्यसूरिभिः संसेव्यमानं श्रीवैकुण्ठनाथं, लक्ष्मीदेवीं च दृष्ट्वा, नित्यमुक्तैः सहावाप्तनित्यानुभवनानन्दवैभवातिशयान् प्रत्यक्षसमानाकारेण श्रावयन्ति ।

अखिलहेयप्रत्यनीककल्याणैकतानज्ञानानन्दस्वरूपः अनवधिकातिशय-स्वाभाविक ज्ञानबलैश्वर्यवीर्यतेजश्शक्तिसौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्य-कारुण्यमाधुर्यगांभीर्यौदार्यचातुर्य स्थैर्य धैर्यशौर्यपराक्रमः सत्यकामः सत्यसङ्कल्पः, स्वेचित विविध विचित्रानन्ताश्चर्यनित्यनिरवद्यनिरतिशयसुगन्धनिरतिशय-सुखस्फर्शनिरतिशयौज्ज्वल्यकिरीटमकुटचूडावतंसमकरुकुण्डलग्रैवेयकहार-केयूरकटक श्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमित-दिव्यभूषणः, स्वानुरूपाचिन्त्यशक्तिशङ्खचक्रगदाशार्ङ्गाद्यसंख्येयनित्यनिखद्य-निरतिशयकल्पयाणदिव्यायुधः, स्वाभिमतनित्यनिरवद्यानुरूपस्वरूपरूपगुण-विभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभः श्रीवैकुण्ठनाथः श्रीमन्नारायणः परमभक्तियुक्तस्य शठकोपमुनीन्द्रस्य सायुज्यं दत्वानुगृहीतवान्। अनेन परिसमाप्यते तिरुवायिमोलिप्रबन्धः ।

*मङ्गलाशासनपरैः मदाचार्यपुरोगमैः ।*<br>
*सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ।।*

**तिरुवाशिरियम्**

भगवन्निर्हेतुककृपासमासादितसर्वज्ञत्वभद्रेषु दिव्यसूरिषु अग्रस्थानार्हाः प्रपन्नजनकूटस्थाः शठकोपसूरयः । तेषां ग्रन्थाः चतुर्वेदसारभूताः तिरुविरुत्तम्, तिरुवाशिरियम्, पेरुयतिरुवन्दादि, तिरुवायूमोलि इति चत्वारः । यजुर्वेदसारभूतः दिव्यप्रबन्धः तिरुवाशिरियम्। अस्मिन् ग्रन्थे सप्तपाशुराणि सन्ति। आशिरियच्छंदसि ग्रथितत्वात् तिरुवाशिरियम् इति नाम्ना प्रसिद्धम्। भगवद्गुणानुभवाय श्रीवैकुण्ठप्राप्तिं वाञ्छन्ति शठछकोपसूरयः। भूलोके एव तदनुभवं दत्वा, तेषां परमानन्दपरीवाहः

दिव्यप्रबन्धरूपेण लोकोज्जीवनाय हेतुरिति मत्वा परमात्मा स्वस्वरूपगुणविभूतीः प्रदर्शितवन्तः । तत्साक्षात्कारेण अमन्दानन्दमनुभवन्ति शठकोपसूरयः अस्मिन् तिरुवाशिरियं प्रबन्धे ।

अस्य प्रबन्धस्यारम्भे परमात्मनः दिव्यमङ्गलविग्रहविलक्षणतां प्रस्तुवन्ति । रक्तवर्णमेघेनावृतकिरीटस्थाने सूर्यं, कण्ठाभरणस्थाने चन्द्रं, विविधाभरणस्थानेषु नक्षत्राणि च धृत्वा, क्षीरसागरे शयनः श्रीमहाविष्णुः पीताम्बरसंवीतः, किरीटहारग्रैवेयकादिनानाविधदिव्याभरणभूषितः शेषशयनः योगनिद्रानिरतः ब्रह्मरुद्रेन्द्रादिनिर्जरसंस्तूयमानः सर्वेश्वरः पद्मनाभः त्रिविक्रमदेवः । जयतु तस्मै देवाय ।

स्वसङ्कल्पमात्रेणैव चराचरप्रपञ्चमिदं विसृज्य, प्रलये उदरे निक्षिप्य रक्षति । स्वपरत्वादर्शनेन नीचातिनीचं मां कटाक्षितवतः स्वामिनः सौलभ्यमवाङ्मनसगोचरम् । विश्वसृष्टिस्थितिसंहारकर्तुः सर्वेश्वरस्य शब्दायमाना भरणाञ्चितश्रीचरणारविन्दं शिरसि धारणीयमिति अत्यन्ततीव्रमनोरथ एवमकरन्दामृतप्रवाहः । तस्मिन् प्रवाहे निमग्न एव अत्यन्तप्रियः । धर्मार्थकामेषु एकं प्राप्य संतुष्टाः भवेयुः अज्ञानिनः । अम्बुजोदरदिव्यपादारविन्दचिन्तनामृतपानविशेषमत्तचित्ताः ज्ञानिनः इतरपुरुषार्थान् विहाय मोक्षपुरुषार्थ एव परमोत्तमतमिति, महदानन्दकरमिति, तैलधारावद-विच्छिन्नस्मृतिसन्तानरूपविष्णुभक्तिरसामृतमेव निरन्तरमनुभवन्ति ।

तृतीयपाशुरे सप्तविशेषणैः परमात्मानं स्तुवन्ति । सकललोकान् सन्मार्गे प्रवर्तयितुं मनसि सङ्कल्प्य, लोकैः, सर्वैः सङ्कीर्त्यमानः, श्रुतिस्मृतिरूपाभ्यां स्वाज्ञापालनकर्ता, देवाधिदेवः, त्रिमूर्तिषु प्रधानतमः । अद्वितीयः, उज्ज्वलाभरणा-ञ्चितवक्षः, अमृताय क्षीरसागरमथनसन्दर्भे मन्धरपर्वतं कवाटरूपेण, वासुकिं सूत्ररूपेण निर्माता, इति तादृशस्य परमात्मनः दिव्यचेष्टासु आनन्दानुभवनिमग्नानां श्रीवैष्णवानां दास्यं कर्तुम् अवकाशं वाच्छन्ति ।

चतुर्दशभुवनानां, ब्रह्मादिसकलप्राणिनां नाशाय महाप्रलयं करोति सर्वेश्वरः । पुनः सृष्टिकाले उपादाननिमित्तसहकारिकारणरूपैः स्वयमेव स्वनाभिद्वारा पद्मात् चतुर्मुखं विसृज्य, तद्द्वारा रुद्रादिदेवान् विसृज्य, तेषां तत्तत्कार्यनिर्वहणसामर्थ्यमपि प्रसादितवान् । एवंविध अत्याश्चर्यशक्तिमान् परमात्मा अनुग्रहसम्पन्नः स्वाश्रितजनान् अनुगृण्हाति । तद्भाग्यं मम कदा लभेत ?

हे परमपुरुष ! बलिनिग्रहसन्दर्भे पद्भ्यामेव ऊर्ध्वाधोलोकान् सर्वानपि

आक्रम्य, तृतीयं बलिचक्रवर्तिनः शिरसि उपस्थाप्य, आश्चर्यमहादिव्यचेष्टैः जगद्रक्षक इति सुप्रथितं भवन्तमेव सदा सेवन्ते । नमोऽस्त्वनन्ताय सहस्रमूर्तये, सहस्रपादाक्षिशिशेरुबाहवे, सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः इति।

महाप्रलयकाले जीवानां समुद्धरणाय परमात्मा तेषां करणकलेबरेन्द्रियाणि अनुगृहीतवान् । प्रलयसागरात् भूमिमुद्धृत्य वराहावताररूपेण जगद्रक्षणं कृतवान् । त्रिविक्रमावतारेऽपि सर्वान् रक्षितवान् । एवं सर्वलोकसंरक्षणे सर्वदा जागरूकं परमात्मानं श्रीमन्नारायणं विहाय, रक्षादक्षतारहितानांमाराधनं कुर्वन्ति अज्ञानिनः । मातृदेवतां विहाय मृत्पीठस्य पूजनमिव, श्रीमन्नारायणं विहाय इतरदेवतापूजनमपि अज्ञानजनकमेव । अज्ञानिनां स्वभावः दुरतिक्रमः खलु ।

शिवब्रह्मदेवेन्द्रादिदेवान् सर्वान् पृथिव्यप्तेजोवाय्वाकाशपञ्चभूतानि, चतुर्दशभुवनानि, समस्तचराचरविश्वमपि स्वउदरे उपस्थाप्य शिशुरूपेण वटपत्रे शयानः महाश्चर्यचेष्टितः श्रीमन्नारायण एव अस्माकं सर्वदा आश्रयणीयः । अन्यं नाङ्गीकरिष्यामः । इति सप्तपाशुरेषु भगवत्स्वरूपगुणविभूतीनामनुभवः उक्तः ।

**पेरियतिरुवन्दादि**

मुक्तपदग्रस्तत्वात् अन्तादि इति, स्वारस्यगुणातिशयेन पेरिय इति पेरिय तिरवन्दादिनाम्ना प्रसिद्धः अयं दिव्यप्रबन्धः अथर्वणवेदसारभूतः इति वदन्ति आर्याः । अयं दिव्यप्रबन्धः प्रपन्नजनसन्ततेः सर्वदा कण्ठधारणयोगयः । श्रवणमनन-निदिध्यासनार्हः ।

मत्तः पूर्वमेव स्वामिनं स्तोतुमुद्यक्त हे मनः, नीलमेघश्यामः सर्वेश्वरः । तस्य क्लयाणगुणसम्पदं मम जिह्वया सुन्दरशब्दैः सङ्कीर्तयितुं सहक्रियताम् । ''यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'' इति वाचामगोचरम् अनन्तकल्यणगुणजलधिं भवन्तं वाचा स्तोतुमुद्युक्ताश्चेत् अशक्ता एव वयम् । स्तोत्राभावेन स्थातुं न शक्नुमः । मनसा वाचा कर्मणा स्तोत्रं न करणीयमित्येव मम अभिप्रायः ! तथापि तथा सङ्कीर्तनं त्यक्तुं मम मनः नाङ्गीकरोति । अहं किं करिष्यामि ? मम वाक्प्रवतकः निवर्तकः भवानेव । अहं निमित्तमात्र एव । नीलमेघश्यामः श्रीकृष्णः मया दृष्टः । सागरसदृशगम्भीरः, परंज्योतिस्वरूपः सः मम हृदये वसति । मत्तः भाग्यवान् कीर्तिमान् अन्यः कः ?

लीलामानुषविग्रहः परमात्मैव मम माता पिता आचार्यश्च । तस्य अतिमानुषचेष्टाः अत्याश्चर्यकराः लोकोपकारकाश्च ।

हे देव । भवन्तमेव प्राप्यः प्रापक इति प्रार्थये । श्यामचूतकिसलयसुन्दर-सुकुमार दिव्यमङ्गलविग्रहानुभूतिं प्रदेयमिति प्रार्थये । पद्मालयाधिष्ठितवक्षो विराजित, प्रलयार्णवमग्नक्षोणीसमुद्धारक, मम मनः त्वत्पादपद्मयोः सन्निधौ स्थितम् । पापानां प्रथमोऽहं मात्रं भवतः । दूरे स्थितः आस्वादनीयकल्याणगुणाकर ! त्रिविक्रमावतारभूतं भवन्तं द्रष्टुं वयमशक्ताः । तथापि आशा वर्धते । कारणं न जानामि । भवतः समीपमागन्तुं उपायं ब्रूहि । परमात्मानं द्रष्टुं, समीप्य अनुभोक्तुं च अस्माकं शक्त्यभावेऽपि निग्रहानुग्रहसमर्थं तं परमात्मानं सर्वदा संस्मरामि । तदेव अस्माकं सत्ताहेतुकं भवति । श्रियःपतेः भजनाय अष्टवसवः, एकादशरुद्राः द्वादशादित्याः अश्विनीदेवौ इति । त्रयस्त्रिंशतिः अमराः अर्हाः । दोषभूयिष्ठाः वयमनर्हाः । हे भगवान्, पृथिव्यप्तेजोपवाय्वाकाशपञ्चभूतानि अपि भवतः शरीरमेव । तेषामन्तर्यामिरूपेण स्थितं भवन्तं जेतुमहङ्कारेण उद्युक्तः रावणः हतः । हे मनः, परमात्मा भक्तवासल्यपूर्णः इति मया उपदिश्यते, तथापि न शृणोषि । अगाधदुःखसागरे मां पातयितुं यत्नं करोषि । परमात्मनः दिव्यपादारविन्दयोः सेवा एव मम कर्तव्यम् । हे भगवान् । अन्यायमार्गे किमपि न वाञ्छाम्यहम् । मयि सम्पूर्णदासत्वं नास्तीति मां न परित्यजतु । अशक्तस्य अल्पज्ञस्य मम उत्तारकः भवानेव । दिव्यभास्वरदिव्य-मङ्गलविग्रहवन्तं भवन्तुं सन्दर्शितुमेव सदा उत्सहे । हे मनः, श्यामसुन्दरं श्रीकृष्णम् आश्रयणीयः, अप्रधृष्यः इति न ज्ञात्वा पूतना अपकारायागतावती, हता । तथैव भवती अपि परमात्मानं न ज्ञात्वा विषयान्तरानुभूत्या भ्रष्टा । इदानीं रक्षकः कः ? क्षीरसागरे अनन्तशयानस्य श्रीमन्नारायणस्य अनन्तकल्याणगुणानां सङ्कीर्तनेन सर्वघोरपापकर्माणि नष्टानि स्युः । अतः हे मन ! भगवद्गुणान् सङ्कीर्तय ।

हे वनगिरीश ! वरद ! वामन ! सृष्टिस्थितिसंहारैः भूदेव्याः भारं सर्वं भवानेव वहति । तां भूमिमेव बलिचक्रवर्तिनः दानरूपेण स्वीकृतवान् । भवतः चातुर्यं स्तोतुं वयं न शक्नुमः । दशकन्धरं हत्वा जगत्कल्याणं कृत्वा दुर्जनैः कृतानि कर्माणि भार्यया न वदति । परमात्मनः क्षमा कीदृशी ? अतिमहत्तरा । भक्तानां संरक्षणाय दुर्जनैः युद्धं कृतवान् । सृष्टिस्थितिसंहारेषु सर्वदा निमग्नः परमात्मा आश्रितजनरक्षकः । भगवद्विषय एव इहपरसुखप्रदः । इतरविषयाः अनर्थदायकाः । परमात्मनः कल्यणगुणपरम्परा अनन्ता । परमात्मनः दिव्यगुणवर्णनं सम्पूर्णं कर्तुं कः समर्थः ? त्रिविक्रमस्य

पवित्रपादमहिमावर्णनमादिशेषस्यापि अशक्यमेव । श्रीवामनपादस्मरणेन सर्वपापहरणं भवति । दुष्टशिष्टाना सर्वेषामपि शिरोधारणं, सर्वपापविमोचकं श्रीचरणम् । ''न तत्समश्चाभ्यधिकश्च दृश्यते'' । घोरनरकनिवारणाय, सर्वरक्षकं लक्ष्मीनाथं शरणं व्रजे । परमात्मा एक एव पुरुषोत्तमः, सर्वलोकेशः, परात्परः, निर्हेतुककृपया अवतारभूतः, निरुपमानः, सर्वान्तर्यामि, सर्वसंरक्षकः । पण्डिताः पामराश्च अद्य लोके सम्मिश्रिताः । केचन देवतान्तरभक्ताः । अन्ये उपायान्तरानुष्ठानपराः अन्ये प्रयोजनान्तरापेक्षिणः नित्यसूरिनायकस्य श्रीकृष्णस्याश्रयणेन मम मनसि दुःखानि सर्वाण्यपि दूरीकृतानि । भगवत्समाश्रयणेन अलौकिकभगवदानन्दानुभूतिं प्रकटितवन्तः शठकोपसूरयः । मनोनेत्रविकासेन भगवद्दिव्यसाक्षात्कारेण मानसानुभवप्रकटनमेव दिव्यप्रबन्धेऽस्मिन् मुख्यतमम् । ''न मांसचक्षुरभिवीक्षते तम् न चक्षुषा पश्यति कश्चनैनम्'' इति वेदाः घोषयन्ति खलु । मानससाक्षात्कारानन्तरमेव अमन्दानन्दानुभूतिः द्योतते । तुलसीमालया प्रकाशितः आश्रितसुलभः श्रीमन्नारायणः । परमात्मनापूरितं मम हृदयम् । अतः स्थलाभावात् पापाः बहिर्गतः । भगवत्पादछायारूपेण, पादुकारूपेण, पादरेखारूपेण सर्वदा परमात्मानमाश्रित्यास्मि । भगवान् भक्तसुलभः खलु । परमात्महस्ते विद्यमानं चक्रं दृष्ट्वा पापाः पलायनमकुर्वन् । परमात्मा उरगक्षेत्रे उत्थितः, पाडगक्षेत्रे उपविष्टः, यथोक्तकारिसन्निधौ शयानः मम हृदये तु सर्वविधैः प्रकारैः नाट्यं करोति । प्रह्लादाय लक्ष्मीनारसिंहावतारं धृत्वा महाद्भुतचेष्टाः कृतवान् खलु । परमात्मा एकदा दुर्लभः, एकदा सुलभः, एकदा मध्यस्थः, एकदा परमपदवासः इति न मन्तव्यः । आश्रितसुलभः श्रीमन्नारायणः सर्वदा भक्तसंरक्षणबद्धकङ्कणधर एव । भगवदनुग्रहेणैव मम सद्बुद्धिः भवति । दिव्यतुलसीमालिकाधारिणः स्मरणेन दुःखानि सर्वाणि निर्गतानि स्युः । तुलसीमालाञ्चितवक्षः श्रियःपतिः सर्वदेशसर्वकालसर्वावस्थासु अस्मान् संरक्षति । प्रलयकाले ब्रह्माण्डं सर्वमपि अन्तर्निधाय बालमुकुन्द इव वटपत्रे शेते । वराहरूपेण भूमिमुद्धृत्य राक्षसात् रक्षितवान् । चेतनाचेतनप्रपञ्चस्य सर्वस्यापि रक्षकः श्रीमन्नारायण एव । तादृशशक्तिमान् अन्यः नास्ति । अतः स एव सर्वदा आश्रयणीयः, स्मरणीयः, पूजनीयश्चेति बहुत्र बहुप्रमाणैः श्रीमन्नारायणस्य परत्व-स्थापनं कृतं श्रीमच्छठकोपसूरिणा पेरियतिरुवन्दादिप्रबन्धे ।

पुण्यफलं भगवत्संश्लेषः । पापफलं भगवद्विरहः । पापफलस्य भीतोऽहं क्षणकालमपि व्यर्थं न कुर्वन्, निश्चयेन नित्यसूरिनायकस्य सर्वेश्वरस्य श्रीचरणस्तुतिं

करोमि । जलधिश्यामलवर्णः अरुणकमलायतनेत्रः श्रीमन्नारायण एव वरिष्ठ उपायः । घोरसंसारनरकात् अस्माकं रक्षकः श्रीमन्नारायण एव । नीलादेव्यै वृषभसप्तकमारकं श्रीकृष्णं सदा स्मरामि । अविच्छिन्नभगवदनुभूतेः श्रीवैकुण्ठं गन्तुमिच्छामि । नीलमेघान्, उन्नतपर्वतान्, अगाधसमुद्रं, तमः, पुष्पाणामुपरि विद्यामानान् भ्रमरान् कृष्णवर्णान् सर्वान् दृष्ट्वा श्रीकृष्णविग्रहमेव स्मरामि । इन्द्रियाणां स्वाधीनदशा सम्यक् दशा । इन्द्रियवशात् चञ्चलमनसः दशा दुर्दशा । विषयान्तरेषु प्रवर्तनेन इन्द्रियाणां सन्तुष्टिः न सिद्धा । भगवद्विषये निमग्नश्चेत् अमेयानन्तात्यन्तसन्तुष्टिः सिद्ध्यति । ततः शीतलतुलसीमालाधारणेन भगवच्छरणारविन्दसेवा एव श्रीवैष्णवानां कर्तव्यम् । लीलामानुषविग्रहवन्तं भगवन्तं सन्दर्शितुमेव सदा मम नेत्रे उत्सुकतां प्रदर्शयन्ति । तस्य परमात्मनः कल्याणगुणसङ्कीर्तनमेव वाञ्छति मम वागिन्द्रियम् । मम इन्द्रियाणि भगवदितरविषयान् नेच्छन्ति । यत्र भगवद्गुणानुभवः सिद्ध्यति तदेव परमपदम् । यदाहं भगवद्गुणानुसन्धानाय उद्युक्तः तदानीमेव मम पापाः दूरीकृताः । स्वप्रयत्नेन शेषशयनं समीप्य अनुभोक्तुं न शक्यम् । निर्हेतुककृपया परमात्मैव आगत्य मम हृदि स्थितः । ततः सदा दर्शनभाग्यं मम सिद्धमिति आनन्दं प्रकटयन्ति शठकोपसूरयः । आश्चर्यगुणचेष्टितस्य परमात्मनः निर्हेतुककृपाफलं परमभोग्यम् । सदा भगवद्गुणानुसन्धानमेव रुचिरं भोग्यमिति अनादिघोरमहानरकादपि रक्षकः भोग्यतुलसीमालाञ्चितः श्रीमहाविष्णुः एवेति, उक्तवन्तः शठकोपसूरयः । आकाशं छत्ररूपेण छत्रस्योपरि मुक्तानामिव नक्षत्राणि धृत्वा सर्वलोकान् आक्रम्य, सर्वलोकरक्षकः त्रिविक्रमदेव एव संसारमहाव्याधि-निवारकौषधम् । "अवजानन्ति मां मूढाः मानूषीं तनुमाश्रितम्" इति भगवता स्वयमुक्तरीत्या अवतारपुरषं परमात्मानं ये जानन्ति तं देवाः भजन्ति । ऐहिकामुष्मिकसर्ववरप्रदातुः सर्वेश्वरस्य श्रीचरणारविन्दसेवासङ्कीर्तनमेव सर्वदा कर्तव्यम् । महोज्वलस्वर्णकिरीटाञ्चितः, सहस्रनामसुप्रसिद्धः, सदुर्शनचक्रायुधः, मम हृदि स्थितः । अतः अन्यैः सम्पद्भिः विपद्भिश्च मम सन्तोषसङ्कटौन स्तः । ब्रह्मविष्णुमहेश्वराणामैक्यं वदन्ति केचन । तुल्यतावादः, तुरीयपरत्ववादश्च स्तः । वादत्रयमपि असत्यमेव । सकलचराचरसृष्टिकर्ता ब्रह्मा । सः पद्मोद्भवः । पद्मं तु विष्णोः नाभौ उत्पन्नम् । अतः सकलस्य मूलकारणभूतः श्रीमहाविष्णुः एव । अत एव "विभोः नाभीपद्मो विधिशिवनिदानंभगवतः तदनन्यद् भ्रूभङ्गीपरवदिति सिद्धान्तयति नः" इत्युक्तवन्तः पराशरभट्टार्याः श्रीरङ्गराजस्तवे । विविधानां अतसीकुसुमानां, नीलोत्पलानां

सन्दर्शनेन नीलमेघश्यामस्य दिव्यमङ्गलविग्रहः एव स्फुरति । उभयविभूतिनाथः परमात्मा जगत्सर्वं स्वस्योदरे निक्षिप्तवान् । अहं तु तं परमात्मानमेव मम हृदये निधाय सदा संस्मरामि । केचन आयुरारोग्यैश्वर्यपुत्र-पौत्राभिवृद्धिं वाञ्छन्ति । अनेन संसारफलेन पर्यवसानकाले दुःखप्राप्तिरेव सम्भवति । अतः सर्वदा जगदेकधनुर्धरस्य श्रीरामचन्द्रस्य कल्याणगुणानुभवसत्कालक्षेपमेव वाञ्छामि इति प्रकटितवन्तः शठकोप दिव्यसूरिवराः । भगवद्भक्तिहीनः ब्राह्मणः अपि भ्रष्टः निकृष्ट एव । चण्डालोऽपि भगवद्भक्तिपूर्णश्चेत परमोत्कृष्टः । यावत् संसारः अस्ति तावत् जननमरणजराव्याधयः न त्यजन्ति । संसारमोहक्षय एव मोक्षः । मोक्षः भगवदनुभवरूपः । स्वात्मानुवभवरूपस्य कैवल्यमोक्ष इति नामान्तरमस्ति । त्रिविक्रमदेवचरणसेवारहितं तं परिहृतवन्तः दिव्यसूरयः । भगवद्गुणानुसन्धानमेव सर्वदा प्रतिपादयन्ति । श्रीरामायण-माहाभारत-श्रीमद्भागवत-वैष्णवपुराणदिव्य-प्रबन्धेषु उक्तानां भगवद्गुणानुसन्धानकीर्तनमेव सर्वपापदुःखनिवारकमिति, क्षुद्रविषयान् त्यक्त्वा भगवद्गुणानुसन्धनमेव करणीयमिति प्रबोधितवन्तः शठकपदिव्यसूरयः पेरियतिरुवन्दादिप्रबन्धे ।

**तिरुविरुत्तम्**

अस्मिन् दिव्यप्रबन्धे शतपाशुरेषु भगवत्प्राप्तेः जीवात्मनः वेदनाविषय एव प्रतिपाद्यः । शठकोपसूरिवराणां नारिकेलपाकात्मके अस्मिन् ग्रन्थे वाच्यार्थात् व्यङ्ग्यार्थस्यैव प्राधान्यं दत्तम् । प्रतिपाशुरेऽपि गम्भीरार्थः अन्तर्लग्नः इति वक्तव्यम् । तिरु इति श्रीशब्दभवः । विरुत्तम् नाम द्राविडछन्दोविशेषः । रूपकरूपेणनिर्मिते-ऽस्मिन् प्रबन्धे कानिचन पात्राणि विशुद्धभगवत्कामप्रविष्टानि । स्त्रीपुरुषयोः मध्ये प्रेमविशेषः यथा काम इत्युच्यते, तथैव जीवात्मपरमात्मनोः मध्ये वर्धितः भगवत्कामः । ''उत्तमः पुरुषस्त्वनन्यः परमात्मेत्युदाहृतः'' इत्युक्तरीत्या परमात्मा एक एव पुरुषः । स्त्रीप्रायमितरं जगत् । तथैव नम्माल्वार् सूरिवरः स्त्रियः अवस्थायां नायिकारूपेण, परिचारिकारूपेण, भावोत्कर्षं प्रकटयति अस्मिन् दिव्यप्रबन्धे । सः भावोत्कर्षः सामान्यकामात् भिन्नः । शठकोपनायिकायाः सर्वदिक्षु सर्वत्रापि भगवतः चक्षुर्वैभवदर्शनं, स्मरणं च अत्यद्भुतं वर्णितम् । तथा दर्शनेन परमात्मसन्दर्शनेन शठकोपनायिकायाः आनन्दानुभवो वर्णनातीतः ।

***न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।***
***हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ।।***

इति वेदसूक्तम् अस्मिन् दिव्यप्रबन्धे सुस्पष्टीकृतम् । शठकोपनायिका परमात्मानं प्रति मनस्सन्देशं, हंससन्देशं, मेघसन्देशं च विरहवेदनया प्रेषयति ।

अपरिच्छेद्यस्वरूपस्वभावमहिमादिसंपद्भिः कृष्णावतारे स्वीयतृष्णानिवृत्तेः नवनीतचौर्यम् कृतवान् परमात्मा इति परत्वसौलभ्यादीन् गोपिकास्त्रियः विदिताः सत्यः परमात्मानं स्तुवन्ति । ग्रन्थः स्वापदेशमयः । अन्तरार्थनिलयः । प्रतिपादरसोदयत्वस्य सत्वेऽपि अन्तरार्थानामनवगाहनेन आनन्दरसानुभवः दुस्तरः । व्यङ्ग्यार्थरूपेण, लक्ष्यार्थरूपेण, सूच्यार्थरूपेण च भासते । गर्भवास, जन्म, बाल्ययौवन, वार्धक्य, मृत्यु, नरकरूपचक्रभ्रमणे स्थितानां संसारिजनानां सुखैकास्पदपरमपदप्राप्तेः सुलभोपायः तिरुविरुत्तपाशुर एवेति किडांम्बियाच्चान् स्वामिभिः उक्तम् । अविद्याकर्मवासनारुचयः मोक्षप्राप्तेः प्रतिबन्धकाः इति, तेषां त्यजनं स्वरूपज्ञानवतः कर्तव्यमिति, तेषां निवारकः सर्वेश्वर एवेति, तदर्थमेव सदा परमात्मानं संसेव्य, तस्य प्राप्तेः यत्नः करणीय इति च प्रबोधितम् । पतिवियोगदुःखार्तां वकुलनायकीं दृष्ट्वा परिचारिकाः मङ्गलमाचरन्ति । मनः परमात्मानं प्रति सम्प्रेष्य वकुलनायिका विलम्बमसह्यमाना वायुना सम्भाषणं करोति । विविधप्रकारैः वकुलनायक्याः भगवत्प्रावण्यं सुष्टु वर्णितम् । नयिकारूपेण विरहवेदना सम्यक् वर्णिता । शठकोपसूरभिः श्रीकृष्णस्य शौर्यपराक्रमलीलाक्रीडा विशेषाः अपि सम्यक् वर्णिताः । जगद्रक्षकस्य सर्वेश्वरस्य कृपया शत्रवः अपि मित्राणि भवन्ति । विविधदिव्यक्षेत्रेषु विराजमानानां स्वामिनां सन्निधिं प्रति हसैः, मेघैः वायुना च सन्देशं प्रेषितवती वकुलनायकी अस्मिन् दिव्यप्रबन्धे । तेषु संदेशेषु विरहावस्था वर्णिता, परमात्मनः दिव्यमङ्गलविग्रहसौन्दर्यं च वर्णितम् । भगवदनुग्रहप्राप्तेः प्रतीक्षमाना वकुलनायिका निष्ठुरवचनैः निन्दति, स्तौति विविधप्रकारैः अस्मिन् दिव्यप्रबन्धे । परमात्मनः विविधावतारविशेषाः सम्यक् वर्णिताः । मनस्सन्देशसन्दर्भे अयं श्लोकः अत्र स्फुरतीति आर्योक्तिः । ''नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः । तत्तु तत्रैव रमते हताः पाणिनिना वयम्'' इति । नयिकारूपेण विरहावस्थायां विरहिणीवाक्यानि विविधप्रकारैः सन्देशरूपेण भगवन्तं प्रति सन्देशं प्रेषयति वकुलाभरणकिङ्करः तिरुविरुत्तप्रबन्धे । परमविलक्षणानां श्रीवैष्णवानां निलयस्य कुरुकापुरस्य स्वामिनः शठकोपसूरिवरस्य दिव्यप्रबन्धस्यास्य अर्थसहितानुसन्धानेन पुण्यपापरूपकर्मप्रकृतिं विच्छिद्य पुनरावृत्तिरहितं परमपदं प्राप्नुवन्तीति फलश्रुतिकथनेन शतपाशुरात्मकः तिरुविरुत्तप्रबन्धः समाप्तः ।

**मधुरकवियाल्वार्चरितम्**

*मेषे चित्ता समुद्भूतं पाण्ड्यदेशे गणांशकम् ।*
*श्रीपाराङ्कुशसद्भक्तं मधुरं कविमाश्रये ॥*

*हस्तस्थतालद्वितयं प्रपद्ये शठारिवाग्व्यासमुदारकीर्तिम् ।*
*माधुर्यसंश्लिष्टकवित्वयुक्तं महत्त्वसम्भावितबुद्धितत्त्वम् ॥*

*गणेशः कुमुदो नाम कविर्मधुरसंज्ञकः ।*
*चैत्रमासे शुभेचित्रा तारकायामजायत ॥*

श्रीमच्छठकोपमुनीन्द्रावतारमहितश्रीकुरुकानगरस्य प्राक्भागे क्रोशमात्रतः पाण्ड्यमण्डलमण्डनं तिरुक्कोलूरुनाम पट्टणमासीत् । तत्र परमपुरुषः श्रियःपतिः शेषपर्यङ्के शेते । तस्मिन् पट्टणे सामशाखाध्यायी पूर्वशिखः नारायणपरायणः द्विजोत्तमः आसीत् । ईश्वराब्दे चैत्रमासे शुक्लपक्षे चित्रानक्षत्रे गदांशजः मधुरकविः नारायणाभिधानस्य पुत्रः अवततार । सूर्योदयतः पुरस्तात् अरुणोदयवत् वकुलभूषणभास्करोदयतः प्रागेव सोऽयं महान् मधुरकविः अवतीर्णः । जातस्य तस्य मधुरकवेः शास्त्रानुसारेण तत्तत्कालोचितान्चौलोपनयनादिसंस्कारान् सर्वान् यथाविधि ब्राह्मणैः जनकः कारयामास । पित्रा कृतोपनयनः मधुरकविः वेदवेदाङ्गादि-निखिलमधीत्य, तत्त्वविदामग्रणीः प्रचकाशे कर्णामृतदिव्यसूक्तिग्रन्थचतुरतया मधुरकविरिति नाम दिव्यमविन्दत । महावैराग्यवारिधिः तीर्थयात्रासक्तः दिव्यदेशान् ययौ । अयोध्या, मधुरा, माया, काशी, काञ्ची, अवन्तिका, पुरी, द्वारावती इति मुक्तिदायकान् सप्तदेशान् भक्तिभावतः चरित्वा, अष्टाङ्गयोगनिरतः सन् बदरिकाश्रमे तस्थौ । तस्मात् बदरिकाश्रमात् उत्तरभारते पर्यट्य, अयोध्यानगरमगमत् । भगवद्ध्यानैकतत्परः मधुरकविः सरयूनद्यां स्नात्वा, सीतासहितं रघूत्तमं संसेव्य, भगवद्गुणानुभवतत्परः तत्र उवास ।

कदाचित् रात्रिवेलायां जलशङ्कार्थमुत्थितः मधुरकविः बहिः दक्षिणाभिमुखः आयातः । तदानीं दक्षिणस्यां दिशि अप्राकृतं दिव्यं रोदसी व्याप्य विशेषतः प्रकाशमानं तेजःपुञ्जं अवलोक्य, अत्यन्तं विस्मितः, तत् तत्वमजानन्, ग्रामो नगरं वा अग्निना दह्यते वा ? अथवा दावानलो वा ? इति विचिन्तयन् मधुरकविः किमपि निर्धारयितुमप्रभविष्णुः अवतस्थे द्वित्रेषु दिवसेषु एवं विलोक्य, अत्यन्तविस्मितः सन्, सूर्यचन्द्राग्नितेजः पुञ्जादपि अतिशयेन विभासमानस्य अस्य विलक्षणस्य तेजसः तत्त्वम् अवगन्तव्यमिति कुतूहलेन तस्मात् निर्ययौ । एकस्मिन् ग्रामे आसायमास्थितः तमेव प्रभापुञ्जं लक्ष्यपादे निधाय प्रस्थितः । रात्रावेव सुमहाद्भुतं तत्तेजः पश्यन्,

गच्छन्, प्रातः काले यत् स्थानमगमत् तत्र आसायमतिष्ठत। मधुरकविः एवं अयोध्यानगरात् निर्गत्य, दक्षिणस्यां दिशि स्थितान् अखिलान् दिव्यदेशान् दृष्ट्वा, उत्तमं श्रीरङ्गक्षेत्रम् आससाद। तत्रापि दक्षिणेभागे तत्तेजः समदृश्यत। श्रीरङ्गक्षेत्रात् निर्गत्य मधुरकविः कुरुकानगरं ययौ। कुरुकापुरपर्यन्तं तत्तेजः नैवादृश्यत। मया दृष्टं तत्तेजः अत्रैव वर्तत इति निश्चित्य, मतिमान् मधुरकविः अन्वेषयन् तत्रैव स्थितः। एवं विचिन्वतः तस्य चिचामूले (तिन्त्रिणीवृक्षस्यमूले) महामुनिः शठकोपः दृष्टः। श्रीमतो वकुलाभरणमुनीन्द्रस्य दिव्यमङ्गलविग्रहं, पद्मासनोपविष्टं, परमपदयुगले निविष्टचैतन्यं, परतत्त्वबोधमुद्रं, तेजसां राशिं ऊर्जितमिव स्थितं श्रीपराङ्कुशं विलोक्य, विस्मयाविष्टः मया दृष्टं महद्भुतं अप्राकृतमयं तेजः तदेवेदमिति हृदि निश्चित्य, शठकोपसमीपमगमत्। मौनेन युक्तं, मुकुलीकृतलोचनं, शठारिं विलोक्य मधुरः कविः अन्धो वा यदि मूको वा इत्येवं शङ्कितः, तत्परीक्षार्थं तदग्रे दृढं पाषाणं अपातयत्। तस्य महारवं श्रुत्वा, नेत्रे उन्मील्य पुरतः स्थितं पाषाणमद्राक्षीत्। सन्तुष्टो मधुरकविः नैवान्धोऽयमिति ज्ञात्वा, सन्तुष्टः सन्, द्वितीयशोधनार्थाय "अनघ प्रकृतेः उदरात् जातः जीवः किं भक्षयित्वा, कुत्र वर्तते ?" इत्यपृच्छत्। तद्वचनं श्रुत्वा शठकोपः "तद्वस्तु भक्षयन् जीवः तत्रैव वर्तते, इत्यब्रवीत्"। तद्वचः निशम्य सन्तुष्टः मधुरकविः वैष्णवोत्तमः कृतार्थः सन् तच्चरणारविन्दयुगलैकशरणः तदेकशिष्यो बभूव। गुरुपादाम्बुजं ध्यायन्, सदा गुरोर्नाम जपन्, भक्त्या अनिशं सम्यक् शुश्रूषां कुर्वन्, तत्रैव गुरुसन्नधौ अतिष्ठत।

तदा रास मुनीन्द्रः पञ्चभिः संस्कारैः इमं स्वीकृत्य, अर्चावतारवदस्वरूपान्, चतुर्वेदसारभूतान् दिव्यप्रबन्धान् अनुगृह्य, तानस्माकम् एतद्द्वारा जगति लब्धप्रचारानकार्षीत्।

स एष मधुरकविः भरतैकप्रवणः शत्रुघ्न इव भागवतप्रावण्यमेव साधीयः प्रतिपाद्यमानः श्रीशठकोपमुनीन्द्रे अस्मिन्नैव परमदेवताप्रतिपत्तिम् अप्रघृष्यामुद्वहन् कण्णिनुण्शिरुत्ताम्बु नाम्ना प्रसिद्धं लघुदिव्यप्रबन्धरत्नं च तद्विषयकं विज्ञाप्य, स्वकीयम् अनुपमम् अध्यवसायं वितेन विश्वप्रसिद्धम्।

कालक्रमेण च दिव्यं धाम जग्मुषि शठकोपमुनीन्द्रे आचार्यविश्लेषमसहमानः परितप्यक्रमेण समाश्वस्य तस्यैव कीर्तिततीर्जगति प्रथयन् गुरुचरणारुणनलिनपरिसरं जगाहे।

इति मधुरकवियाल्वार्चरितम्।

**कण्णिनुण्शिरुत्ताम्बु**

चतुस्सहस्रीव्यपदेशभाजने द्राविडाम्नायदिव्यप्रबन्धसमुदाये प्रथमसहस्रे चरमप्रबन्धत्वेन श्रीमन्नाथमुनिना निवेशितः अयं दिव्यप्रबन्धः। श्रीशठकोप-मुनीन्द्रानुगृहीतसामवेदसारभूतसहस्रगीतिदिव्यप्रबन्धपारायणस्य प्रारम्भकालेषु समापनकालेषु च कण्णिनुण्शिरुत्ताम्बुनाम्नः दिव्यप्रबन्धस्यास्य पारायणं नियमेन सम्पद्यते। कण्णिनुण्शिरुत्ताम्बु इति वाक्येन उपक्रान्त इति हेतुना अयं प्रबन्धः कण्णिनुण्शिरुत्ताम्बिति नाम लेभे। यथाहि श्रीपाणसूरेः अमलनादिपिरान्नाम दिव्यप्रबन्धः चतुस्सहस्रात्मकदिव्यप्रबन्धेषु सकलेष्वपि कदाचित् लुप्तेषु सत्सु आचार्यसार्वभोमः श्रीमन्नाथमुनिः श्रीशठकोपमुनीन्द्रस्य अवतारस्थली श्रीकुरुकापुरीमुपेत्य, तत्र दिव्यतिन्त्रिणीतरुमूले मधुरकविकृतं दिव्यप्रबन्धं इमं कण्णिनुण् शिरुत्ताम्बु द्वादशसहस्रकृत्वः प्रावर्त्य, श्रीशठकोपमुनीन्द्रं साक्षात्कृत्य, तन्मुखतः निखिलानपि दिव्यप्रबन्धान् उपलेभे इति तावत् सम्प्रदायः। श्रीसरोमुनिप्रभृतिश्रीपरकालसूरिपर्यन्तैः अन्यैः दिव्यसूरिप्रवरैः प्रणीता दिव्यप्रबन्धा यथा भगवद्गुणगणानुभवपराः, तथा एषः दिव्यप्रबन्धः न तु भगवतः स्तुतौ प्रवृत्तः। अपि तु स्वाचार्यस्य श्रीशठकोपमुनेः स्तुतिरूपतया एव मधुरकविना अयं निबन्धः निबद्धः। एतादृशस्य अस्य प्रबन्धस्य भगवद्विषयकदिव्यप्रबन्धमध्ये परिगणनं कथं युज्यत इति काचिदाशङ्का जायेत। अत्र एवं समाधानंभगवान् स्वस्य स्तवतादपि भागवतोत्तमानां स्तवनेन सत्यमतिमात्रं प्रहृष्यति। अत एव स भगवान् अष्टविधां भक्तिमाचक्षाणः "मद्भक्तजनवात्सल्यम्" इत्येव प्रथमतः निर्दिशति। एतेन च सुगमं- भगवान् स्वविषयकभक्तितोऽपि स्वकीयभक्तजनविषयकभक्तिम् अतिमात्रमभिनन्दतीति। अतश्च भगवन्मुखोल्लासहेतुभूतेषु स्तवेषु भागवतोत्तमविषयकः स्तवः प्राधान्यमश्नुत इति निष्कर्षः निरपायः।

श्रीमडष्टाक्षरमहामन्त्रं व्याचक्षाणाः पुर्वाचार्यवर्याः नमःपदविवरणावसरे अत्र भागवतशेषत्वमनुसन्धेयम् इति आदिशन्ति। भागवतशेषतैव नमःपदार्थ इति सारज्ञसम्मतम्। अहङ्कारमममकारयोः आत्यन्तिकविध्वंसमाचक्षाणस्य नमः पदस्य अर्थे हृदि गाढनिषण्णे सति भगवच्छेषत्वकाष्ठाभूता भागवतशेषता स्वत एव हि समुन्मिषेत्। तदानीमेव हि मूलमन्त्रार्थविज्ञानपौष्कल्यं निष्पद्यते। तथा च मन्त्रार्थानुसन्धानानुभवतत्परेषु दिव्यप्रबन्धेषु भगवच्छेषत्वकाष्ठानिष्ठा प्रकाशनेदं परस्यास्य दिव्यप्रबन्धस्य अन्तर्भावः न दूष्यतीति एतावन्मात्रं न, अत्यावश्यकोऽपीति

प्रतिपत्तव्यम् । श्रीरामायणपुरुषेषु चतुर्षु महात्मना शत्रुघ्नेन सन्दर्शितः एषः निरवद्यः पन्थाः । स तु श्रीरामचन्द्रभगवद्भक्ताग्रेसरे भरते केवलं भक्तः, न तु भगवति रामचन्द्रे । तदिदम् -

*गच्छतामातुलकुलं भरतेन तदाऽनघः ।*
*शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ।।*

इति अयोध्याकाण्डप्राथमिकश्लोकरत्नस्य पूर्वाचार्यानुगृहीतर-सघनव्याख्यानतः अवसेयम् । एवं च भागवतोत्तमाचार्यसार्वभौमं चाधिकृत्य आचार्यभक्तिपरीवाह-रूपतया मधुरकविसूरिवरेण प्रणीतोऽयं दिव्यप्रबन्धः भगवत्परेषु दिव्यप्रबन्धेषु मध्ये सुष्ठु परिगणनामर्हतीति प्रतिपद्यन्तां प्राज्ञाः प्रामाणिकाः ।

ग्रन्थिबृन्ददन्तुरतनुतरदामबन्धविवशं स्वात्मानं स्वयमेव कृतवन्तं महामायं भगवन्तमपि विसृज्य, आचार्यसार्वभौममाश्रित्य दक्षिणकुरुकापुरीनाथ इति तद्दिव्यनामसंकीर्तने क्रियमाणे सति परमभोग्यता भवति । ममैव जिह्वायाम् अमृतस्रावो बोभवीति ।

श्रीकुरुकापुरीश्वरं श्रीशठरिसूरिं जिह्वया स्तुत्वा हर्षप्रकर्षमनुभवामि । तस्यैव दिव्यपादारविन्दे सत्यं समाश्रयामि । तदन्यद्दैवतं न किमपि वेद्मि । तस्यैव मुनिसार्वभौमस्य दिव्यसूक्तिगीतानि गायन् पर्यटानि ।

श्रीशठकोपमुनीन्द्रैकदैवतोऽहमिति अधस्तात् प्रकटितस्य अध्यवसायस्य विपर्यासं कृत्वापि देवाधिदेवस्य श्रीमतो नारायणस्य दिव्यमङ्गलविग्राहमपि सेवेयाहम । नैतावता मदध्यवसायशैथिल्यम् । कथमिति चेत् श्रीकुरुकापुरीशमुनि-सार्वभौमस्य यदाऽहं दासः तदा मम तन्मुखोल्लासहेतुभूतं भगवत्प्रावण्यमपि सुकृतमेव खलु । अवर्जनीयं ह्येतत् ।

परमधार्मीकाः चतुर्वेदधराः ब्राह्मणोत्तमाः आनृशंस्यप्रधाना अपि मां दुर्गुणप्रचुरत्वहेतुना तिरस्कुर्युः इति मत्वा स्वामी श्रीशठकोपसूरिः मातृवत् पितृवच्च मत्संरक्षणैकव्रतो विराजते ।

इदानीं दासोऽहमित्यनुसन्दधानोऽहं प्राक्काले "किं तेन न कृतं पापं चोरेण आतामापहारिणा" इत्युक्तरीत्या आत्मापहारचोर आसम्, विषयान्तरप्रवणः च आवर्तिषि । अधुना तु हिरण्मयप्रासादपरिवृत श्रीकुरुकानगरीनाथस्य मुनिपुङ्गवस्य भक्तस्सन् कृतकृत्यः समभूवम् ।

अद्यप्रभृति यावदात्मभावि स्वकीर्तिमेव दृढाध्यवसायेन सह यथाऽहं स्तुयाम् तथा परमकृपां प्राचीकशदस्मत्स्वामी भूधरसन्निभसौधमालावृतकुरुकापुरीपरिवृढः । इतः पर न कदाचिदपि मामुपेक्षेत स एष गुरुवरः । तदिदम् अनुभवतः क्रमशः द्रष्टुं शक्यमखिलानाम् ।

परमोपकारकः कारिसूनुः मुनिसार्वभौमः स्वमहिमानभिज्ञं मां स्वकटाक्ष-वीक्षालक्ष्यमाकलय्य, स्वीकृत्य च मदीयचिरन्तनप्रबलपातकराशीन् व्यनीनशत् । अतिमधुरद्रमिडफणितिप्रसादकश्रीशठकोपमुनिः अस्यैव कृपामष्टासु दिशासु प्रथयेयम् ।

सर्वाणि शास्त्राण्यपि जगतीतले उपकृतवानिति हेतुना भगवतो विष्णोः कृपामभिनन्दतां श्रीवैष्णवानां स्वकृपाविषयकविस्मयातिशयवृद्धये दुरवगाहान् वेदार्थान् अनुगृहीतवतः, परमकृपया अतिमधुरद्राविडभाषामयीं सहस्रगीतिं गीतवतः श्रीशठकोपमुनेः परमकृपैव खलु इह भृशम् अतिशयिनी ।

वैदिकोत्तमैः अधीयमानानां वेदानां परमतात्पर्यं मम हृदि प्रतिष्ठापयितुं सहस्रगीतिम् अनुगृहीतवतः महायशस्विनः श्रीशठकोपमुनेः विषये शेषभावविषयिणी मदीया कामना सद्य एव कैङ्कर्यपर्यन्तफलवती बभूव ।

परेषां शिक्षणप्रयत्नस्य सर्वथा विफलत्वे सत्यपि तेषां शिक्षणयोग्यताविरहे सत्यपि स्वानुष्ठानमुखेन तेषां सम्यग्विनयनार्थं कोकिलकूजिताभिराममहोद्यानपरीतां श्रुकुरुकापुरीमधिवसन् मुनिसार्वभौम ! भवदीयदिव्यपादारविन्दप्रावण्य-सम्पादनार्थमेव सततम् उद्युक्तोऽस्मि ।

आश्रितपक्षपातिनं भगवन्तं नारायणमाश्रितवत्सु सर्वेष्वपि भागवतेषु प्रावण्यशालिनि श्रीकुरुकापुरीश्वरे श्रीपराङ्कुशमुनौ भक्तिभूमभाजा मधुरकविना कीर्तितमिमं दिव्यप्रबन्धं हृदि शरणं कलयतां सतां यत् निवासस्थानं, तदेव श्रीवैकुण्ठधाम इति फलकीर्तनेन समापितोऽयं दिव्यप्रबन्धः ।

**श्रीमन्नाथमुनिचरितम्**

***ज्येष्ठमासे त्वनोराधाजातं शठजिदाश्रयम् ।***
***उद्धर्तारं प्रबन्धानां श्रीमन्नाथमुनिं भजे ॥***

कावेरीनदीतीरे वीरनारायणपुरम् इत्यभिधाने ग्रामे सुप्रसिद्धसङ्गीतसाहित्य-विद्वान् ईश्वरभटः आशीत् । कलियुगे ३२६४ संवत्सराणां सम्पूर्णानन्तरं शोभकृत्

नाम संवत्सरे ज्येष्ठमासे अनूराधानक्षत्रे बुधवासरे ईश्वरभट्टस्य सेनामोदलिप्रधानामात्यस्य गजमुखस्यांशेन नाथमुनिः अवततार। तिरुमलश्रीनिवास एव नाथमुनिरूपेण अवततारेत्यपि वदन्ति। वङ्गिपुरत्तुनम्बि इति वैष्णवोत्तमस्य पुत्रिकया अरविन्दया नाथमुनेः पाणिग्रहणानन्तरं तयोः ईश्वरमुनिः नाम पुत्रः जातः। नाथमुनिः सतीसुताभ्यां संसारसुखमनुभूतवान्। किञ्चित्कालानन्तरं भगवदिव्लास-क्षेत्राणि सन्दर्शनीयानीति सत्सङ्कल्पेन स्वग्रामस्वामिनः मन्नार् राजगोपालस्य आदेशानुसारेण मधुरा, द्वारवती, अयोध्या, बदरी, वारणासी, पूरी, सिंहाचल, श्रीमदहोबिल, श्रीवेङ्कटाचल, काञ्चीक्षेत्रेषु विराजमानानां श्रीमहाविष्णोः दिव्यमङ्गलार्चामुर्तीनां सन्दर्शनानन्तरं श्रीवीरनारायणपुरं प्रत्यगताः श्रीमन्नाथमुनयः। ततः नाथमुनयः मन्नारु राजगोपालस्य कैङ्कर्ये एव निमग्नाः।

एकस्मिन् दिने द्वौ वैष्णवोत्तमौ सर्वलोकोत्तारके दक्षिणद्वारके विराजमानं मन्नारुराजगोपालस्य दिव्यमङ्गलविग्रहं सन्दर्शितुमागत्य, संसेव्य, तदनुभवजनितानन्दकंदलितस्वान्तेन आरावमुदे इति तिरुवायिमोलि दिव्यप्रबन्धे विद्यमानानि कुम्भकोणक्षेत्राधिपतेः शार्ङ्गपाणेः स्तोत्रपराणि दशपाशुराणि गानं कृतवन्तौ। तच्छ्रुत्वा परवशेन नाथमुनयः एतानि पाशुराणि भवद्भिः कुत्राधिगतानि? कर्ता कः? अन्यानि पाशुराणि कानि? इति पृष्टवन्तः। कुरुकापुरिक्षेत्रे शठकोपसूरिभिः कृतानीति, अवशिष्टानि लुप्तानि इति ज्ञात्वा, कुरुकापुरं गताः नाथमुनयः। तत्र पराङ्कुशदासानां सन्निधौ तेषां सूचनानुसारेण मधुरकविसूरिवर्याणां कण्णिनुण्शिरुत्ताम्बु प्रबन्धं द्वादशसहस्रवारं सङ्कीर्तनं कृत्वा शठकोपसूरिसन्दर्शनं प्राप्तवन्तः। प्रसन्नाः पराङ्कुशाः नाथमुनेः अभीष्टानुसारेण नालायिरदिव्यप्रबन्धं, द्वयमन्त्रं चोपदिश्य अन्तर्भूताः सन्तः, नाथमुनयः वीरनारायणपुरं प्रत्यागत्य, कीजियकत्ताल्वार्, मेलैयकत्ताल्वार् इत्यादिनां शिष्याणां द्रविडवेदं नालायिरदिव्यप्रबन्धं सर्वमपि उदात्तानुदात्तस्वरितप्रचयात्मकस्वरैः उच्चारणयोग्यैः प्रबोधितवन्तः। ततः नाथोपज्ञं वैष्णवमिति सुप्रसिद्धम्। सात्विकास्तिकतादात्म्य-गुणपरिपूर्णैः श्रीवैष्णवैः दिव्यदेशेषु दिव्यगानरूपेण दिव्यप्रबन्धः प्रचारितः।

एकस्मिन् दिने षड्जमध्यममनुष्यगानप्रवीणा एका वेश्याङ्गना गान्धारग्रामयुक्तदेवगानप्रवीणा अन्या वेश्याङ्गना च स्वस्वगानातिशयविवादेन तद्देशाधिपतेः चोलनाथस्य सप्ताङ्गलक्षणलक्षितसभायां गानचातुर्यं प्रदर्शितवत्यौ। तदानीं

संस्थानसङ्गीतन्यायनिर्णेतारः मनुष्यगानं कृतवत्याः वेश्यायाः पारितोषिकं दत्वा सम्मानितवन्तः । देवगानप्रवीणा अन्या वेश्याङ्गना वीरनारायपुरं गत्वा मन्नारु राजगोपालस्य सन्निधौ देवगानं कृतवती । नाथमुनयः तच्छ्रुत्वा तां प्रशंसितवन्तः । सन्तुष्टा सा तरुणी पुनः चोलराजं प्रति गत्वा प्रभो मम गानमाधुर्यमाहात्म्यं च महापण्डिताः नाथमुनयः जानन्ति । भवतामास्थानविदुषां तादृशज्ञानं नास्तीत्युक्तवती । तच्छ्रुत्वा चोलभूपतिः नाथमुनीनामाह्वानं प्रेष्य, स्वागतसत्कारानन्तरं द्वयोः वेश्याङ्गनयोः गानपरीक्षां निश्चितवान् । द्वयोः गानं श्रुत्वा नाथमुनयः नृपोत्तम । भवन्तः सर्वेऽपि षड्जममध्यमग्रामकलितमात्रज्ञानिनः । अतः मनुष्यगानं श्रुत्वा आनन्दं प्राप्तवन्तः देवगानातिशयं भवन्तः न जानन्ति ।

*षड्जमध्यमनामानौ ग्रामौ गायति मानवाः ।*
*न तु गान्धारनामानं न लभ्यो देवयोनिभिः ॥*

इति शास्त्रं वदति इत्युक्तवन्तः । तदानीं चोल भूपतिः "स्वामिनः भवन्तः देवगानं जानन्तीति अस्माभिः कथं ज्ञातुं शक्यते ?" इति पृष्टवान् । एकस्मिन् समये एव चतुश्शततालनादं श्रुत्वा, नाथमुनयः तेषां तालानां गुरुत्वं निर्णीतवन्तः । आश्चर्यचकितः चोलभूपालः भक्तिपूर्वकसाष्टाङ्गदण्डप्रणामं कृत्वा बहुविधमूल्यरत्नभूषणाम्बरादीनि द्रव्याणि समर्पितवान् । तानि द्रव्याणि न स्वीकृत्य नाथमुनयः राज्ञः आशीर्वचनानि उक्त्वा वीरनारायणपुरं गताः । नाथमुनीनां अचिन्त्याद्भुताक्लिष्टज्ञानस्य, वैराग्यस्य च उदाहरणमिदम् ।

***शरीरं वसुविज्ञानं वासः कर्मगुणानसून् ।***
***गुर्वर्थं धारयेद्यस्तु स शिष्यो नेतरः स्मृतः ॥***

इति न्यायानुसारेण शिष्यलक्षिताः उय्यक्कोण्डार्, कुरुहावलप्पन्, नम्बिकरुणा, करदासर्, पेरियतिरुडयार्, तिरुक्कण्णमङ्गैयाण्डान्, वानमामलैयाण्डान्, उरुपुटाराच्चांबिल्लै, चोक्कत्ताल्वान् इति अष्टसात्विकसत्तमाः नाथमुनिदिव्य-चरणारविन्दाश्रयणेन द्रविडवेदसारद्वयमन्त्रार्थज्ञानं प्राप्तवन्तः । श्रीरहस्यत्रयसारार्थं सकलजगत्कारणभूतपरमपुरुषरूपपरतत्त्वनिर्णयेन, अष्टाङ्गयोगधारणासाक्षात्कृत-भगवद्दिव्यमङ्गलश्यमसुन्दरसुकुमारविग्रहानुभवजनितानन्दकन्दलितहृदयारविन्दाः नाथमुनयः द्वादशोर्ध्वपुण्ड्रानि धृत्वा, निमीलितनेत्राभ्यां ध्यानयोगनिष्ठाः

भगवद्ध्याननिमग्नाः पद्मासनस्थाः भगवदेकान्तचिन्तासन्तान-समाक्रान्तस्वान्तः, शान्तिदान्तिक्षान्त्यादिगुणनितान्तविश्रान्तिशान्तः मुनिकान्तः नाथमुनिसत्तमः -

*चक्राष्टके व्यष्टिरूपां सर्वानन्दे समष्टिकाम् ।*
*अष्टाक्षरीं महाविद्यां ध्याये नारायणाक्षिकाम् ॥*

इति योगशास्त्रानुसारेण मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञा-ललाटकसर्वानन्दाभिधानचक्राष्टके व्यष्टिरूपेण, सर्वानन्दाष्टदले समष्टिरूपेण, विराजन्, नारायणात्मक श्रीमदष्टाक्षरीरूपयोगविद्यारहस्यं, मन्त्ररत्नार्थाद्यखिल-हितोपदेशकं श्रीपराङ्कुशदिव्यसूरिं स्मरन्, हृत्पुण्डरीकान्तर्गतापहतपाप्मत्वादि-गुणाष्टकविशिष्टज्योतिर्मयदहराकाशात्मकान्तरात्माभिधानपरमपुरुषानुग्रहेण लब्धे मूलाधारद्वारे प्राणशक्तियुक्तकतिपयतत्त्वरूपसूक्ष्मशरीरेण सुषुम्नाख्यब्रह्म-नाड्यन्तरायेन, सहस्रारमध्यमामृतमयूखमण्डलमध्यप्रदेशायितविग्रहः सन्, विद्यामाहात्म्येन मध्यधमनि ऊर्ध्वभागं विभिद्यबहिर्गत्वा, प्रणवरथारूढस्सन् मनस्सारथ्येन निजप्रभावगाथाकथकवन्दिबृन्दायमानबृन्दारकसंदोहाभि-वन्दमानपदारविन्दः, अर्चिरादिमार्गे गच्छन्, वह्निदिनपूर्वपक्षोत्तरायणाब्ज-वातांशुमच्चन्द्रविदद्युद्वरुणेन्द्रविधातृलोकेषु तत्तल्लोकाभिमानिभिः देवैः अर्चितः सन् ब्रह्माण्डकटाहं भित्वा, दशगुणितोत्तरयावरणसप्तकमूलप्रकृतिमतिक्रम्य, ब्रह्मशिवसनकसनन्दनसनत्कुमारसनत्सुजातादिमहायोगीन्द्राणामयवाङ्मानसागोचरं, तमःपरिवारपरिवर्तमानपरिच्छिन्नाथोदेशं, आमोदप्रमोदसम्मेद वैकुण्ठाख्यैः भेदैः चुतर्विधं, अनन्तं, नित्यविभूतित्रिपाद्विभूतिपरमपदपरंधामपरमव्योमपरमाकाशामृता-प्राकृतलोकानन्दलोकवैकुण्ठायोध्यापरजितादिशब्दवाच्यं परमाश्चर्यकरं, सूर्यचन्द्राग्निप्रकाशनिरपेक्षं, दिव्यज्योतिर्मयं, अनन्तगरुडविष्वकसेनादि-नित्यसिद्धवासं दिव्यलोकं दृष्ट्वा, प्रहर्षेण मार्गमध्यस्थामहोन्नतशाखोल्लसत्तिल्य-फलाशितिलकमूले विश्रम्य, ततः उत्तुङ्गतरङ्गमङ्गलायतनामृताकारविरजातरं गिणीमवतीर्य, तद्दिव्यकूलंकषामृतप्रवाहावगाहनेन पवित्रो भूत्वा निबिडनीरंध्रनीलमेघनिर्मुक्तसुप्रसन्नसूर्यबिम्बकरणिराहुविमुक्तराकासुधाकरमण्डल, समीचीनसलिलसंक्षालितसांद्रतरपंकसमुद्धृतदिव्यरत्नमिव, नित्यनिरवद्यनिखधि-कनिरतिशयदिव्य तेजोमयज्योतिस्वरूपो भूत्वा, ज्ञानानन्दामलत्वादिस्वरूप-रूपगुणाविर्भावेन शङ्खचक्रादिदिव्यायुधोल्लसितदीर्घवाहुं, अमूल्यरत्नकिरीटादि-दिव्यभूषणं, सुकुमारकरसरोरुहावमर्शं, लावण्यौदार्य गांभीर्यचातुर्यादिकल्याण-

गुणाकरं शुद्धसत्त्वमयं पञ्चोपनिषण्मयं चतुर्भुजश्यामसुंदरसुकुमारदिव्यमङ्गलविग्रहं संस्मरन्, दिव्यमङ्गलवाद्यघोषां निषण्मयं चतुर्भजश्यामसुंदरसुकुमार-दिव्यमङ्गलविग्रहं संस्मरन् दिव्यमङ्गलवाद्यघोषां शृण्वन्, परमपडे अमृतजलपूर्ण ऐरम्मदीयतटाकसमीपे दिव्याश्वत्यथमूले छन्दोग्यवाजसनेयाद्युपनिषदुक्तक्रमेण दिव्यमाल्यदिव्यांबराभरणादिदिव्याप्सरस्त्रीरत्ननित्यसूरिबृन्दैः सम्मानितः, अनेकदिव्यसहस्रपताकवितानमुक्तादाम दिव्यत्पुष्पमाल्याद्यलङ्कृतः दिव्यस्त्रीपरिवृतः भगवत्संकल्पकल्पितदिव्यविमानमधिरुह्य, अनेकदिव्यसीमन्तिनीमणिमिः नित्यसूरिभिः सह अतिसौरभ!!तिमनोहरललितप्रवालकलिकाप्रसूनमञ्जरीपञ्ज-रञ्जिताभृतोपमानफलभारप्रणम्रातिदीर्घशाखासक्तविविधविचित्रविहगकुलनलकलालापट वाकुलितदिव्योद्यानशतसहस्रावृतनिजपरिसरेविराजमानबृहद्वनबृन्दावनगोकुल-गोवर्धनादि भगवदभिमतारामधामग्रामाभिरामभूममधुरा पुरीललामस्वसन्निहित-केशवादिचतुर्विंशतिव्यूहाधिष्ठितसान्तानिकलोकसङ्कलित सकलपनिषत्प्रतिपाद्य श्रीवैकुण्ठनगरं गत्वा, नानाविधध्वजपताकाद्यलङ्कृत श्रीवैकुण्ठद्वारगोपुरस्य प्रणम्य, अभिवन्दितजयविजयादिद्वारपालकस्नेहगर्भकरुणाकटाक्षवीक्षणैः बहुमतः, तद्दिव्यनगरे अस्पृष्टसंसारगन्धानां श्रीविष्वक्सेनवैनतेयादिनित्यसिद्धानां संदर्शनेन, तेषां प्रणम्य, तैः सम्मानितः, तस्मिन् पुरमध्ये स्थितं दिव्यरत्नशिलाशकल-सङ्कलितमहोन्नतद्वादशप्राकारपरिवेष्टितं, दिव्यशुकपिकशारिकामयूरादिविविध-विहगविचित्रमधुररवाकीर्णशाखोपशाखकल्पद्रूमादिनानातरुषण्डमण्डितदिव्यारा मशताभिरामं, मणिमुक्ताप्रवालकृतसोपानपङ्क्तिविराजितामृतरसोदकाभि-सञ्चरत्क्रौंचकलहंसकारण्डवचक्रवाकादिशोभितकमलकल्हारकैरवनीलोत्पलादि-सुगन्धबन्धुरवापीकूपतटाकपुष्करिणीपरिवृतं, मन्दारप्रमुखबृन्दारकतरुबृन्दपुष्प-सन्दोहनिष्यन्दमाना मदमकरन्दप्रवाहपोप्लूयमानमहानन्दकन्दलित-हृदयारविन्दात्मसुन्दरीमिलितपुलिन्दपुरन्दरोद्गीयमानदिव्यगान्धर्वपरिपूरितं श्रीमन्नारायणलीलोपकरणदिव्यमण्डपक्रीडाशैलशत सहस्रावृतं चन्दानागरुपुष्पाव-गाहितमन्दानिलसेव्यमानं, दिव्यरत्नस्तम्भशतसहस्रगुम्भितं, नित्यमुक्त-परिषन्निषेव्यमाणं, अत्युच्छ्रितम्, अतिविलासं, अत्याश्चर्यकरं, आनन्दमयं तिरुमामणिमण्टपं संसेव्य, साष्टाङ्गप्रणामं समर्प्य, तस्मिन् दिव्यमण्टपमध्ये नानाविधदिवव्यपुष्पविचित्रितमहत्तरदिव्ययोगपर्यंके, चामरग्राहकविमलादिशक्ति-मय अष्टदलपुण्डरीककर्णिकासने श्रीभूनीलादिभिः सुखासीनं अनर्घ्यरत्नकिरीट-

मकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटककटिसूत्रमुक्तादामोदरबन्धन-पीताम्बरसिंजानुमंजुमंजीराद्यपरिमितदिव्यभूषणभूषितं श्रीवत्सवैजयन्ती-वनमालालंकृतलक्ष्मी संलक्षितंवक्षस्थलं, मन्दस्मितसुन्दर वदनारविन्दं नित्यसूरिपरिषन्निषेव्यमाणश्रीपादपद्मं, अस्थानभयशंकितांकभुर्तिभूत-शङ्खचक्रादिदिव्यायुधोपास्यमानं भगवन्तं नारायणं संदर्श्य, समस्तपरिवाराय श्रीमते नारायणाय नमः इत्युक्त्वा तत्कटाक्षवीक्षणामृताप्यायितनिजस्वरूपेण, हर्षप्रकर्षेण तत्तदवस्थोचितभगवत्कैङ्कर्यनिर्वहणेन भगवदनुभवजनितानन्दाब्धिमग्न-सर्वावयवोऽभूत् । नाथमुनीन्द्रस्यपरमपदप्राप्तानन्तरं पुण्डरीकाक्षः, मणक्काल्नंबि च ईश्वमुनिना ब्रह्ममेधसंस्कारादीन् समाचरितवन्तः ।

नाथमुनिना विरचितौ ग्रन्थौ द्वावेव। न्यायतत्त्वं, योगगरहस्यं च। ग्रन्थद्वयमपि अद्य नोपलभ्यते । नाथमुनेः तपश्शक्त्या दिव्यप्रबन्धस्य पुनस्सृष्टिः जाता इति नाथोऽपज्ञं वैष्णवम् इति प्रसिद्धम् ।

**पुण्डरीकाक्षाचार्यचरितम् (श्रीराममिश्रचरितम्:**

*चैत्रमासे कृत्तिकायामुदितं सद्गुणार्णवम् ।*
*श्रीनाथमुनिसच्छात्रं पुण्डरीकाक्षमाश्रये ।।*

पुण्डरीकाक्षाचार्याणां नामान्तरं उय्यक्कोंडार् इति प्रसिद्धम् । बिष्वक्सेनस्य अमात्यस्य जयत्सेनस्यांशेन पुण्डरीकाक्षाचार्यः अवततार । श्रीमन्नाथमुनेः शिष्येषु मुख्यतमः पुण्डरीकाक्षाचार्यः । एतेषां शिष्योत्तमाः मणक्काल्नंबि इति प्रसिद्धाः श्रीराममिश्राः । पुण्डरीकाक्षाचार्याणां वाञ्छानुसारेण श्रीराममिश्राः नाथमुनेः पौत्रस्य ईश्वरमुनेः पुत्रस्य यामुनाचार्यास्य तत्त्वोपदेशं कृतवन्तः । श्रीराममिश्राणां प्रसक्तिः यामुनाचार्याणां चरिते द्रष्टुं शक्यते। तेषां तनियश्लोकोऽयं -

*माघे मखायां संभूतं श्रीरामगुरुसत्तमम् ।*
*पुण्डरीकाक्षपादाब्जचञ्चरीकमहं भजे ।।*

*अयत्नतो यामुनमात्मदासमलर्कपत्रार्कणनिष्क्रियेण ।*
*यः क्रीतवानास्थियौवराज्यं नमामि तं राममेयसत्त्वम् ।।*

**यामुनाचार्यचरितम्**

*शुचौ मास्युत्तराषाढजातं यामुनदेशिकम् ।*
*श्रीराममिश्रपादाब्जचञ्चरीकमहं भजे ।।*

*श्रीराममिश्रसच्छिष्यं वन्दे तत्त्वार्थकोविदम् ।*
*वादादवाप्तराज्याद्यो विरक्तौ यामुनोऽभवत् ॥*

*सिंहासनांशभमीश्वरयोगसिन्धु*
*मुक्तामणिं महितनाथमुनीन्द्रपौत्रम् ।*
*प्रज्ञाविशेषजलधिं प्रतिवादितूल-*
*जञ्झानिलं हृदयचिन्तय यामुनार्यम् ॥*

*यत्पादाम्भोरुहध्यानविध्वस्ताऽशेषकल्मषः ।*
*वस्तुतामुपयातोऽहं यामुनेयं नमामि तम्ः ॥*

नाथमुनेः परमपदप्राप्त्यनन्तरं उय्यकोंडार् अपि चरमदशायां नाथमुनेः पौत्रस्य, ईश्वरमुनेः पुत्रस्य, तत्त्वोदेशाय श्रीराममिश्रं नियुक्तवन्तः । गुर्वाज्ञाप्रकारेण ईश्वरमुनेः सन्तनाप्राप्त्यर्थं परमात्मानं प्रार्थयन्ते । धातुनामसंवत्सरे कर्काटकमासे पौर्णमि, अनूराधानक्षत्रे शुक्रवासरे यामुनाचार्यः सिंहमुखांशेन अवततार । उत्तराषाढनक्षत्रमिति अन्ये वदन्ति । ईश्वरमुनिः पुत्रस्य जातकर्म कुत्वा, यमुनैत्तुरैवर् इति नाम निर्णीतवन्तः अन्नप्राशनचौलोपनयनानामनन्तरं वेदाध्ययानमारभ्य, अतिशीघ्रं संपूर्णं कृतवान् यामुनाचार्यः । साङ्गोपाङ्गवेदाध्ययनानन्तरं सकलशास्त्रेषु प्रावीण्यं संपादितवान् यामुनाचार्यः । विद्याभ्याससंपूर्णानन्तरं यामुनाचार्यस्य विवाहं कृत्वा ईश्वरमुनिः वैकुण्ठमलंचकार ।

महाभाष्यभट्टर् सन्निधौ यामुनाचार्यस्य विद्याभ्याससंदर्भे चोलराजस्यास्थाने अक्कियाल्वान् नाम विद्वज्जनकोलाहलः पुरोहितः आसीत् । जनाः यथा राजानं प्रति शुल्कं समर्पयन्ति । तथैवविद्वद्भिः विद्वज्जनकोलाहलाय शुल्कं समर्पणीयमिति शासनेन सर्वेभ्यः विद्वद्भ्यः शुल्कं संपादयति कोलाहलः । तदनुसारेण कोलाहलः महाभाष्यभट्टं प्रति सेवकेन लेखां प्रेषितवान् । तत् सर्वं ज्ञात्वा यामुनाचार्यः पत्रं स्वीकृत्य, विच्छिन्नं कृतवान् । सः सेवकः कोलाहलस्य सन्निधिं गत्वा महाभाष्यभट्टस्य शिष्येण यामुनाचार्येण पत्रं छिन्नं कृतमिति निवेदितवान् । तच्छ्रुत्वा कोलाहलः यामुनाचार्यः कविर्वा विद्वान् वा ज्ञात्वा आगच्छेति पुनः सेवकं प्रेषितवान् । तस्य सेवकस्य विज्ञापनं श्रुत्वा मंदस्मितसुंदरवदनारविंदः विद्वत्पुरंदरः -

*न वयं कवयस्तु केवलं न वयं केवलतन्त्रपारगाः ।*
*अपि तु प्रतिवादिवारणप्रकाटाटोपविपाटने क्षमाः ॥*

इति श्लोकं विलिख्य कोलाहलं प्रतिप्रेषितवान् । कोलाहलः तत् पत्रं चोलराजं प्रति दत्तवान् । तत् दृष्ट्वा चोलमण्डलेश्वरः निजयोगवैभवावगत-परापरवस्तुयाथात्म्य ज्ञानसंपन्नस्य नाथमुनेः पौत्राय, ब्रह्मविदग्रगण्यस्य ईश्वरमुनेः पुत्राय यामुनाचार्याय अमन्ददृगानन्दसन्धायकातिसुन्दरान्दोलिकां प्रेष्य राजमन्दिरे अभ्युत्थानाभिवंदनादिभिः समर्च्य, समुचितसंभाषणमकरोत् । तस्मिन् समये यामुनाचार्यं दृष्ट्वा, राजपुरोहितः यामुनाचार्यस्य मीमांसाशास्त्रे परिश्रमः अस्तिवा नवेति उक्तवान् तच्छ्रुत्वा यामुनाचार्यः -

*आशौलादद्रिकन्याचरणकिसलयन्यास धन्योपकण्ठा,*
*दारक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।*
*आ च प्राच्यप्रतीच्यक्षितिधसयुगगलादर्कचन्द्रावतंसा-*
*न्मीमांसा शास्त्रं युग्मश्रममृदितमनामृग्यतां मादृशोऽन्यः ॥*

इति श्लोकं विलिख्य प्रदर्शितवान् । तत् दृष्ट्वाकोलाहलः अस्मदीयाबाधित-प्रमाणतर्कशास्त्रच्छटाप्रहरणैः शिरस्ताडनं करिष्यामीति अधिक्षेपं कृतवान् । तं दृष्ट्वा स्वकीयजिह्वाग्रदिव्यसिंहासनासीनहयग्रीवदेवः, प्रतिवादिकुतर्कानुग्राहकागाथबोध-मेधाप्रतिभादिकमनीयगणकलापकलितः यामुनाचार्यः असाक्षिकप्रसङ्गस्य नोत्सहेति इत्युक्तवान् । तदानीं चोलभूपालः बहुप्रान्तेभ्यः बहून पण्डितान् मध्यवर्तित्वायाहूतवान् । बहवः समागताः । सभायां विद्वाज्जनकोलाहलः, महाभाष्यभट्टः, यामुनाचार्याः, चोलभूपालः महाराणी च उतितकाञ्चनपर्यङ्कमधिष्ठितवन्तः । संवादे यामुनाचार्यस्यैव यदि विजयलक्ष्मी सिद्ध्यति तदानीं मम राज्यात् अर्थराज्यं दास्यामीत्युक्तवान् चोलराजः ।

लैकिकवादे अथवा वैदिकवादे वा यत्र कुत्रापि भवता त्रीणि वचनानि उक्तानि चेत् अहं खण्डयिष्यमीत्युक्तवान् राजपुरोहितः कोलाहलः । तदानीं यामुनाचार्यः १. युष्मन्माता न तु वन्ध्या, २. चोलराजा धार्मिकः, ३. राजपत्नी परमपतिव्रता इति वचन त्रय मुक्तवान् । तानि त्रीणि वचनानि नेतीति वक्तुमसमर्थः कोलाहलः मौनेन स्थितः । कोलाहलः पराजित इति ज्ञात्वा, आनन्देन महाराणी यामुनाचार्यस्य सन्निधिमागत्य येन्ने आलवंदीरो इत्युक्तवती । राजा अपि संतोषेन वाग्दानानुसारेण अर्धराजं दत्वा तस्मिन् सिंहासने यामुनाचार्यमुपथापितवान् ।

तदनन्तरं यामुनाचार्यः आत्मपत्नीसमेतः भव्यभौमभोगानुभवे एव निमग्नोऽभूत् । यामुनाचार्याणां तत्त्वोपदेशं कर्तुं मणक्काल्नांबि नाम श्रीराममिश्राः राजभवनं समागताः ।

अन्तः न गन्तव्यः इति द्वारपालकौ तिरस्कृ तवन्तौ । किं कर्तव्यमिति श्रीराममिश्राः तत्रैव स्थिताः । तदानीं कर्मसमाप्त्यनन्तरं यामुनाचार्याणां पाचकः बहिरागतः । तेन संभाषणं कृत्वा, यामुनाचार्याणां इष्टतमं शाकं अलर्कशाकमिति ज्ञात्वा, प्रतिदिनेऽपि अलर्कशाकमादाय पाचकाय दत्तवन्तः श्रीराममिश्राः । षण्मासानन्तरम् एकस्मिन् दिने न दत्तवन्तः । तस्मिन् दिने यामुनाचार्याः अलर्कशाकं किमर्थं न कृतमिति पाचकं पृष्टवन्तः । षण्मासेभ्यः एकः ब्रह्मणः आगत्य दास्याति । अद्य सः नागत इति पाचकः उक्तवान् । कारणं किमित्युक्ते न जानामीत्युक्तवान् पाचकः । तं पुण्यपुरुषं द्रष्टव्यमिति संभाषणीयमिति यामुनाचार्याः उत्सुकतां प्रदर्शितवन्तः । तदनन्तरदिने श्रीराममिश्रान दृष्ट्वा यामुनाचार्यः - शान्तिभूषण । भवतां पादस्पर्शेन मम गृहं पावनं जातम् । भवतां चरणाब्जसेवया धन्याः वयम् । षण्मासेभ्यः भवन्तः किमुद्दिश्य, अलर्कशाकं दत्तवन्तः ? ज्ञातुमिच्छामीति पृष्टवन्तः । यामुनाचार्याणां विनयोक्तिजालस्य संतुष्टाः श्रीराममिश्राः वत्स । वसुपशुक्षेत्रादिवाञ्छया नागतवानहम् । भवतां पूर्वीकाः निस्समाभ्यधिकं निधिं मम हस्ते निक्षिप्तवन्तः । तर्त्वं दर्शयिष्यामि, समर्पयिब्यामि तदर्थमेवागतवानहमित्युक्तवन्तः यामुनाचार्याः ससन्तोषेनाङ्गीकृतवन्तः ।

ततः अष्टादशदिनेषु अष्टादशाध्यायिनीं भगवद्गीतां यामुनाचार्याय उपदिश्य, दिव्यप्रबन्धतत्त्वं, तिरुमन्त्र, द्वयमन्त्रचरमश्लोकतत्त्वार्थान् सुष्टु प्रबोध्य, श्रीरङ्गक्षेत्रे कावेरीस्नानानन्तरं श्रीरङ्गनाथं दर्शयित्वा, भवतां पितामहादीनां अधीनं निधिसर्वं पश्य इत्युक्तवन्तः । गीताशास्त्रं गीताप्रतिपाद्यमूर्तिं दृष्ट्वा, द्वयमंत्रार्थज्ञानतन्मयेन श्रीरङ्गनाथम् आपादचूडं संसेव्य आर्तिविरकत्यादिसंपत्त्या, सन्न्यासं स्वीकृतवन्तः । तदानीमेव पेरियनंबिनाम महापूर्णाः तिरुमलनंबिनाम श्रीशैलपूर्णाः तिरुक्कोट्टूर्, नंबिनाम गोष्ठीपूर्णाः, तिरुक्कच्चिनंबि नाम कांचीपूर्णाः तिरुवरंगप्पेरुमालरयर, तिरुमालैयांडान् वानमामलैयांडान् तैववारियांडन्, ईशनांडान्, जिय्यरांडान् तिरुक्करुहूरप्पन्, तिरुमोहूरिनिन्नार्, तेयिवप्पेरुमाल्, वकुलाभरणोमजियर्, तिरुक्कुरुहूर्दासर्, तिरुमलिरुंजोलैदासर्, वडमधुरप्पिरंदाशन् क्कोडि इति दिव्यनामधारिणः यामुनाचार्याणां चरणकमलयोः संसेवया, तत्त्वहितपुरुषार्थज्ञानमवाप्य, तेषां सिद्धान्तप्रतिनिधिभूताः इव रेजिरे ।

श्रीवैष्णवसिद्धान्तसंस्थापनं कुर्वन्तः यामुनाचार्याः स्तोत्ररत्नं, चरुश्श्लोकि नाम कान्तास्तोत्रम्, सिद्धित्रयम्, गीतार्थसंग्रहः, आगमप्रामाण्यम्, महापुरुषनिर्णयः इति षट् ग्रन्थान् विरचितवन्तः । महापुरुषनिर्णयः इदनीमलभ्यः ।

यामुनाचार्याणां चरमवयसि श्रीपेरंबूदूरु क्षेत्रे रामानुजाचार्यः अवततार । कांचीपुर्यां यादवप्रकाशानां सविधे विद्याभ्याससमये रामानुजाचार्याणां प्रतिभां ज्ञात्वा यामुनाचार्याः विद्याभ्याससमये रामानुजाचार्याणां प्रतिभां ज्ञात्वा यामुनाचार्याः रामानुजाचार्यान् आनीतुं मुख्यशिष्यं पेरियनंबिनामहापूर्णं प्रेषितवन्तः । पेरियनंबिः काञ्चीपुरं गत्वा, पूजासु निमग्नानां रामानुजाचार्याणां समीपे यामुनाचार्यैः विरचितं स्तोत्ररत्नं गानं चकार । तत् श्रुत्वा परवशो रामानुजाचार्याः अस्य स्तोत्रस्य कर्ता कः इति पेरियनंबिम् अपृच्छत् । आलवन्दार् इति बिरुदाङ्किताः, श्रीरङ्गपीठस्याध्यक्षाः इति पेरियनंबिः उक्तवान् । सत्वरं यामुनाचार्यं द्रष्टुं रामानुजाचार्याः श्रीरङ्गं गतवन्तः । तदानीमेव यामुनाचार्याः परमपदमलङ्कृतवन्तः । तथापि तेषां दक्षिणहस्तस्य अङ्गुलित्रयं मुकुलितं बभूव । कारणं किमिति प्रश्नस्य यामुनाचार्याणां वाञ्छात्रयं उक्तवन्तः मुख्यशिष्याः ब्रह्मसूत्राणां सत्यार्थ स्पष्टीकरणार्थं सुन्दरभाष्यनिर्माणम्, अर्हाणां, पराशर, शठकोप इति बिरुदप्रसादश्चेति । इच्छात्रयं सफलीकर्तुं रामानुजाचार्याः प्रतिज्ञामकुर्वन् । सत्वरमङ्गुलित्रयं विकसितमिति पूर्वाचार्यैः कथ्यते । थामुनाचार्याणामनन्तरं श्रीरङ्गपीठस्याधिपत्यं स्वीकृत्य प्रतिज्ञां सफलीकृतवन्तः । यामुनाचार्याणां संस्मरणेन रामानुजाचार्याः प्रथमग्रन्थे वेदार्थसंग्रहे एवमुक्तवन्तः -

*परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति तत्*
*परोपाध्यालीढं विवशमशुभस्यास्पदमिति ।*
*श्रुतिन्यायापेतं जगतिविततं मोहनमिदं*
*तमो येनापास्तं स हि विजयते यामुनमुनिः ॥''* इति ॥

कवितार्किकसिंहैः वेदान्तदेशिकैः तत्त्वमुक्ताकलापे एवमुक्तम् -

*नाथोपज्ञं प्रवृत्तं बहुभिरुपरिचितं यामुनेयं प्रबोधैः ।*
*प्रातं सम्यग्यतीन्द्रैः इदमखिलतमः कर्षणं दर्शनं नः ॥* इति ।

*नमो नमो यामुनाय यामुनाय नमो नमः ।*
*नमो नमो यामुनाय यामुनाय नमो नमः ॥*

**स्तोत्ररत्नम्**

स्तोत्रेषु रत्नमिव विराजमाने अस्मिन् स्तोत्ररत्ने स्मृत्याचारानुसारेण, मङ्गलाचरणरूपेण गुरुनमस्कारः आदौ क्रियते । आचार्यप्राचार्ययोर्मध्ये प्राचार्याणा-मेव प्रथमं नमस्कृत्य, अनन्तरमाचार्यवन्दनं क्रियते । प्रथमश्लोकत्रये प्राचार्याणां नाथमुनीनां नमस्काररूपेण मङ्गलाचरणं क्रियते ।

अचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये मुनये अगाधभगवद्भक्तिसिन्धवे नाथाय नमः । अत्र परत्र चापि नित्यं यदि चरणौ मदीयं शरणं, मधुजिदङ्घ्रिसरोज-तत्त्वज्ञानानुरागमहिमातिशयान्तसीम्ने नाथाय तस्मै नाथमुनये नमः । अपरिमिताच्युतभक्तितत्त्वज्ञानामृताब्धिपरिवाहशुभैः वचोभिः इहलोके अवतीर्णपरमार्थसमग्रभक्तियोगाय यमिना वराय नाथमुनये भूयः नमः इति ।

चतुर्थश्लोके विष्णुपुराणानिर्माणकर्तुणे पराशराय प्रणमन्ति । उदारः यः ऋषिवर्यः चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीः तत्त्वेन संदर्शयन् पुराणरत्नं श्रीविष्णुपुराणं निरमिमीत मुनिवराय तस्मै पराशराय नमः इति ।

पञ्चमश्लोके कुलपति वकुलाभिरामं प्रणमन्ति । विद्यया जन्मना च अस्मदन्वयानां यत् शठकोपपादयुगलमेव सदा नियमेन माता पिता युवतयः तनयाः विभूतिः सर्वम् आद्यस्य प्रपन्नानां कुलपतेः शठकोपमुनीन्द्रं वकुलाभिरामं संपद्युक्तं पादद्वयं शिरसा नमामीति ।

षष्ठतमे श्लोके श्रीमन्नारायणस्य पादद्वयं स्तुवन्ति । यत् सर्वशास्त्रप्रसिद्धधं सर्वोत्तमं पादारविन्दद्वयं मे शिरसि श्रुतिशिरस्सु च भाति यस्मिन् पादारविन्दद्वये अस्मत् मनोरथपथः सकलः समेति, अस्माकं कुलधनं, कुलदैवतं, अरविन्द-विलोचनस्य तत् पादारविन्दं स्तोष्यामि इति ।

यस्य स्वामिनः महिमार्णवशीकराणुः, सर्वपितामहाद्यैः तत्त्वेन ज्ञातुं मातुमपि न शक्यः तदीयस्वामिनः श्रीमन्नारायणस्य महिमस्तुतिं कर्तुम् उद्यताय निरपत्रपाय कवये मह्यं नमोऽस्तु इत्युक्तवन्तः सप्तमश्लोके ।

यद्वा अशक्तः श्रमावधि वा यथामति स्तौमि । सदा स्तुवन्तः ते वेदाः अपि चतुर्मुखमुखाश्च एवमेव खलु । महार्णवान्तः मज्जतोः अणुकुलाचलयोः कः भेदः ? इति पुनः स्तोतुं प्रवर्तन्ते अष्टमश्लोके ।

किं च हे अब्जनेत्र । एषः स्तोता शक्त्यतिशयेन भवतः अनुकम्प्यः न भवति । अपि तु स्तुतिकृतेन परिश्रमेण भवतः अनुकम्प्यः भवति । तत्र मन्दबुद्धेः मम श्रमस्तु सुलभः इति कारणात् मम चायम् उद्यमः उचित एव इति वदन्ति नवम - श्लोके ।

हे प्रभो स्वाधीनत्रिविधचेतनाचेतनस्वभावस्थितिप्रवृत्तिभेदवन् । स्वामिन् । अमूनि भुवनानि यदि नावेक्षसे, ततः भवितुमेव न समर्थानि । प्रवृत्तिः कथं संभवः ? हे

स्वामिन् । एवं सर्वजन्तोः निसर्गसुहृदि त्वयि इदम् आश्रितवत्सलत्वं न चित्रमित्युक्तं दशमश्लोके ।

हे नारायण । त्वयि स्वाभाविकानवधिकातिशयेशितृत्वं कः वैदिकः न मृष्यति ? शिवः, शतमखः, परमस्वराट् इति एतेऽपि श्रुतिप्रसिद्धस्य भवतः महिमार्णवबिन्दव एवेत्युक्तम् एकादशश्लोके ।

श्रियः संपत्करः कः ? भवानेव परमसत्त्वसमाश्रयः कः ? भवानेव । पुण्डरीकनयनः कः ? भवानेव । पुरुषोत्तमः कः ? भवानेव । कस्य अयुतायुतशतैक-कलांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ? भवतः अंशे भाग एवेत्युक्तम् द्वादशश्लोके ।

वेदापहारगुरुपातकदैत्यपीडादि आपद्विमोचनमहिष्ठफलप्रदानैः प्रजापशुपती अन्यः कः परिपाति ? भवानेव । स्वशिरोधृतेन कस्य पादोदकेन सः रुद्रः शिवो बभुव ? भवतः पादजलेनैव इति श्रीमन्नारायणस्य परत्वमुक्तं त्रयोदशश्लोके ।

हरविरिंचिमुखः प्रपञ्चः कस्य उदरे आस्ते ? कः इमं प्रपञ्चं रक्षति ? कस्य नाभेः प्रपञ्चमिदंमजनिष्ट ? त्वदन्यः कः जगदिदं क्रान्त्वा, प्रलयकाले स्वगर्भे निगीर्य, पुनः उद्गिरति ? केन वा एषः परवानिति शक्यशङ्कः ? सर्वकार्यकारण भूतः भवानेवेति श्रीमन्नारायणस्य परत्वमुच्यते चतुर्दशश्लोके ।

परात्परं त्वां शीलरूपचरितैः परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैः शास्त्रैश्च प्रख्यातदैवपरमार्थविदां मतैश्च आसुरप्रकृतयः बोद्धुं न प्रभवन्त्येवेत्युक्तं पञ्चदश श्लोके।

उल्लङ्घितत्रिविधसीमसमातिशायिसंभावनं तव परिब्रढिमस्वभावं भवता मायाबलेन निगुह्यमानमपि त्वदनन्यभावाः केचित् त्वामनिशं पश्यन्ति इत्युक्तं षोडशश्लोके।

अण्डं यत् अण्डातरमोचरं च यत् दशोत्तराणि आवरणानि च यानि तानि, गुणाः, प्रधानं, पुरुषः परंपदं, परात् परं, ब्रह्म च तव विभूतयः एव इत्युक्तं सप्तदशश्लोके।

वशी, वदान्यः, गुणवान्, ऋजुः, शुचिः मृदुः, दयालुः मधुरः, स्थिरः समः कृती, कृतज्ञः, त्वं स्वभावतः समस्तकल्याणगुणामृतोदधिः असि इति परमात्मनः अनन्तकल्याणगुणाकरत्वमुक्तम् अष्टादशश्लोके ।

वेदाः अब्जभुवः उपर्युपरि पुरुषान् ''ते ये शतम्'' इति अनु क्रमात् त्वदेकैकगुणावधीत्सया सदा स्थिताः अपि उद्यमतः न अतिशेरते इत्युक्तं एकोनविशतिश्लोके।

त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः लीलाः भवन्ति । वैदिकाः विधयश्चत्वदीयगम्भीरमनोऽनुसारिणः भवन्ति इत्युक्तं विंशतितमेश्लोके ।

वाक् मनसातिभूमये नमः । वाक्मनसैकभूमयो नमः । अनन्तमहाविभूतये नमः । अनन्तदयैकसिन्धवे नमः इति उक्तमेकविंशतितमे श्लोके । भगवानेव प्राप्यः शरण्यश्चेति श्लोकस्यास्यभावः ।

अहं धर्मनिष्टः नास्मि । आत्मवेदी च न । त्वत् चरणारविन्दे भक्तिमान् न । हे शरण्य । अकिंचनोऽहं त्वत्पादमूलं शरणं प्रपद्ये इति प्रपत्तिः सूचिता द्वाविंशतितमे श्लोके।

हे मुकुन्द । यत् निन्दितं कर्म मया सहस्रशः न व्यधायि तत् पापकार्यं लोके नास्ति । लोके यत् निन्दितं कर्म तत् मया सहस्रशः न व्यधायि इति न । सोऽहं विपाकावसरे सम्प्रति अगतिः तवाग्रे क्रन्दामि इत्युक्तं त्रयोविंशतितमे श्लोके ।

हे अनन्त । भवार्णवान्तः निमज्जतः मे चिराय कूलमिव लब्धोऽसि । भगवन् । त्वया अपि इदानीं दयायाः अनुत्तमं पात्रं लब्धम् इत्युक्तं चतुर्विंशति तमे श्लोके ।

नाथ । अभूतपूर्वं भावि किं वा मे सहजं सर्वं दुःखं सहे । किं तु त्वदग्रे शरणागतानां पराभवः ते नानुरूपः इति वदन्ति पञ्चक्तं षड्विंशतितमे श्लोके ।

महेश । निरासकस्यापि तव पादपङ्कजं हातुं नोत्साहे । स्तनन्धयः शिशुः रुषा निरस्तोऽपि मातुः चरणौ कृदापि न जिहासति । इत्युक्तं षड्विंशतितमे श्लोके ।

तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा अन्यत्कथमिच्छति ? मकरन्दनिर्भरे अरविन्दे स्थिते सति मधुव्रतः इक्षुरसं न ईक्षते खलु इत्युक्तं सप्तविंशतितमे श्लोके ।

त्वदङ्घ्रिमुद्दिश्य कदापि केनचित् यथा तथा वा अपि सकृत् कृतः अञ्जलिः तदानिमेव अशुभानि अशेषतः मुष्णाति । शुभानि पुष्णाति जातु नही यते इत्युक्तम् अष्टविंशतितमेश्लोके ।

विलासविक्रान्तपरावरालयं नमस्यतार्तिक्षपणे कृतक्षणं मदीयं धनं तव पादपङ्कजं कदानु चक्षुषा साक्षात्करवाणि ? इत्युक्तं त्रिशतितमे श्लोके ।

हे त्रिविक्रमशङ्खरथाङ्गकल्पकध्वजारविन्दाङ्कुशवज्रलाञ्छनम् त्वत् चरणांबुजद्वयं कदा पुनः मदीयमूर्धानं अलङ्करिष्यति ? इति वदन्ति एकत्रिंशतितमे श्लोके ।

विराजमानोज्ज्वलपीतवाससं स्मितातसीसूनसमामलच्छविं निमग्ननाभिं तनुमध्यं उन्नतं विशालवक्षः स्थलशोभिलक्षणं भवन्तं आजानुलम्बिभिः ज्याकिणकर्कशैः प्रियावतंसोत्पलकर्णभूषणश्लथालकाबनधविमर्दशसिभिः शुभैः चतुर्भिः भुजैः जकासतं, भवन्तं, उदग्रपीनांसविलं बिकुण्डलालकावलीबन्धुर-कम्बुकन्धरम् मुखश्रियान्यक्कृतपूर्णनिर्मलामृतं शुबिंबांबुरुहोज्ज्वलश्रिं भवन्तं, प्रबुद्धमुग्धांबुजचारुलोचनं, सविभ्रम-भ्रूलतम्, उज्ज्वलाधरम्, शुचिस्मितं कोमलगण्डम् उन्नसं ललाटपर्यन्तविलम्बिलालकं भवन्तं स्फुरत्किरीटाङ्गदहारकठिकामणीन्द्रकाञ्चीगुणननूपुरादिभिः रथाङ्गशङ्खासिगदाधनुर्वरैः लसत् तुलस्या वनमालया उज्ज्वलं भवन्तं, यस्याः लक्ष्मीदेव्याः भुजान्तरं भवनं चकर्थ, यदीय लक्ष्मीदेव्याः जन्मभूः तव प्रियं धाम समस्तं जगत् यत् अपाङ्गसंश्रयं यदर्थं अंबोधिः अमंधि, अबंधि च तया लक्ष्मीदेव्या सहासीनं भवन्तं सर्वदा प्रहर्षयिष्यामि इति स्तुवन्ति द्वात्रिंशदारभ्य सप्तत्रिंशतिश्लोकपर्यन्तम्।

स्ववैश्वरूप्येण सदानुभूतयापि अपूर्ववत् विस्मयं आद्धानया गुणेन रूपेण विलासचेष्टितैः सदा तवैवोचितया तव श्रिया, सह प्रकृष्टविज्ञानबलैकधामनि फणामणि व्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि फणामणिव्रातमयूखमण्डल प्रकाशमानोदरदिव्यधामनि अनन्तभोगिनि आसीनं भवन्तं, निवासशय्यासन-पादुकांशुकोपधानवर्षातपवारणादिभिः तव शेषतां गतैः शरीरभेदैः यथोचितं शेषः इति जनैः ईर्यते अनन्तभोगिनि श्रियासहासीनं भवन्तं, त्रयीमयः यः विहगोश्वरः ते दासः, सखा, वाहनं, आसनं, ध्वजः, वितानं व्यजनम् अभूत्, त्वदङ्घ्रिसम्मद-किणांकशोभिना तेन गरुत्मता पुरोपस्थितं भवन्तं, त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण प्रियेण सेनाधिपतिना यत् यथा निवेदितं तत् तथा उदारवीक्षणैः अनुजानन्तं भवन्तं, हताखिलक्लेशमलैः स्वभावतः त्वदानुकूल्यैकरसैः तवोचितैः गृहीततत्तत्परिचारसाधनैः सचिवैः यथोचितं निषेव्यमाणं भवन्तं, अपूर्वनानारसभा-विनिर्भरप्रबद्धया क्षणाणुवत् क्षिप्तपरादिकालया मुग्धविदग्धलीलया महिषीं प्रहर्षयन्तं महाभुजं भवन्तं, अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभाव-लावण्यमयामृतोदधिम् श्रियः श्रियं भक्तजनैकजीवितं समर्थम् आपत्सखम् अर्थिकल्पकं भवन्तमेवाहं निरन्तरमनुसरन्, प्रशान्तनिश्शेषमनोरथान्तरः ऐकान्तिकनित्यकिङ्करः सनाथजीवितः कदा भवन्तं प्रहर्षयिष्यामि इति वदन्ति अष्टत्रिंशति श्लोकादारभ्य षट्चत्वारिंशच्छलोकपर्यन्तम्।

हे परमपुरुष ! अशुचिं, अविनीतं, निर्दयं, अलज्जं, मां धिक् । यमहं योगिवर्याग्रगण्यैः विधिशिवसनकाद्यैः ध्यातुं अत्यन्तदूरं तव परिजनभावं कामवृत्तः कामये इति स्वनैच्यानुसन्धानं कुर्वन्ति सप्तचत्वारिंशच्छ्लोके ।

हे हरे । अपराधसहस्रभाजनं, भीमभवार्णवोदरे पतितं अगतिं शरणागतं मां केवलं कृपया आत्मसात् कुरु इति वदन्ति अष्टचत्वारिंशत्तमे श्लोके ।

हे भगवन् ! अच्युत ! अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणी भवदुर्दिने पथःस्खलितं मां अवलोकय । न मृषा । परमार्थमेव । मे एकं विज्ञापनं अग्रतः शृणु । मे न दयिष्यसे यदि ततः, हे नाथ । तव दयनीयः दुर्लभः । ततः अहं त्वदृते न नाथवान् । त्वं चः मत् ऋते दयनीयवान् न । भगवन् । विधिनिर्मितमेतत् अन्वयं पालय । मा स्मजीहपः । वपुरादिषु योऽपि कोऽपि वा गुणतः यथा तथा विधः असानि । तत् अयमहं मया अद्य एव तव पादपद्मयोः समर्पितः इति वदन्ति । एकोनपञ्चाशत् श्लोकादारभ्य द्विपञ्चाशच्छ्लोकपर्यन्तम् ।

हे माधव । नाथ यत् मम अस्ति, अहं यः अस्मि, तत् सकलं तव एव नियतस्वम् इति प्रबुद्धधीः किं समर्पयामि ? इति तप्यन्ते त्रिपञ्चाशत् श्लोके ।

हे भगवन् । मयि नित्यां इमां भवदीयतां यथा स्वयं अवबोधितवान् एवम् अनन्यभोग्यतां भक्तिमपि मे प्रयच्छ इति पृच्छन्ति चतुःपञ्चाशत् श्लोके ।

तव दास्यसुखैकसङ्गिनां भवनेषु कीटजन्मापि मे अस्तु । इतरावसधेषु चतुर्मुखात्मना अपि जन्म मे मा भूत् स्म इति वाञ्छन्ति पञ्चपञ्चाशत्तमे श्लोके ।

सकृत् त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः यद्विरहः ते क्षणे अपि अतिदुस्सहः तादृशैः महात्मभिः मामवलोक्यतां नय इति पृच्छन्ति षट्पञ्चाशत्तमे श्लोके।

हे नाथ । तव शेषत्वविभवात् बहिर्भूतं देहं क्षणमपि न सहे । प्राणान् क्षणमपि न सहे । अशेषाभिलषितं सुखं क्षणमपि न सहे । आत्मानं क्षणमपि न सहे । अन्यत् किमपि पुत्रमित्रकलत्रगृहक्षेत्रादिकं क्षणमपि न सहे । तत् शतधा विनाशं यातु । मधुमधन । इदं विज्ञापनं सत्यम् इति वदन्ति सप्तपञ्चाशत् तमे श्लोके ।

दयासिन्धो ! बन्धो ! निरवधिकवात्सल्यजलधे ! निहीनाचारः नृपशुः अहं दुरन्तस्यानादेः अपरिहरणीयस्य, महतः अशुभस्य आस्पदमपि तव गुणगणं स्मारं स्मारं गतभीः इच्छामि इति वदन्ति अष्टपञ्चाशत् तमे श्लोके ।

हे धरणीधर । एवं यदि अनिच्छन् अपि पुनः रजः तमः छन्नः इच्छन् इव इति छद्मस्तुतिवचनभङ्गीं अरचयम् । तथापि इत्थंरूपं वचनं अवलम्ब्यापि त्वमेव एवं भूतं मे मनः शिक्षय । इति पृच्छन्ति एकोन षष्ठितमेश्लोके ।

हे भगवन् । जगतां त्वं पिता । त्वं माता । त्वं दयिततनयः । त्वमेव प्रियसुहृत् । त्वमेव मित्रम् । गुरुः गतिश्च त्वमेवासि । अहं त्वदीयः । त्वत् भृत्यः । तव परिजनः । त्वत् गतिः, प्रपन्नश्च । एवं सति अहमपि तव एव भरः अस्मि खलु इति वदन्ति षष्ठितमे श्लोके ।

हे शरणद । अहं जगति ख्यातयशसां शुचीनाम् युक्तानां गुणपुरुषतत्त्व-स्थितिविदां निसर्गादेव त्वत् चरणकमलैकान्तमनसां महति वंशे जनित्वा, पापात्मा तमसि अधोऽधः निमज्जामि इति विज्ञापयन्ति एकषष्ठितमे श्लोके ।

अमर्यादः, क्षुद्रः चलमतिः, असूयाप्रसवभूः, कृतघ्नः, दुर्मानी, स्मरपरवशः वञ्चनपरः नृशंसः, पापिष्ठः अहं अपारात् दुःखजलधेः कथमुत्तीर्णः तव चरणयोः परिचरेयम् ? स्वनैच्यानुसन्धानं कुर्वन्ति द्विषठितमे श्लोके ।

रघुवर । त्वं तादृशः वायसस्य प्रणतः इति कारणात् दयालुः अभूः । हे कृष्ण । प्रतिभवं अपराद्धुः चैद्यस्य सायुज्यदः अभूः । हे मुग्ध । तस्य ते क्षमायाः आपदं आगः किमस्ति ? वद । इति पृच्छन्ति (स्तुवन्ति) त्रिषष्ठितमेश्लोके ।

हे नाथ । तव अहमस्मि इति च सकृदेव याचमानः प्रपन्नः प्रतिज्ञां स्मरतः, तव अनुकम्प्यः खलु । इदं ते व्रतं मत् एकवर्जं किम् ? इति पृच्छन्ति चतुःषष्ठितमे श्लोके । अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिम् आत्मवन्तं पितामहं नाथमुनिं विलोक्य, मद्वृत्तम् अचिन्तयित्वा प्रसीद इति प्रार्थयन्तः पञ्चषष्ठितमेन श्लोकेन स्तोत्ररत्नं समापयन्ति यामुनाचार्याः ।

*यत्पादाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।*
*वस्तुतामुपयातोऽहं यामुनेयं नमाम्यहम् ॥*

**चतुःश्लोकी (कन्तास्तोत्रम्)**

अस्मिन् स्तोत्रे श्लोकचतुष्टये लक्ष्मीदेव्याः महिमा विशदीकृता । स्वशेषाशेषार्धौ निरवधिकनिर्बाधमहिमा, फलानां दाता, फलमपि चेति शारीरकशास्त्राध्यायचतुष्टयेन प्रतिपाद्यमानस्य परमात्मनः नित्यानपायिनी, सध्रीचीं

तदुपसदनत्रासशमनीं लक्ष्मीं अवितथमतिः यामुनमुनिः स्तुत्यामभिष्ठौतीति **वेदान्त**देशिकैः उक्तम् ।

प्रथमश्लोके एवं स्तुवन्ति - हे भगवति । ते कान्तः पुरुषोत्तमः । शय्या, आसनं फणिपतिः, वाहनं वेदात्मा विहगेश्वरः, यवनिका जगन्मोहहिनी माया, त्वत् दासदासीगणः सदयितः ब्रह्मेशादिसुरव्रजः । ते नाम श्री इत्येव च । त्वां वयं कथं ब्रूमः ? इति ।

द्वितीयश्लोके एवं स्तुवन्ति - स्वतः नित्यानुकूलं, निरवधिं, आत्मनः महिमानम् इव यस्यास्ते महिमानं प्रभुः त्वद्वल्लभोऽपि इयत्तया मातुं नालं, तां त्वां दास इति प्रपन्न इति च निर्भयः अहं हे लोकैकेश्वरि । हे लोकनाथदयिते । दान्ते ते दयां विदन् स्तोष्यामि इति ।

तृतीयश्लोके एवं वदन्ति - त्रिभुवनम् ईषत् त्वत् करुणानिरीक्षणसुधा-सन्धुक्षणात् रक्ष्यते । प्राक् तदलाभतः नष्टं सम्प्रति अनन्तोदयं नृणां कर्हिचित् अरविन्दलोचनमनः कान्ताप्रसादादृते संसृति अक्षरवैष्णवाध्वसु श्रेयः न संभाव्यते खलु इति ।

चतुर्थश्लोके एवमुच्यते - शान्तानन्तमहाविभूतिपरमं ब्रह्मा यत् रूपं हरेः मूर्तं ब्रह्म, ततोऽपि तत् प्रियतरम् अत्यद्भुतं रूपं यानि अन्यानि यथासुखं विहरतः रूपाणि तानि सर्वाणि ते स्वैः अनुरूपरूपविभवैः गाढोपगूढानि आहुः इति ।

**गीतार्थसङ्ग्रहः**

*तत्त्वहितपुरुषार्थाः आध्यात्मशास्त्रसाराः ।*
*तत्त्वजिज्ञासमानानां हेतुभिस्सर्वतोमुखैः ॥*
*तत्त्वमेको महायोगी हरिर्नारायणः परः ॥* इति परतत्वम्,

*आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।*
*इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥*

इति परमहितं, मोक्ष एव परमपुरुषार्थ इति च महर्षिभिः सङ्गृहितः । सकलोपनिषत्सारभूता भगवद्गीताऽपि तदेव प्रतिपादयति । भगवद्गीतायाः तत्त्वं सर्वं सङ्ग्रहेण द्वात्रिंशतिश्लोकेषु गीतार्थसङ्ग्रहनाम्ना यामुनाचार्यैः उक्तः । तेषां श्लोकानां तात्पर्यमत्रोच्यते ।

स्वधर्मज्ञानवैराग्यसाध्यभक्त्यैकगोचरः परं ब्रह्म नारायणः गीताशास्त्रे समीरितः। योगलक्ष्ये सुसंस्कृते ज्ञानकर्मात्मिके निष्ठे आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते । मध्यमषट्के भगवत्तत्त्वयाथात्म्याव्याप्तिसिद्धये ज्ञानकर्माभिनिर्वर्त्यः भक्तियोगः प्रकीर्तितः । प्रधानपुरुषव्यक्तसर्वेश्वरविचिन्तनं कर्मयोगः, ज्ञानयोगः, भक्तियोगः इत्यादिपूर्वशेषः अन्तिमषट्के उदितः ।

अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलं प्रपन्नं पार्थमुद्दिश्य शास्त्रावतरणं कृतम्। एवम् आत्मयाथात्म्यं युद्धाख्यस्य च कर्मणः तत्प्राप्तिसाधनं तामजानतः, शरीरात्मज्ञानेन मोहितस्य, तेन च मोहेन युद्धात् निवृत्तस्य मोहशान्तये नित्यात्मविषया सांख्यबुद्धिः तत्पूर्विका च असङ्गकर्मानुष्ठानरूपकर्मयोगविषया बुद्धिः स्थितप्रज्ञतायोगसाधनभूता द्वितीये अध्याये प्रोक्ता । लोकरक्षायै असक्त्या कर्तृतां गुणेषु आरोप्य, सर्वेश्वरे न्यस्य वा कर्मकार्यता तृतीये अध्याये उक्ता । प्रकृतिसंसृष्टस्य मुमुक्षोः सहसा ज्ञानयोगे अनधिकारात् कर्मयोग एव कार्यः, ज्ञानयोगाधिकारिणोऽपि अकर्तृत्वानुसन्धानपूर्वककर्मयोग एव श्रेयानिति सहेतुकमुक्तम् । प्रकृतिविविक्तात्मस्वरूपनिरूपणेन, गुणेषु कर्तृत्वमारोप्य कर्मानुष्ठानप्रकारः उक्तः । तथा आत्मनां परमपुरुषशरीरतया तन्नियाम्यत्वस्वरूपनिरूपणेन भगवति पुरुषोत्तमे सर्वात्मभूते गुणकृतं च कर्तृत्वमारोप्य कर्मकर्तव्यता ।

प्रसङ्गात् स्वस्वभावोक्तिः अस्य च कर्मणः अकर्मताभेदाः ज्ञानस्य माहात्म्यं चतुर्थाध्याये उच्यते । कर्मयोगस्य सौकर्यं शैघ्र्यं काश्चन तद्विधाः ब्रह्मज्ञानप्रकारश्च पञ्चमाध्याये उच्यते । उक्तः कर्मयोगः सपरिकरः । इदानीं ज्ञानयोगकर्मयोग-साध्यात्मावलोकनरूपयोगाभ्यासविधिः उच्यते । तत्र कर्मयोगस्य निरपेक्षसाधनत्वं द्रढयितुं ज्ञानाकारः कर्मयोगः योगशिरस्कः अनूद्यते षष्ठे अध्याये । स्वयाथात्म्यं प्रकृत्या अस्य तिरोधिः, शरणागतिः, भक्तिभेदः, प्रबुद्धस्य श्रैष्ठ्यं सप्तमे अध्याये उच्यते । ऐश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनाम् वेद्योपादेयभावानां भेदः अष्टमे आध्याये उच्यते । उपास्यस्य परमपुरुषस्य माहात्म्यम्, ज्ञानिनां च विशेषं विशोध्य भक्तिरूपोपासनस्य स्वरूपमुच्यते नवमे अध्याये । भक्त्युत्पत्तये तद्विवृद्धये च भगवतः निरङ्कुशैश्वर्यादिकल्याणगुणगणानन्त्यं, कृत्स्नस्य जगतः तच्छरीरतया तदात्मकत्वेन तत्प्रवर्त्यत्वञ्च प्रपञ्च्यते दशमे अध्याये । भक्तियोगनिष्ठानां परमप्राप्यभूतस्य नारायणस्य निरङ्कुशैश्वर्यं साक्षात्कर्तुकामाय अर्जुनाय स्वैश्वर्यं यथावदवस्थितं दर्शितम् । यथा विधिप्राप्त्योः भक्त्यैकोपायता एकादशे अध्याये उक्ता । भक्तेः शैघ्र्यं,

उपायोक्तिः, अशक्तस्य आत्मनिष्ठता, भक्ते तु अतिप्रीतिः द्वादशे अध्याये उच्यते। देहस्वरूपम्, आत्मप्राप्तिहेतुः, आत्मविशोधनं, बन्धहेतुः, विवेकश्च त्रयोदशे अध्याये उदीर्यते। गुणबन्धविधाः, तेषां कर्तृत्वं, तन्निवर्तनं, गतित्रयस्वमूलत्वं चतुर्दशे अध्याये उच्यते। चतुर्दशे गुणसङ्गप्रकारं सविस्तरं प्रतिपाद्य, गुणसङ्गनिवृत्तिपूर्वकात्मयाथात्म्यावाप्तिश्च भगवद्भक्तिमूलेत्युक्तम्। पञ्चदशे अध्याये भजनीयस्य भगवतः क्षराक्षरात्मकबद्धमुक्तोभयविभूतिमत्तां भगवतः पुरुषोत्तमत्वञ्च वक्तुमारभते। अचिन्मिश्रात् चेतनात्, विशुद्धात् चेतनात् च पुरुषोत्तमः व्यापानात् भरणात् स्वाम्यात् अन्यः इति पञ्चदशोदितः। देवासुरविभागोक्तिपूर्विका शास्त्रावश्यता तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडशे अध्याये उच्यते। देवासुरविभागोक्तिमुखेन प्राप्यतत्त्वज्ञानं तत्प्राप्त्युपायज्ञानञ्च वेदैकमूलमित्युक्तम्। अशास्त्रविहितस्य आसुरत्वेनाफलत्वं, शास्त्रविहितस्य च गुणतस्त्रैविध्यं शास्त्रसिद्धस्य ओं तत् सत् इति निर्देशस्वरूपं लक्षणञ्चोच्यते सप्तदशे अध्याये। ईश्वरे कर्तृताबुद्धिः, सत्त्वोपादेयता, स्वकर्मपरिणामश्च शास्त्रसारार्थः अन्तिमे अष्टादशाध्याये प्रतिपाद्यन्ते।

तपः, तीर्थदानयज्ञादिसेवनं कर्मयोगः। जितस्वान्तैः परिशुद्धात्मनि स्थितिः ज्ञानयोगः। परैकान्तप्रीत्या ध्यानादिषु स्थितिः भक्तियोगः। त्रयाणां कर्मयोग-ज्ञानयोग-भक्तियोगानामपि त्रिभिः भक्तिज्ञानकर्मभिः अन्योन्यसङ्गमः अस्ति। एकैकस्मिन्नपि योगे कर्मज्ञानभक्तिरूपांशत्रयमसिस्त। पराराधनरूपिणां नित्यनैमित्तिकानां च त्रिभिः अन्योन्यसङ्गमः अस्ति। भगवति महनीये प्रीतिरूपभक्तेः शास्त्रमूलतत्त्वज्ञानस्य नित्यकर्मानुष्ठानस्य च सर्वत्रापेक्षितत्वात्। विविकिक्रियमाणे नित्यनैमित्तिकानुष्ठानेऽपि उक्तभगवत्प्रीति तत्त्वज्ञानघटनात् अंशत्रयं निविष्टमेव। एते त्रयः अपि चित्तसमाधिरूपयोगद्वारेण आत्मदृष्टेः साधकाः भवन्ति। निरस्तनिखिलाज्ञानः परानुगमात्मानं दृष्ट्वा, परां भक्तिं प्रतिलभ्य, तया एव तत् पदमवाप्नोति।

भक्तियोगः तदर्थी चेत् समग्रैश्वर्यसाधनं भवति। आत्मार्थी चेत् त्रयः अपि तत्कैवल्यस्य साधकाः भवन्ति। एषां अधिकारिणां कर्मज्ञानभक्तियोगानां भगवति ऐकान्त्यं समानं भवति। यावत् प्राप्तिपरार्थीत् आनन्त्यं तत् भगवत्पदमेव अश्नुते। ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः, तत्संयोगवियोगैकसुखदुःखः तदेकधीः भवति। भगवद्ध्यानयोगोक्ति, वन्दन, स्तुति, कीर्तनैः लब्धामा, तद्गतप्राणमनोबुद्धीन्द्रियः क्रियः भवति। प्रीत्या कारितः इव निजकर्मादि भक्त्यन्तं कुर्यात्। उपायतां परित्यज्य,

अभीः तां तु देवे न्यसेत् । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज इत्यस्य उपायतां परित्यज्य न्यस्येत् देवे तु तामभीः इति विवरणम् । कर्तृत्वममताफलत्यागवत् क्रियमाणे धर्मे उपायत्व त्यागोऽपि ग्राह्यः । तर्हि त्यागः त्रिविध इति कथमिति चेत् - कर्तुरिव सर्वेषामपि कारकाणां स्वस्वव्यापारकर्तृत्वात् करणत्वादेरपि कर्तृत्वान्तर्भावात् । ब्रह्मर्पणमिति श्लोकोक्तरीत्या सर्वस्य भगवदतिरिक्तगतधर्मस्य भगवदधीनत्वात् तस्मिन्नेव सर्वार्पणमिति तत्त्वम् । ऐकान्तात्यन्तदास्यै करतिः तत्पदमाप्नुयात् । इदं गीताशास्त्रं तत्प्रांधानमिति गीतार्थसङ्ग्रहः भवति ।

**सिद्धित्रयम्**

अस्मिन् ग्रन्थे प्रकरणत्रयमस्ति । तत्र प्रथमम् आत्मसिद्धिः द्वितीयम् ईश्वरसिद्धिः, तृतीयं तु संवित्सिद्धः । संवित्सिद्धस्तु सम्पूर्णं नोपलभ्यते । तत्र तावत् आत्मसिद्धौ पूर्वनिर्दिष्टप्रतिपक्षिपक्षजातं प्रतिक्षेपपूर्वकम् आत्मतत्त्वं निरणायि, वेदशास्त्रानुसारिसत्तकैः सच्छास्त्रसंमतं देहादिविलक्षणम् अजडं, नित्यज्ञानानन्दगुणकं, परब्रह्मगुणानुभवदास्यैकरसं परब्रह्मशेषभूतम् उपासनादिप्रीतभगवत्प्रसादाधीनम् उक्तिकं च । ईश्वरसिद्धौ च निरीश्वरवादिनां कर्मजडानाम् ईश्वरसाधकप्रमाणदूषणानि अपाकृत्य, त्रय्यन्तप्रमाणानुग्राहकैः तर्कैः सर्वेश्वरः प्रसाधितः । संवित्सिद्धौ च प्रमेयतत्त्वव्यवस्थापकप्रमितिरूपं संवित्तत्त्वं विशोधितं मातृमेयमितीनां परमार्थतः स्वरूपभेदव्यवस्थापनमुखेन ।

क्व पुनर्विषयग्राहकं जीवात्मनां धर्मभूतं ज्ञानं सङ्कोचविकासार्हम्, क्व पुनरौपनिषदं परं तत्त्वं सच्चिदानन्दरूपम् अनघानन्तशुभगुणसागरम् अनन्तमहाविभूति अप्राकृतस्वासाधारणदिव्यरूपं श्रीमत् पुरुषोत्तमाख्यं परं ब्रह्म । तदेव परमं तत्त्वं, प्रमाणज्ञानं भवति अन्तःकरणवृत्त्यवच्छिन्नम्, अन्तःकरणावच्छिन्नं च ज्ञातृरातपम् इत्याद्या मायिनां कल्पना, सहोपलम्भनियमादभेदो ज्ञेयज्ञात्रोः ज्ञानत इति प्रकटसौगतकल्पना च निरस्ते विस्तरेणात्र ।

चिदचितोः शरीरतया परब्रह्मापृथकिसद्धप्रकारत्वोपपादनपूर्वकं चिदचिद्विशिष्टस्य ब्रह्मणः समाभ्यधिकराहित्यरूपम् अद्वितीयत्वम् अद्वितीयश्रुत्यर्थ इति व्यवस्थापनाच्चविशिष्टाद्वैतसिद्धान्तः अत्र सुप्रतिष्ठापितः केवलाद्वैतादिपक्षप्रतिक्षेपेणेति संक्षेपः ।

आत्मसिद्धौ उपोद्घातप्रकरणानन्तरं, देहात्मत्वपूर्वपक्षः, देहात्मवादनिरासः,

इन्द्रियात्मत्वपूर्वपक्षः, इन्द्रियात्मवादनिरासः मन आत्मत्वपूर्वपक्षः मनआत्मवाद-खण्डनं, प्रासङ्गिकमनस्तत्त्वविमर्शः प्राणात्मत्वपूर्वपक्षः, प्राणात्मवादनिरासः, संविदात्मत्वपक्षोपस्थापनं, संविदनुमेयत्वपक्षेण तदजडत्वाक्षेपः, संविदनुमेयत्वनिरासः संविदः स्वयंप्रकाशत्वात्मत्वसाधनं, संविदात्मत्वपूर्वपक्षः, क्षणिकविज्ञानात्मवादनिरासः, निर्विशेषनित्यविज्ञानात्मत्वमतोपपादनं, मायावाद्यभिमतनित्यविज्ञानात्मत्वनिरासः ज्ञातुः अहमर्थस्य प्रत्यगात्मत्वनिरूपणम्, अहङ्कारस्य ज्ञातृत्वतत्प्रतीत्यनुपपत्तिनिरूपणम्, अहङ्कारस्य संविदभिव्यञ्जकत्व-पूर्वपक्षोपपादनम्, अहङ्कारस्य संविदभिव्यञ्जकत्वनिराकरणं, स्वापे अहमर्थभावसमर्थनं, ज्ञातुः आत्मनः मुक्त्यादौ सर्वदाप्यहं भावभानसमर्थनं, ज्ञानात्मत्वसाधकाजडत्वदूषणं, सौगताभिमतग्रह्यग्राहकविकल्पप्रत्युद्धारनिराकरणम्, अद्वैत्यभिमतग्राह्यग्राहकविकल्पप्रत्युद्धारनिराकरणं, देहादिविलक्षणप्रत्यगात्म-स्वरूपनिरूपणं, विलक्षणात्मनः आनुमानिकत्वपक्षनिरूपणं, नैयायिकाभि-मतात्मानुमाननिरासः, साङ्ख्याभिमतात्मनुमाननिरसनं, विलक्षणात्मनः शास्त्रैकप्रमाणकत्वपक्षनिरूपणम् आत्मनः प्रत्यक्षत्वपक्षोपक्षेपः, आत्मनः अप्रत्यक्षत्वशङ्का, भाट्टमुखेन आत्मनः मानसप्रत्यक्षत्वानुमानोपक्षेपः, गुरुमुखेन आत्मनः मानसप्रत्यक्षत्वानुमानदूषणम्, आत्मनः ग्राह्यग्राहकभावे विरोधोद्भावनं प्राभाकरमते भाट्टस्यापि प्रत्यवस्थानं, प्राभाकरीयं स्वपक्षसाधनं, भाट्टेन प्राभाकरमतदूषणं, पुनः प्राभाकरेण स्वमतस्थापनं, विषयवित्तिकालेषु एव आत्मनः भानमिति गुरुमतोपपादनं, सिद्धान्तिना गुरुमतखण्डनं, सिद्धान्तिना आत्मनः स्वप्रकाशत्वसमर्थनं, आत्मधर्मभूतज्ञानस्य नित्यत्वोपक्षेपः, धर्मभूतज्ञानस्य अनित्यत्वमतोपस्थापनं, ज्ञाननित्यत्वपक्षे ज्ञानार्थसन्निकर्षानुपपत्तिनिरूपणं, ज्ञानस्य आत्मविरलप्रदेशत्वमतदूषणं, नित्यसर्वगतज्ञानवादात्मवादनिरासः, ज्ञानस्य अनित्यत्वपूर्वपक्षः धर्मभूत ज्ञानस्य नित्यत्वसाधनं, ज्ञानस्य आत्मस्वभावत्वप्रतिष्ठापनं, ज्ञाननित्यत्वे प्रसक्ताक्षेपाणां परिहरणं, निद्रायाः वृत्तिरूपत्वनिषेधनम्, आत्मनः ज्ञानस्वभावस्य नित्यस्वप्रकाशत्वसमर्थनं, ज्ञानाश्रयत्वविषयत्वयोः प्रकाशमानत्वरूपत्वे दोषानुकीर्तनं, भाट्टप्रभाकराभिमतप्रकाशपदार्थेऽपि अनुपपत्तिवर्णनं, ज्ञानस्यार्थेन सन्निकर्षोपपादनम्, आत्मधर्मज्ञानस्य अन्यत्र सन्बन्धोपपादनं, शब्दस्य वायवीयत्वसमर्थनं, पुनः प्राभाकरमतविवरणं, प्राभाकरमते पुनरपि दोषोद्भावनं,

संविददूरत्वप्रयुक्तव्यवहारानुगुण्यस्य प्रकाशपदार्थतोपसंहारः, धर्मभूतज्ञाननित्यत्वस्य श्रुत्यादिभिः प्रतिष्ठापनं, धर्मभूतज्ञानस्य संशयाद्यवान्तरभेदोपपादनम्, आत्मप्रमाणनिरूपणम् इत्यादयः विषयाः उक्ताः । एतावानेव आत्मसिद्धि ग्रन्थभागः उपलभ्यते ।

ईश्वरसिद्धौ ईश्वरे प्रत्यक्षप्रमाणनिरसनम्, ईश्वरे अनुमानस्य प्रामाण्यासंभवोपक्षेपः, ईश्वरे सामान्यतः दृष्टानुमानस्य प्रमाणताप्रतिपादनम्, एकचेतनाधीनत्वानुमानदूषणं, मह्यादिसकर्तृकत्वानुमानस्य सिद्धसाधनत्वापादनं, कार्यत्वहेतोः स्वरूपासिद्धिसाधनं, कार्यत्वहेतोः विरुद्धताप्रतिपादनम्, ईश्वरस्य जगत्कर्तृत्वानुपपत्त्युपपादनम्, उपादानाद्यभिज्ञपूर्वकत्वे, कार्यत्वस्य अनैकान्त्यप्रकटनं, मीमांसकैः ईश्वरसाधकसकर्तृकत्वानुमाने दूषणोद्भावनं, क्षित्यादौ सकर्तृकत्वसाधककार्यत्वहेतोः असिद्धि परिहारः, सकर्तृकत्वानुमाने व्यभिचारसिद्धसाधनदूषणयोः उद्धारः विरुद्धत्वदोषपरिहरणम्, ईश्वरे सामान्यतः दृष्टानुमानस्य प्रामाण्यव्यवस्थापनम् इत्यादयः विषयाः उक्ताः । एतावानेव ईश्वरसिद्धिभागः उपलभ्यते ।

संवित्सिद्धौ अद्वितीयश्रुतेः पराभितार्थे दुषणनिरूपणं, प्रपञ्चस्य ब्रह्मविभूतित्वस्थापनपूर्वकम् अद्वितीयश्रुत्यर्थवर्णनं, प्रपञ्चस्य सत्वपक्षसमर्थनं, तत्त्वमसि वाक्यस्य पराभिमतब्रह्मात्मैक्यपरत्वे अनुपपत्त्युपपादनं, परमते सामानाधिकरण्यार्थायोगवर्णनं, परकीयसंविदेकत्वव्यवस्थापनानुवादः संविदैक्यमतदूषणेन संविन्नानात्वोपपादनम्, अविद्यायाः स्वरूपनिर्वचनीयत्वानुपपत्तिवर्णनम्, अविद्यायाः आश्रयानुपपत्तिनिरूपणम्, अविद्यायाः एकानेकत्वविकल्प एकाविद्यापक्षदूषणं च, एकाविद्याकल्पितैकजीववादानुवादः, एकजीववादः एकविद्याकल्पितैकजीववादनिरासः, नानाविद्याकल्पितनानाजीववादनिरासः, सविशेषत्वोपपादनेन संविदः निर्विशेषत्वनिरसनं, प्रपञ्चस्य सदसद्व्यतिरेकित्वरूपमिथ्यात्वनिरसनं, सदद्वैतनिरासेन भेदप्रपञ्चस्य पारमार्थिकत्वसमर्थनं, चिदद्वैतनिरासेन मितिमातृमेय भिदायाथार्थ्यसमर्थनम् इत्यादयः विषयाः उक्ताः । एतावानेव संवित्सिद्धिभागः उपलभ्यते ।

**आगमप्रामाण्यम्**

भगवन्नारायणमुखोद्गीतस्य सर्ववेदरहस्यार्थरूपस्य श्रीपाञ्चरात्रतन्त्रस्य

बाललीलायितं निराकरणसमुद्यमं चावलोक्य यामुनाचार्याः श्रीपाञ्चरात्रतन्त्र-प्रामाण्यव्यवस्थापनपरम् आगमप्रामाण्यं निबबन्धुः । तत्रादौ पाञ्चरात्रागमप्रामाण्ये महापूर्वपक्षः । तत्र पाञ्चरात्रप्रामाण्याभ्युपगन्तृणामब्राह्मण्यनिरूपणं भागवतानाम् अब्राह्मण्यनिरूपणं, वृत्त्यर्थं देवेशपूजनादिनिषेधः । वेदसाम्येन पाञ्चरात्रतन्त्र-प्रामाण्यनिरूपणं, पृथिव्यादीनां विचित्रसंनिवेशत्वादिना कार्यत्वानुमानं, वेदपाञ्च-रात्रयोः साम्येन प्रामाण्यनिरूपणं, पाञ्चरात्रतन्त्रवत् पाशुपततन्त्रप्रामाण्यशङ्कनं समाधिश्च, जीवोत्पत्तिप्रतिपादकपञ्चरात्रशास्त्राप्रामाण्यनिरूपणम्, अनुमानादिकं पुरस्कृत्य पञ्चरात्रप्रामाण्यसमर्थनं, नारायणप्रणीतत्वेन पञ्चरात्रतन्त्रप्रामाण्य-व्यवस्थापनं, तन्त्रान्तराणां पञ्चरात्रप्रामाण्यन्यायेन प्रामाण्यसमर्थनासम्भवः पाशुपतप्रक्रियोपपादनं, पञ्चरात्रतन्त्रे आपाततः वेदनिन्दादर्शनेन अप्रामाण्यसमर्थनासम्भवः पाशुपतप्रक्रियोपपादनं, पञ्चरात्रतन्त्रे आपाततः वेदनिन्दादर्शनेन अप्रामाण्यमाशङ्क्य तत्परिहारः, पाञ्चरात्रिकदीक्षातत्त्वप्रदर्शनम् उत्पत्त्यसंभवचतुस्सूत्र्युपरोधतन्निरासप्रदर्शनं वेदपाञ्चरात्रशास्त्रयोः स्वतः प्रामाण्यनिरूपणं, गोत्रद्यसाधारण धर्मज्ञाननिबन्धब्राह्मण्यनिरूपणं, ब्राह्मण्यादेः सहकारिसमवधाने आक्षिकत्वनिरूपणं, भागवतानां वैश्यव्रात्यान्वयज-निशङ्कापरिहारः, वृत्त्या व्रात्यत्वशङ्कासमाधिः, सात्वतभागवतशब्दार्थनिरूपणं, वृत्त्यर्थदेवपूजनप्रयुक्तदौर्ब्राह्मण्यशङ्कासमाधिः देवलकादिशब्दार्थनिरूपणं, निर्माल्यशब्दार्थनिरूपणपुरस्सरं तद्भक्ष्यत्वाभक्ष्यत्वव्यवस्थापनं, भागवतानामेव भगवन्निवेदितवस्तूपयोगो धर्म्यो नेतरेषां, देवतान्तरनिर्माल्योपयोगनिषेधः । भगवन्निषेधः, भोज्याभोज्यत्वस्थाशास्त्रैकसमधिगम्या, शाखाभेदेन कर्मानुष्ठान वैचित्र्यवर्णनं, द्विजानां गायत्रीग्रहणनित्यत्वं, त्यागे व्रात्यत्वं भागवतानां तद्ग्रहणनैयत्यं, त्यागे व्रात्यत्वं भागवतानां तद्ग्रहणनैयत्यं, श्रीनाथमुनीनां महिमवर्णनपुरस्सरं तच्छिष्यानां परपक्षक्षपणपर्याप्तत्वादिनिरूपणम् इत्यादयः विषयाः उक्ताः ।

**यादवप्रकाशः**

काञ्चीपुर्यां रामानुजाचार्याणां गुरवः एते प्रथमं रामानुजाचार्यैः विभिद्य अनन्तर तेषां महत्वं ज्ञात्वा, वैष्णवं स्वीकृत्य गोविन्दजीयर् नाम्ना सुप्रसिद्धः । एतैः विज्ञानस्तुतिः इति ग्रन्थः विरचितः ।

***मारनेर्नम्बि***

*मिथुने सार्पभे जातं यामुनार्यपदाश्रयम् ।*
*मारनेरम्बिनामानं वन्दे ज्ञानादिसागरम् ॥*

**श्रीरङ्गमहापूर्णाः**

*कमलापतिकल्याणगुणामृतानिषेवया ।*
*पूर्णकामाय सततं पूर्णाय महते नमः ।।*

**तिरुक्कच्चिनम्बि -**

*कुम्भेमृगशिरोद्भूतं यामुनार्यपदाश्रयम् ।*
*देवराजदयापात्रं श्री काञ्चीपूर्णमाश्रये ।।*

एतेषामवतारस्थलं काञ्चीपुरम् । काञ्चीपूर्णाः इति नामान्तरमस्ति । यावज्जीवपर्यन्तं श्रीवरदराजस्वामिनां कैङ्कर्यं कृतवन्तः। भगवदन्तरङ्गानामेतेषां रामानुजाचार्याणं विषये अतीव प्रेमा आसीत् । रामानुजाचार्याणाम् आचार्यैः एतैः देवराजाष्टकम् इति स्तोत्रं विरचितम् ।

**तिरुवरङ्गप्पेरुमालरयरूत-**

*श्रीराममिश्रपदपङ्कजचञ्चरीक श्रीयामुनार्यवरपुत्रमहागुणाढ्यम् ।*
*श्रीरङ्गराजकरुणापरिणामदत्तम् श्रीभाष्याकांरशरणं वररङ्गमीडे ।।*

**तिरुमलनम्बि (अथवा) श्रीशैलपूर्णाः -**

यामुनाचार्याणां सन्निधौ उभयवेदान्ताध्ययनं कृत्वा तिरुमलक्षेत्रे आचार्याणामाज्ञानुसारेण तीर्थकैङ्कर्यादिसद्वृत्तेः नियुक्ताः श्रीशैलपूर्णाः । एतेषां भगिन्यौ कान्तिमती, द्युतिमती च । श्रीपेरुम्बुदूरुवासिनः आसूरि केशवाचार्याः कान्तिमत्याः पतिः । एतयोः पुत्र एव आदिशेषांशसम्भूताः भगवद्रामानुजाचार्याः । द्युतिमत्याः पतिः मधुरमङ्गलवासिनः कमलनयनभट्टाः । एतयोः पुत्र एव गोविन्तभट्टर् ।शैवतमतस्वीकरणेन श्रीकालहस्तिक्षैत्रे स्थितं गोविन्दभट्टं तिरुमलनम्बि एव पुनः वैष्णवरुपेण परिवर्तनं कृतवन्तः । भगवद्रामानुजाचाय्रणां पञ्चाचार्येषु मुख्यतमाः एते श्रीरामायणबोधकाः । तिरुमलैवंशस्य मूलपुरुषाः तिरुमलनम्बिवर्याः ।

**पेरियनम्बि**

एतेषां जन्मस्थानं श्रीरङ्गम् । बृहच्चरणकुले सम्भूतानामेतेषां महापूर्णाः इति श्रीपराङ्कुशदासाः इति, पूर्णाचार्याः इति च नामान्तराणि सन्ति । एतेषां पुत्रः पुण्डरीकाक्षः । पुत्री अत्तुलायम्मा । यामुनाचार्याणां शिष्यभूताः एते रामानुजाचार्याणां

पञ्चसंस्कारान् कृत्वा द्वयमन्त्रार्थमुपदिष्टवन्तः। सतीर्थानां मारन्नेरंबिवर्याणां ब्रह्ममेधसंस्कारं कृतवन्तः महापूर्णाः। एतैः कृतः ग्रन्थः तिरुप्पतिकोवै इति अद्य नोपलभ्यते।

### तिरुक्कोट्टियूर्नम्बि

एतेषां जन्मस्थानं तिरुक्कोट्टियूर्। यामुनाचार्याणां शिष्यभूतानामेतेषां गोष्ठीपूर्णाः इति नामान्तरमस्ति। एतेषां पुत्रः तेर्काल्वान्। पुत्री देवकी। रामानुजाचार्याः अष्टादशवारमेतेषां सन्निधिमागत्यानन्तरं तिरुमन्त्रचरमश्लोकार्थ-विशेषान् अधीतवन्तः। गोष्ठीपूर्णेभ्यः तिरुमन्त्रार्थं श्रुत्वैव रामानुजाचार्याः आलयगोपुरमधिरुह्य उच्चैः सर्वेषामपि उपदिदेश। अनन्तनरकदमिदं कार्यं किमर्थं त्वया कृतमिति गोष्ठीपूर्णानां प्रश्नस्य रामानुजाचार्याः उत्तरमेवं दत्तवन्तः मन्त्रोच्चारणेन, स्मरणेन, मननेन च एकोऽहमेव पवित्रो भूत्वा दिवं गमिष्यामि। सर्वैः ज्ञातं चेत्, सर्वेऽपि दिवं गमिष्यन्ति। केवलं ममैकस्यैव खलु नरकप्राप्तिः इति। तच्छ्रुत्वा गोष्ठीपूर्णाः अतीव सन्तुष्टाः रामानुजाचार्याणाम् एम्बेरुमानार् इति नामान्तरं दत्तवन्तः।

### तिरुमलैयाण्डान्

यामुनाचार्याणां शिष्यभूताः एते रामानुजाचार्याणां तिरुवायिमोलितत्त्वार्थान् उपदिष्टवन्तः। गोष्ठीपूर्णानां सहवासिनामेतेषां मालाधरर्, ज्ञानपूर्णर्, कुमारर्, इति नामान्तराणि सन्ति।

### उपसंहार

यामुनाचार्याणामनन्तरं तेषां शिष्याणां द्वारा उपदेशमवाप्य, श्रीरङ्गपीठस्याधिपत्यं स्वीकृत्य रामानुजाचार्याः भारतदेशे ७४ पीठानि संस्थाप्य, तेषां पीठानां शिष्यान् आधिपत्येन नियम्य, विशिष्टाद्वैतविस्तरणं कृतवन्तः। अतः विशिष्टाद्वैतवाङ्मयचरिते प्रथमं प्राक्रामानुजीयम् यामुनाचार्याणां शिष्यैः परिसमाप्यते।



